❀ श्री १०८ निकुञ्जविहारी विजयतेतराम् ❀

श्रीमते महामुनीन्द्राय निम्बार्काय नमः ।

# आत्म-परमात्म तत्त्वादर्शः

पूज्यपादभगवदवतार निवृत्तिपथप्रवर्तक श्री सनन्द-
नादिप्रवर्त्तितानादिवैदिकसत्सम्प्रदायानुगताशेषरसि-
कचक्रचूडामणिश्री १०८स्वामिहरिदासपादपद्माश्रिताश्रित
श्री ६ स्वामिनीशरणपादपद्मचञ्चरीकेणश्रीवृन्दावनवास्त-
व्येन कुरुक्षेत्रान्तर्गत पुण्डरीकग्रामलब्धज-
निना गौडवंशावतंसश्रीशालग्रामोपा-
ध्यायात्मजेन तर्कोभयमीमांसापारावारी-
णेन श्री ६ सुदर्शनाचार्यशास्त्रिप्रभृतितो
लब्धविद्येन श्रीवृन्दावनवास्त-
व्येन तर्कतीर्थतर्करत्नतर्कवा-
गीशामोलकरामशास्त्रिणा ।

सम्पादितः

सच वृन्दावनस्थ—
...द निम्बार्क महा-सभा सभासद्महाशयैर्मथुरास्थ
'हरीहर' प्रेसाख्ये मुद्रणालये मुद्राप्य
प्राकाश्यं नीतः ।

...र } विक्रम सम्वत् १९९१ । { मूल्य प्रेम

...ाण
...रसुखसाध
च पुरुषार्थे प्र
इष्टसाधनताज्ञा
तत्रेष्टसाधनता
स्वभावो वस्तुध
स्वतन्त्रमेव । प
जगदुत्पत्तिस्थि
नकुतूहलिना

❀ श्रीनिकुञ्जविहारिणेनमः ❀



# उपोद्घातः

एतद्ग्रन्थप्रतिपाद्यविषयद्रष्टृणाम्पुंसां सौकर्य्यप्रतिपत्तये प्रास्ताविकं किञ्चिल्लिख्यते। तत्र तावच्चार्व्वाकमतस्य विमर्शस्तन्मते पृथिव्यप्तेजोवायुरिति चत्वारः पदार्थास्सन्ति। चतुर्णां तेषां कायाकारपरिणामे परिणामविशेषस्वाभाव्यात्तत्र चैतन्यमुत्पद्यते। तन्मते चैतन्यविशिष्टो देह एव जीवात्मा, कर्त्ता भोक्ता च स एव देहनाशे तन्नाशः। चैतन्यञ्चात्र ज्ञानं वृक्षनिर्य्यासरूपसुराऽवयवेभ्यो जायमानायां सुरायाम्मदशक्तिरुत्पद्यमाना दृश्यते तद्वत्। तथा च कायाकारपरिणतभूतचतुष्टयमेवात्मानं ते मन्यन्ते नतु तद्व्यतिरिक्तात्मसद्भावे किञ्चित्प्रमाणमुपलभते तत्र च स्थूलोऽहं कृशोऽहमित्यादि सामानाधिकरण्यमुपपन्नम्भवति। चार्व्वाकैकदेशिन एव केचिदिन्द्रियाण्येवात्मेत्याहुः। अन्ये च प्राण एवात्मेति वदन्ति। अपरे च मन एवात्मेति मन्यन्ते। शरीरसुखसाधनार्थकामावेव पुरुषार्थौ। नतु पारलोकसाधनादृष्टमोक्षे च पुरुषार्थे प्रमाणमस्ति, येन तयोरपि पुरुषार्थत्वं सिद्ध्येत। दृष्टेऽर्थे इष्टसाधनताज्ञानादेव प्रवृत्तिर्जायते नतु पारलौकिकसाधनेऽदृष्टेऽर्थे, तत्रेष्टसाधनताज्ञानाभावात्। प्रत्यक्षमेव तन्मतेऽर्थसाधकम्प्रमाणं, स्वभावो वस्तुधर्मःस एव जगत्कारणम् कारणञ्च न कार्यसापेक्षमपि तु स्वतन्त्रमेव। प्रजानां नियन्तृत्वेन प्रसिद्धो राजा ईश्वरो नतु तदन्यो जगदुत्पत्तिस्थितिसंहारकर्त्ता ईश्वरो देहविनाशो मोक्षः। केवलपरवञ्चनकुतूहलिना केनचित्प्रकारकेण वेदाःकल्पितास्तेषामनाप्तोक्तत्वेन प्रामा-

ण्याबधारणन्नास्ति । तदुक्तं-"अग्निहोत्रं त्रयोवेदास्त्रिदण्डम्भस्मगुण्ठनम् । बुद्धिपौरुषहीनस्य जीविकेति वृहस्पति"रिति चार्व्वाकस्य पूर्वपक्षः । अत्र राद्धान्तस्त्वित्थम् । प्रत्येकम्भूतानां चेतनत्वं तत्समूहस्य वा ? नाद्यः, अहमिच्छामि पश्यामि जिघ्रामि रसयामि स्पृशामि शृणोमीत्येकात्मगोचरानुभवस्याप्रामाण्यापत्तेः नहीच्छतः पश्यतो जिघ्रतो रसयत स्पृशतः शृण्वतश्चैक्यं प्रत्येकचैतन्यपक्षे युज्यते । नापि द्वितीय, एकस्मिन्भूते नष्टे तत्समुदायोऽपि नष्ट इति जीवत एव प्रेतत्वापत्तेः । किञ्च प्रत्येकमसतश्चैतन्यस्य तत्समुदाये तत्सत्वायोगान्न शरीरस्यात्मत्वमभ्युपगन्तुं शक्यते । मद्यावयवेषु प्रत्येकेषु मादकशक्तिरस्ति,अतस्तत्समुदायरूपायां सुरायां मादकशक्ते राधिक्यमिति दृष्टान्तवैषम्याच्च ।

यदुक्तं परलोकसाधनमदृष्टं नास्तीति तदपि न, यतो यागादौ लोकानां प्रवृत्तिदर्शनाददृष्टं सिद्ध्यति *यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनं न परलोकार्थी कश्चिदिष्टापूर्त्तयोः प्रवर्त्तेत । नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते प्रागेव जगत् । तथा च स्वर्गादिसुखमुद्दिश्य यागादौ प्रवर्त्तमानाय परेण धनदानमदृष्टार्थमेवेति तत्सिद्धिः । अत्रादृष्टशब्देन धर्म्माधर्म्मौ उच्येते । तस्य धर्मस्याप्रत्यक्षत्वादर्वाग्दर्शिभिः, स्वमनीषया निरूपयितुं न शक्यते, अयं धर्म्मोऽयमधर्म्म इति । अतएव मनुना प्रोक्तं "धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" इति । पूर्वमीमांसाकृता जैमिनिना च 'चोदनालक्षणो धर्म्म' इति सूत्रितम् । श्रीमद्भागवते च "वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः" इत्युपदिशता, श्रीबादरायणेनापि धर्म्मस्वरूपनिरूपणे वेदानामेव प्रामाण्यमङ्गीकृतम् । ततश्च धर्मतत्वं जिज्ञासुभिः पुरुषैः सर्वतोभावेन वेदार्थपरिशीलनं करणीयमित्यायातम्, तस्मात्सिद्धं धर्म्मस्य पुरुषार्थत्वम् । इह खलु जगत्यां सुखं मे जायतां दुःखं मे माभूदितीच्छा सर्वेषां प्राणिनां निसर्गतो जायते । ततो दुःखनिवृत्त्यर्थं यततेऽतो निश्चीयते-एकविंशतिदुःखध्वंसो मोक्ष इति वैशेषिका वदन्ति । प्राणिभिः प्राप्तसुखापेक्षयाऽधिकसुखमभिलष्यते, नैसर्गिकी चैषा स्थितिर्दृश्यते, तस्मान्नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टाः । साङ्ख्यास्तु— चैतन्यस्वभाव आत्मा, तस्य द्रष्टुः स्वरूपे चैतन्यमात्रेऽवस्थानमसम्प्रज्ञा-

*—भूतचैतन्ये भूतानामेव परणति भेदाद्भासनात एवोत्तर कार्यमिति नपरलोकसिद्धिरित्यत्रदोषमाह—यदिहीति ।

तयोगलक्षणनिष्पत्तौ मोक्ष इति मन्यन्ते । पातञ्जलास्तु-असतो ब्रह्मभावस्य योगानुष्ठानाजन्म मोक्षः। एवमन्येऽपि वादिनस्स्वस्वमतानुसारेण मोक्षस्वरूपं वदन्ति। एवम्मोक्षस्वरूपे प्रायशो मतभेदः समुपलभ्यते। मोक्षसाधनेऽपि वादिनामैकमत्यं नास्त्येव। "मोक्षस्य कारणं कर्म्म उताहो ज्ञानमेव वा" इति पुराणवचनपरम्परापर्य्यालोचनया संसारसागरमुक्तितीर्षूणां सदुपायजिघृक्षूणां मुमुक्षूणां चेतसि सुतरामेवायम्प्रश्नस्समुदेति। यत् मुमुक्षुमात्रैरभीप्सितोऽयं मोक्षः किङ्कर्म्मणा, उत ज्ञानेन अथवा तदुभयेन प्रसाध्यत इति। १-अत्र केचित्तावत्—"अपाम सोमममृताअभूम" इत्यादि श्रुतिवचनान्यवष्टभ्य कर्म्मैव मोक्षसाधनं न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इत्यादिस्मृतिञ्च समुपजीव्य महामुनिजैमिनिमतम्बहुमन्यमाना ज्ञाननिरपेक्षंकर्मैव मोक्षसाधनतया सम्यगनुसन्दधते। केचिच्च "न कर्म्मणा न प्रजया तमेव विदित्वाऽतिमृत्युमेति" इत्यादिकया श्रुत्या 'ज्ञानमेव साधनम्" इत्यादिस्मृत्या कर्मनिरपेक्षं केवलमात्मज्ञानमेव मोक्षसाधनमाचक्षते। अन्ये तु "उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां मुक्तिः" इत्यादिवचनमाश्रयन्तो ज्ञानकर्म्मणोस्समुच्चयमेव मोक्षसाधनतया व्याहरन्ति, समुच्चित्य च तदुभयमेव सेवन्ते। इत्थञ्च विभिन्नप्रकारे प्रस्थाने प्रचरतां सतां प्रवृत्तिवैचित्र्यं समधिगम्यानतिप्रौढ़प्रज्ञानां जिज्ञासूनां भवति विमर्शः किमस्माभिराश्रयणीयमिति ? अत्र भगवन्तश्शङ्करस्वामिपादा नैतन्मतद्वयमपि स्वीकुर्व्वन्तिस्म किन्तु केवलं ज्ञानमेव श्रुतिस्मृतिषु मोक्षसाधनतया निरूपितमिति समामनन्ति-युक्तिभिश्च समर्थयन्ते, तथाहि नहि कर्म्म, कर्मसमुचितज्ञानं वा मोक्षसाधनम्भवितुमर्हति, अयोग्यत्वादनपेक्षितत्वाच्च मोक्षो हि नाम बन्धध्वंसः बन्धश्चाज्ञानमूलो दुःखसम्बन्धः। ततश्च यावद्बन्धकारणमज्ञानं न निवर्त्तते तावत्कल्पशतेनापि दुःखसम्बन्धबन्धो न निवारयितुं शक्यते,सति मूले कार्यारम्भस्यावश्यम्भावात्। अनिवर्तिते च दुःखसम्बन्धे न तन्निवृत्तिरूपस्य मोक्षस्य सम्भवः।कर्म तावन्नाज्ञाननिवर्त्तकम विरोधात् तन्मूलकत्वाच्च अज्ञानप्रसादाद्धि देहेन्द्रियादिष्वनात्मसु आत्मात्मीयभावाध्यासं कुर्वतैव पुंसा कर्माण्यनुष्ठीयन्ते । नहि देहेन्द्रियादावनध्यात्मभावेन, आत्मनि वर्णाश्रमाचारादिं, अभिमन्यते नच तद्रहिताः पुरुषा अधिक्रियन्ते कर्मसु अपिच कर्माणि यदेव कारणमाश्रित्य सर्वत्र प्रव-

र्यते कथं तदेव कारणीभूतमज्ञानं निवर्त्तयेयुः। तदनिवृत्तौ बन्धानिवृत्ति-रित्युक्तमेव। येन च यस्य शाश्वतिको विरोधः स एव तदैकान्ततः समुच्छिनत्तीति नहि युक्तम्। विरोधश्च ज्ञानेन सहाज्ञानस्य दृष्टः सुतरां ज्ञानमेकं विहाय पुरुषायुषेणापि न शक्यमज्ञानमुच्छेत्तुं तस्माद्बन्धनि-वृत्तिकामैरकामतोऽपि तत्वज्ञानं समाश्रयणीयमिति वदन्ति। भगवन्तोऽ-स्मदीया आचार्य्यास्तु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" त्यादिश्रुतिवचनेन कर्मणां विविदिषा-यामेवोपयोगो न फलोत्पत्तौ तत्प्रतिपादनेनैव तेषां नैराकाङ्क्ष्याच्च। भगवता श्रीवादरायणेन सूचितं सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति"। तमेतमित्यादिश्रुतेर्गमनेऽश्ववद्विद्यास्योत्पत्तौ साधनभूतानि सर्वाणि कर्माण्यपेक्षत इतिसूत्रार्थः। वेदान्तशास्त्रे भगवद्भावापत्तिलक्षणमोक्ष एव परमपुरुषार्थः। भगवता श्रीवासुदेवेन प्रियशिष्यमर्ज्जुनं निमित्ती-कृत्य समुपादिष्टे श्रीमद्भगवद्गीताशास्त्रे स एव मोक्षपदवाच्यत्वेना-भिहितः "मद्भावायोपपद्यते। वहवो ज्ञानतपसा पूता मद्भावमागताः" भावपदश्च स्वयमेव व्याख्यातं श्रीमुखेन, इदं ज्ञानमुपाश्रित्य मम साध-र्म्यमागताः ) इतिश्लोकेनेति स एव सायुज्यब्रह्मामृतमहिमादिशब्दैरभिधी-यते "निरञ्जनः परमं साम्यमुपैति, नारायणे सायुज्यमाप्नोति, ब्रह्मैव भवति ( जुष्टस्ततस्तेनामृतत्वमेति ) तन्महिमानं पश्यति वीतशोकः"। इत्यादिश्रुतिभ्यः। निरञ्जनः परमं साम्यमुपैतीत्यत्र परमं साम्यं भावपदे-नाभिधीयते परमं साम्यं स्वरूपेण गुणादिना च सादृश्यम्। तथाच प्रत्यगात्मनां ज्ञानस्वरूपत्वात्स्वरूपसादृश्यम्। अपरिच्छिन्नज्ञानधर्म-कत्वाद्गुणसादृश्यञ्च तत्वं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम्।

नियन्तृत्वस्वातन्त्र्याभावेन ब्रह्मभिन्नत्वे सति सर्वज्ञाद्यपहतपा-प्मादि भूयो ब्रह्मगतधर्मवत्वाल्लक्षणसमन्वयः। "सर्वं हि पश्यः पश्यती"ति सार्वज्ञ्यबोधकश्रुतेः। 'नारायणे सायुज्यमाप्नोतीतिश्रुतौ सह-युज्यत इति सयुक् सयुजोभावः सायुज्यं नित्यसम्बन्ध एव प्रतिपा-दितः भगवता नित्यसम्बन्धोऽत्र भावपदार्थः स च मोक्षः श्रद्धो-पपत्तिपूर्वकगुरूपसत्तिवस्तुयाथात्म्यविवेकविरागभगवच्छरणागतितदनु ग्रहप्रार्थनादिमता मुमुक्षुणा भगवत्प्रसादलभ्यः "नायमात्मा प्रवचनेन लभ्यो न, मेधया न बहुना श्रुतेन यमैवेष वृणुते तेन लभ्यः" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते

चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ यदा पश्यः पश्यते रुक्मवर्ण कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति " इत्यादिश्रुतिभ्यः । श्रद्धान्वितो भव, सर्वस्यापि साधनजातस्य गुरूपसत्तिपूर्वकत्वाद्गुरूपसत्तिर्विधीयते " स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । आचार्य्यदेवो भव " यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ " यो वै भूमा तदमृतं ततोऽन्यदार्त्तं नास्त्यकृतेन कर्मणा प्लवाह्येते अदृढा यज्ञरूपाः । यद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितो लोकः क्षीयते " परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात " यो ब्रह्माणं विधदाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये, सर्वस्य शरणं सुहृत् तमेव शरणं गच्छ सर्वभावेन भारत मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् । सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" । इत्याद्याः श्रुतिस्मृतयः उक्तार्थे प्रमाणत्वेनानुसन्धेयाः । तस्मात्सिद्धं मोक्षस्य परम पुरुषार्थत्वम् । एतेन धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था इति सिद्धम् ।

यदुक्तं प्रत्यक्षमेव प्रमाणं नानुमानमपीति तदप्यतितुच्छं यतो नहि वादिविप्रतिपत्त्यादिनिरासार्था लोकायतिकप्रवृत्तिश्च सम्भवति न च परपुरुषीयमज्ञानसंशयादिकं वाह्यदृष्टिमता लौकायितकेन प्रत्येक्षेणाध्यवसातुं शक्यते नापि मानान्तरेणानभ्युपगमात् । अतस्तस्य कथायामधिकाराभावात्प्रेक्षावद्भिरुन्मत्तवदुपेक्षणीयः । यदि तु स स्वस्य कथाधिकारसिद्ध्यर्थमभिप्रायद्योतकवचनेन परकीयज्ञानादिकमनुमीमते तदाऽकामेनाप्यनुमानं प्रमाणमभ्युपेतव्यं तथाहि अयंजन ईदृशाभिप्रायवान् एवं वचनप्रयोक्तृत्वादिति वचनहेतुना प्रथममभिप्रायमनुमाय पुनस्तल्लिङ्गेन, अयं चैत्र ईदृशज्ञानवान् एतादृशाभिप्रायवत्वादित्यनुमानाकारः यदि शब्दस्य प्रामाण्यं नोररीक्रियते तदा मूकाद् वाग्मिनो विशेषः कथमुपपद्येत वाग्मिनामपि मूकत्वमापादयन्तो लोकायितका आत्मानमेव न जानातीति लोकामहे अयमेव मम पितेति विनिर्णये हि मातृवाक्यमेकमेव प्रमाणं ननु प्रत्यक्षमनुमानमन्यद्वा तस्मादनुमानातिरिक्तं शब्दप्रमाणमवश्यमभ्युपेयम् ॥ तथा च शब्दान-

मानाभ्यां देहेन्द्रियादिभ्योऽतिरिक्त आत्मा सिद्ध्यति । केन चित् प्रतारकेण वेदः कल्पित इति प्रागमभिहितं तदपि न साम्प्रतं तादृशप्रतारकस्यासिद्धत्वात् न तर्हि विप्रलिप्सुः कश्चिदत्र यतः प्रतारणशङ्का स्यात् । इदम्प्रथम एव कश्चिदनुष्ठायापि धूर्तः परानुष्ठापयतीति चेत् । किमसौ सर्वलोकोत्तर एव यः सर्वस्वदक्षिणया बन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति । कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः केन वा चिन्हेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः । नञ्च तावतो दुःखराशेः प्रतारणसुखं गरीयः यतः पाखण्डाभिमतेष्वप्येवं दृश्यत इति चेन्न हेतुदर्शनादर्शनाभ्यां विशेषात् यदि वैदिकव्यवहारातिरिक्तोऽनादिरविगीतश्च व्यावहारिकःप्रामाणिकस्स्यात् तदाऽयमाधुनिको वैदिकव्यवहारः परप्रतारणपर इति व्यवतिष्ठेत । यथानाऽदिसिद्धः पिपासोपशमनं तोयपानमिति व्यवहारः । अन्नभक्षणं पिपासोपेशममित्याधुनिक, उपदेशः परप्रतारणपर इति निश्चीयते नत्वेवं तस्मादयमेव व्यवहारः प्रमाणिको न परप्रतारणपर इत्यभ्युपेयम् । अनभ्युपगमे त्वप्रामाणिकत्वाविशेषात् पाखण्डापाखण्डमतभेदो न स्यात् । तथाच प्रमाणेन खण्डिताः पाखण्डा इत्यपि न स्यात् । तस्मात्तत्सिद्धं वेदस्य प्रामाण्यम् । समर्थितञ्च वेदस्य प्रामाण्यं कणादमुनिना "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रमाण्यमाप्तप्रामाण्या" दिति सूत्रेण आप्तस्य—वेदकर्त्तुःप्रामाण्यात् यथार्थोपदेशकत्वात् ,वेदस्य तदुक्तत्वमर्थाल्लब्धं तेन हेतुना वेदस्य प्रामाण्यमनुमेयं वेदवाक्यानि प्रमाण वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवत् । यद्वा मन्त्रायुर्वेदवाक्यानि सर्वज्ञकर्तृकाणि महाजनपरिगृहीतत्वे सति अलौकिकार्थप्रतिपादकत्वात् यानि तु न सर्वज्ञकर्तृकाणि तानि नैवं रूपाणि यथा रथ्यापुरुषवाक्यानीति व्यतिरेकीहेतुः प्रयोक्तव्य इतिविवेकः । तत्र दृष्टान्तमाह—मन्त्रायुर्वेदप्रामाण्यवदिति । मन्त्रो विषादिनाशकः । आयुर्वेदभागश्च वेद एव । तत्र सम्वादेन प्रामाण्यग्रहात् । तद्दृष्टान्तेन प्रामाण्यमनुमेयम् । आप्तं =गृहीतं प्रामाण्यं यत्र सवेदस्तादृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचिदिति सूत्रार्थः । जैमिनिःमहर्षिरपि वेदस्य प्रामाण्यं समर्थयामास । तथाहि औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः पू.मी. इत्यस्मिन्सूत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां तदर्थानां तदुभयसम्बन्धानाञ्च नित्यत्वं प्रतिज्ञायोत्तराभ्यां शब्दाधिकरणवाक्यावि

करणाभ्यामुपपादितम् । मन्त्रब्राह्मणात्मकशब्दराशिर्वेद इति चेत् । न ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरव्याप्यनिर्णीतत्वात् । तस्मान्नास्ति किञ्चिद्वेदस्य लक्षणम् । नापि तत्सद्भावे प्रमाणं पश्यामः । 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् । छा० उ० । ७ । १ ।२) इत्यादि वाक्यं प्रमाणमितिचेत् । न । तस्यापि वाक्यस्य वेदान्तःपातित्वे नात्माश्रयत्वप्रसङ्गात् । न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवेदिति । वेद एव द्विजातीनां निःश्रेयसकरः परः याज्ञ० १ । ४० ) इत्यादिस्मृतिवाक्यं प्रमाणमितिचेत् । न । तस्याप्युक्तश्रुतिमूलत्वेन निराकृतत्वात् । प्रत्यक्षादिकन्तुशङ्कितुमप्ययोग्यम् । वेदविषया तु लोकप्रसिद्धिः सार्वजनीनापि नीलं नभ इत्यादिवत् भ्रान्ता । तस्माल्लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यत इति पूर्वपक्षः । अत्रोच्यते—मन्त्रब्राह्मणात्मकत्वं तावददुष्टं लक्षणम् । अतएवापस्तंबो-यज्ञपरिभाषायामेवमाह—'मन्त्रब्राह्मणयोर्वेदनामधेयमिति आप.प. ।३१। प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि यथा घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि सूर्यचन्द्रादीनां स्वप्रकाशकत्वमविरुद्धम्। तथा मनुष्यादीनां स्वस्कन्धारोहासम्भवेऽप्यकुण्ठितशक्तेर्वेदस्येतरवस्तुप्रतिपादकत्ववत् स्वप्रतिपादकत्वमप्यस्तु । अतएव सम्प्रदायविदोऽकुण्ठितां शक्तिं वेदस्य दर्शयन्ति चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयमर्थं शक्नोत्यवगमयितुमिति तथा सति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारं तस्माल्लक्षणप्रमाणसिद्धो वेदो न केनापि चार्वाकादिनापोढुं शक्य-इति स्थितं वेदस्य प्रामाण्यम् । भगवता श्रीबादरायणेनापि देवताधिकरणे वेदस्य प्रामाण्यं नित्यत्वञ्च दर्शितम् । तथाहि । शब्दइति चेन्नातः प्रभावात् प्रत्यक्षानुमानाभ्याम् । १ । ३ । २८ । श्रुतिस्तावत् । वेदेन नामरूपे व्याकरोत्सतासती प्रजापतिः" तथा सभूरिति व्याहरन् भूमिमसृजत समुव इति व्याहरन्नन्तरिक्षमसृजतेत्यादिकास्मृतिरपि वेदशब्दात्ततदाकृतिमवगम्य प्रजापतिः सृष्टिं करोत्यत्र मानं द्रष्टव्यम ।

मोक्षधर्मे "ऋषयस्तपसा वेदानध्यैष्यत दिवानिशमि" त्युपक्रम्य "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ॥ आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः । ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः । नामरूपञ्च भूतानां कर्मणाञ्च प्रवर्त्तनम् । वेदशब्देभ्य एवादौ निर्मिमीते

सईश्वरः । नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः । शर्वर्यन्ते सजाता नामन्येभ्यो व्यवधादजः । नामभेदस्तपः कर्म यज्ञाख्या लोकसिद्धय इति नामरूपञ्च भूतानां कर्मणाञ्च प्रवर्तनम् ।वेदशब्देभ्य एवादौ निर्म्ममे स महेश्वरः ॥ सर्वेषामेव नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौपृथक् संस्थाश्च निर्ममे ” इत्यादिकाः स्मृतयः प्रमाणतया उक्तार्थेऽनुसन्धेयाः । अतएव नित्यत्वम्” । व्या. सू० १।३।२९। प्रजापतेः सृष्टिः शब्दपूर्विका अतो हेतोर्वेदस्य नित्यत्वमिति तदर्थः । तस्मात् सिद्धं वेदस्य प्रामाण्यं नित्यत्वञ्चेति । सम्प्रति स्वभाववादो निरस्यते । तन्मते च न कारणसापेक्षं कार्य्यम्। अपितु स्वतएव तत्र पृच्छ्यते स्वाभाविकं जगदिति प्रतिज्ञायां । तत्साधको हेतुरस्ति नवा भावपक्षे स्वभावहानिर्यत्तत्र साधनं हेत्वन्तरं तदेव मुख्यं कारणं तस्य चौपचारिकत्वापत्तेः। द्वितीये हेत्वभावपक्षे मूकतापत्त्या प्रतिज्ञाभङ्गस्तस्मान्न स्वभाववाद सिद्धिः ।

इति चार्वाकमतनिराकरणम् ।

## अथ बौद्धमतस्य विमर्शः ।

यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बौद्धानां बुद्धिभेदाच्चातुर्विध्यम् । यथा गतोऽस्तमर्क इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं बुद्ध्यते सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षशून्यं शून्यमिति भावनाचतुष्टयमुपदिष्टं द्रष्टव्यम् । बौद्धेषु माध्यमिकानां मते यश्चव्यवहारदशायां जीवात्मा भासते तस्य मूलस्वरूपं शून्यमेवान्येषां बौद्धानांमते विज्ञानस्वरूपो जीवात्मा स च क्षणिकानां विज्ञानानां यःप्रवाहस्तद्रूपो। प्रतिक्षणं भेदादनित्यएव तत्र यत्सत्तत् क्षणिकमिति व्याप्त्या घटपटादिपदार्थाना क्षणिकत्वमनुमतुं शक्यम् । सत्वं नामार्थ क्रियाकारित्वं तस्यार्थेषु प्रत्यक्षप्रमाणसिद्धत्वान्नात्रहेतोः स्वरूपासिद्धत्वमाशङ्कयम् । वैभाषिकसौत्रान्तिकाः परमाणुकरण वादिनः । कठिनस्वभावाः पार्थिवाः परमाण्वाः स्निग्धा आप्याः । उष्णास्तैजसाः चलनस्वभावाः वायवीयाः । तेभ्यश्च भूतसमुदायस्तेभ्यः शरीरेन्द्रियघटादिविषयरूप भौतिकसङ्घाता भवन्ति । सर्वत्र सङ्घातः, अवयवसमुदायो नतन्मत अवयवादिभ्यो ऽतिरिक्तोऽवयव्यस्ति । तन्मते भूतं भौतिकं बाह्यं वस्तु

तत्र भूतं पृथिव्यादिकं भौतिकं रूपादयश्चक्षुरादयश्च । आन्तरञ्च चित्तं चैत्तञ्चेति मन्यन्ते तत्र विज्ञानस्कन्धः चितयम्, आत्मेति गीयते सचाहमहमित्यालयविज्ञानप्रवाहात्मकः, अन्ये चत्वारः स्कन्धाः, चैत्ताः तत्र सविषयेन्द्रियाणि— रूपस्कंधः १ सुखानुभवः वेदनास्कन्धः २ गौरश्वपुरुषो हस्तीत्येवं नामविशिष्टसविकल्पकः प्रत्ययः संज्ञास्कन्धः३। रागद्वेषमोहधर्माधर्माः-संस्कारस्कन्धः । इति बाह्यार्थास्तित्ववादिनौ वैभाषिकसौत्रान्तिकौ मन्येते तयोर्बाह्यार्थानां परोक्षत्वापरोक्षत्वे विवादः सेयं प्रक्रियाऽनुपपन्ना । यतः सर्वं हि कार्यजातं तदनुगुणकारणसमाजाधीनं दृश्यते कार्योत्पादानुगुणञ्च कारणसमवधानं चेतनप्रेक्षाधीनमसत्यां चेतनप्रेक्षायां न भवितुमुत्सहते यथा घटादयः कार्याः कुलालप्रेक्षायां सत्यामुत्पद्यन्ते नान्यथा तथा अणूनां भूतानाञ्च स्वयमचेतनत्वात् चेतनव्यापारं विना समुदायरूपकार्योत्पादकत्वं न घटते यदि मेलनार्थव्यापारमन्तरा तेषां कारणत्वमिष्यते तदा सदा कार्योत्पादापत्तिर्दुर्निवार्य्या स्यात् नहि क्षणिकविज्ञानादतिरिक्तश्चेतनः त्वयाऽभ्युपेयते येन तस्य सङ्घातकर्तृत्वमुपपद्येत । नापि क्षणनश्वराणां भूतानां कार्योत्पादकत्वं घटते येषां व्यापारावेशस्तेषां मेलनक्षणे नष्टत्वात् नहि क्षणिकानां जन्मातिरिक्तव्यापारोऽस्ति येन तेषां परमाण्वादिमेलनार्थं प्रवृत्तिरुपपद्येत । तस्मात् सहन्तुरभावात्सङ्घातानुपपत्तिः।यद्यपि क्षणिकत्ववादिभिःक्षणिकसन्तानव्यतिरिक्तः कश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपेयते तथाप्यस्थिरेष्वपि स्थिरत्वभ्रान्तिरूपाविद्याऽस्ति तस्मात्सर्वं सङ्घातादिकमुपपन्नं भवति तथाहि तस्यां सत्यां संस्कारा रागद्वेषमोहा विषयेषु प्रवर्त्तंते तेनैव प्रवृत्तिकाले पुण्यापुण्याकर्मात्मिका प्रवृतिर्भवति तेनैव विज्ञानं जन्यते ततः पृथिव्यादिचतुष्टयं शरीरसमुदायकारणभूतमुत्पद्यते, तदेव नामाश्रयत्वेन नामोच्यते। ततश्शरीरं ततः पञ्चबुद्धीन्द्रियमनोरूपं षडायतनं ततः स्पर्शः ततो वेदना सुखात्मिका ततः पुनरविद्यादयः एवं घटीयन्त्रवदावर्त्तमानेषु भावेषु अर्थात्सङ्घात उपपद्यत इति चेत् । मैवम्। अविद्यादीनां सङ्घातभावानिमित्तत्वात् । नहि दूरस्थे पुरुषे जायमाना स्थाणुरयमिति भ्रान्तिभूताऽविद्या पूर्वसिद्धस्य पुरुषस्य संहतिकारणमिति वक्तुं शक्यम् । तथा तन्निमित्तानां रागादीनामपि सङ्घातभावं प्रत्यनिमित्तत्वं बोध्यम् । इति सङ्घातवादो निरस्तः सम्प्रति कार्यकारणभावक्षणिकत्ववादौ निरस्येते क्षणभङ्गवादिनो हि कार्योत्पादं द्वेधा मन्यन्ते

अविद्यातः संस्कारस्ततोविज्ञानमित्येवं रूपो हेत्वधीन आद्यः । पृथिव्यादिसमुदायात्कार्य इत्येवं कारणसमुदायाधीनो द्वितीयः । तत्र द्वितीय पक्षः प्रागे व निराकृतः । तत्राद्यपक्षो न सम्भवदुक्तिकः । उत्तरक्षणे उत्पद्यमाने पूर्वक्षणो निरुध्यत इत्यभ्युपगन्तृमते पूर्वोतरयोः क्षणयोर्हेतुफलभावस्य वक्तुमशक्यत्वात् । उत्तरक्षणस्योत्पत्तिदशायां पूर्वक्षणस्य विनष्टत्वात्, उत्तरक्षणं प्रति हेतुत्वानुपपत्तिरे व तथाहि पूर्वस्तावद् घटक्षणः स किमुत्पन्नः सन्नुत्तरक्षणस्य हेतुरनुत्पन्नो वा नानुत्पन्नः शशविषाणतुल्यत्वात् नाप्युत्पन्नः, अभावत्तुच्छत्वात्, उत्पन्नविनष्टस्यानुत्पन्नस्य चाभावत्वाविशेषात् । अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत । ननु पूर्वक्षणविनाश उत्तरक्षणोत्पत्तिश्च युगपद्भवेतां तुलान्तयोर्नामोन्नामवदिति चेन्न तत्र मध्ये सूत्रधारणदन्तयोश्च युगपदुपस्थितयोरेकस्य गुरुत्वान्नामस्तद्रहितस्योन्नाम इति ।

नचात्रोत्तरोत्पत्तिकाले पूर्वस्य स्थितिरिष्यते, येनासौ तद्धेतुत्वं प्रतिपद्येत, अवतिष्ठते चेत् क्षणिकत्वहानिः। ननु हेतुं विनैवास्तूत्तरोतरोत्पाद एवं सति नोक्तदोषावकाश इति चेन्न, यतोऽसति हेतौ कार्यमुत्पद्यत इति चेत तदा चतुर्भ्यः कारणेभ्यः कार्योत्पत्तिरितीयं प्रतिज्ञा हीयेत अधिपतिप्रत्ययः सहकारिप्रत्यः समनन्तरप्रत्ययः, आलम्बनप्रत्ययश्चेति विज्ञानोत्पत्तौ कारणचतुष्टयमिति वःप्रतिज्ञा, निर्हेतुकोत्पत्तौ च प्रतिबन्धाभावात्सर्वं सर्वत्रोत्पद्येत अन्यथा हेतौ सत्येव कार्यं जायते चेत्तर्हि द्वयोः कार्यकारणयोर्घटक्षणयो यौगपद्यं स्यात् । कार्योत्पतिकालं यावत्कारणस्यावस्थानात् क्षणवादहानिर्नहि विनष्टस्य पितुः पुत्रोत्पत्तौ सामर्थ्यं दृष्टम् । एतावताप्रबन्धेन कार्य्यकारणभावक्षणिकत्वे निरस्य सम्प्रति तदभिमता द्विविधविनाशो निरस्यते । बुद्धिपूर्वकोनिरोधः प्रतिसङ्ख्यानिरोध आद्यः । अतत्पूर्वको निरोधोऽप्रतिसङ्ख्यानिरोधो द्वितीयः तत्र मुद्‌गराभिघातादिहेतुकः सदृशसन्तानावसानरूपउपलभ्यर्हः स्थूलो भावविनाशो बुद्धिपूर्वक इत्युच्यते । उपलभ्यनर्हः सूक्ष्मो निर्हेतुकः सदृशसन्ताने प्रतिक्षणभावी भावविनाशोऽबुद्धिपूर्वक इत्युच्यते । नैतद्युक्तम् ,यतः सन्तानगोचरो वा नि रोधः सन्तानिगोचरोवा । भावाः सन्तानिनः।सन्तानो नाम भावानां हेतुफलभावेन प्रवाह इति विवेकः । न तावत्सन्तानस्य निरोधः सम्भवति । हेतुफलभावेन हि व्यवस्थिताः सन्तानिन एवोदयव्ययधर्माणः सन्तानाः । तत्र योऽन्त्यः सन्तानी यत्रि

राधात्सन्तानोच्छेदेन भवितव्यं,स किं फलं किंचिदारभ्यते न वा। आरभते चेत्, नान्त्यः। तथाच न सन्तानोच्छेदः। अनारम्भे तु भवेदन्त्यः सः, किन्तु स्यादसन्, अर्थक्रियाकारिता रूपसत्वलक्षणविरहात्। तदसत्वे तज्जनकमप्यसज्जनकत्वेनासदित्येवं क्रमेणासन्तः सर्व एव सन्तानिन इति तत्सन्तानो नितरामसन्निति कस्य प्रति सङ्ख्याया निरोधः। नच सन्तानानां सन्तानिनां हेतुफलभावःसन्तानस्तस्य विसभागोत्पादो निरोधः, विसभागोत्पादक एव च क्षणः सन्तानस्यान्त्यः।तथासति रूपविज्ञानप्रवाहे रसादि विज्ञानोत्पत्तौ सन्तानोच्छेदप्रसङ्गः। नापि प्रतिसङ्ख्या ऽप्रतिसङ्ख्यानिरोधौ भावगोचरौ सम्भवतः। यतो हि निरन्वयो विनाशो न सम्भवत्यतो निरुपाख्योऽपि न सम्भवति तेनैवान्वयिना रूपेण भावस्य नष्टस्याप्युपाख्येयत्वात् तस्माद्बौद्धाभिमतं निरोधद्वयं नोपपद्यत इति। बौद्धमते अविद्यानिरोधो मोक्षः सन्तानस्य सन्तानिनां वा नाद्यः सन्तानिव्यतिरिक्तस्य सन्तानस्यावस्तुत्वेन मोक्षानर्हत्वात् नापि द्वितीयः सन्तानिनां क्षणिकत्वात्, अविद्यादिनिरोधलक्षणस्यमुक्तेस्सहेतुकत्वे निर्हेतुकोऽयं विनाश इतीयं प्रतिज्ञा हीयेत। तस्य निर्हेतुकत्वे साधनोपदेशस्यानर्थक्यं प्रसज्येत तस्मादससमञ्जमिदं तन्मतम्।

निरोधद्वयमाकाशं चेति त्रयमवस्तु सन्निरूपाख्यं निर्हेतुकं तुच्छमिति बौद्धा मन्यन्ते तदपि न विचारचारु।आकाशस्य वैशेषिकनये शब्द गुणानुमेयत्वात्। तथाहि जातिमत्वेन सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्यास्पर्शत्वेसति वाह्यैकेन्द्रियग्राह्यत्वेन गन्धादिवद्गुणत्व मनुमितम्। नायमात्मगुणो वाह्येन्द्रियगोचरत्वात्। अतएव न मनोगुणः तद्गुणानामप्रत्यक्षत्वात्। न पृथिव्यादिगुणः तद्गुणगंधादि साहचर्यानुपलब्धेः तस्माद्गुणोभूत्वा गंधादिवदसाधारणेन्द्रियाग्राह्यो यद्द्रव्यमनुमापयति तदाकाशं पंचमं भूतं वस्तु नत्वावरणाभावरूपमिति। आत्मन आकाशःसम्भूत इत्यादि श्रुतिप्रामाण्यादाकाशस्य वस्तुत्वं सिध्यति आकाशस्य स्थितिर्यावद्यावच्च जगतः स्थितिः। तावन्मम स्थिति र्भूयात जगद्दुःखानि निघ्नत इतिदयापरेण वदता बुद्धेनाप्याकाशस्य भावत्वमभिहितम्। यद्याकाशस्यावरणाभावरूपत्वमुच्यते तदा यथैक घटस्य स्थितिकाले घटसामान्याभावो नास्ति तथैकपक्षिसत्वकाले मूर्तद्रव्यसामान्याभावात्मकाकाशो नास्त्येवेति पक्ष्यंतरसंचारो नोपपद्येत

न च देशविशेषावच्छेदेनावरणाभावो ऽस्तीति नोक्तदोषावकाश इति वाच्यम् । अभावावच्छेदकदेशविशेषस्यैवाकाशत्वसिद्धेस्तस्मादाकाशस्य भावरूपत्वम् ।

अहमिदमदर्शमिति यः पूर्वेद्युरनुभूतवान् सोऽहमिदानीमिदमनुभवामीति क्षणभङ्गवादिनोऽनुस्मृतिर्नोपपद्यते तदभावात्सर्वव्यवहारलोपप्रसङ्गः । सर्वश्च लोकोऽहमस्मीति प्रत्यभिजानाति । नाहमस्मीति कश्चिदवैति आजन्मन आमरणादेतस्मिन्नन्तराले सोऽहमस्मीत्यनुसन्दधानः कथं वौद्धो नापत्रपते । तथाच दर्शनस्मरणयोः कर्त्रात्मैकः तथा सत्येकस्य क्षणद्वयावस्थानात् क्षणिकत्वप्रतिज्ञा हीयेत । एतेन घटादिकं क्षणिकमर्थक्रियाकारित्वादिति वौद्धानां क्षणिकत्वानुमानमप्युदाहृतप्रत्यभिज्ञावलेन निरस्तं भवति ।

यद्यभावाद्भावोत्पत्तिरिष्यते तदा सर्वदा सर्वत्र सर्वस्याप्युत्पत्तिः स्यात् । अनादौ कालप्रवाहे नष्टस्य वीजादेस्सत्वात् । ननु वीजमनुपमृद्य नाङ्कुरः प्रादुर्भवति, क्षीरमुपमृद्य दधीव मृत्पिण्डमुपमृद्य घट इव च वीजमुपमृद्यैवाङ्कुर उत्पद्यत इत्यतोऽभावाद्भावोत्पत्तिरिति चेन्न, तत्र वीजसंस्थानमात्रं निवर्त्ततेऽविरोधिवीजद्रव्यमेव त्वङ्कुराकारेणावस्थान्तरतया परिणमत इति प्रत्यक्षमेतन्न प्रत्याख्यातुं शक्यम् । अपिचाभावाद्भावोत्पत्तावुदासीनानां प्रयत्नशून्यानामप्यैहिकामुष्मिकसर्वार्थसिद्धिस्स्यादभावस्य सुलभत्वादिति वैभाषिकसौत्रान्तिकमतयोर्निराकरणम् ।

सम्प्रति विज्ञानमात्रास्तित्ववादियोगाचारमतं निरस्यते । स खल्वेवं मन्यते प्रमाणं प्रमेयम्प्रमितिरिति त्रयमेकस्मिन् विज्ञाने कल्पितं ग्राहकाकारः प्रमाणं ग्राह्याकारः प्रमेयं स्वसंवित्ति फलमिति विवेकः । वाह्यार्थास्सन्तीति प्रतीति र्भ्रान्तिरूपा क्षणिकं विचित्रं विज्ञानं साकारं प्रत्यक्षञ्चास्ति नीलपीतमिति साकारं विज्ञानमेव प्रकाशते तस्मान्नास्ति वाह्यार्थः । इतश्च सहोपलम्भनियमान्न भेदो नीलतद्धियोः । यदैव नीलज्ञानं तदैव नीलमुपलभ्यते । तस्मादनयोरभेदः ।

योयः प्रत्ययः सर्वो वाह्यानालम्वनः, यथा स्वप्नमायादिप्रत्ययः, तथाचैष विवादाध्यासितः प्रत्यय इति स्वभावहेतुः । वाह्यानालम्वनताहि प्रत्ययत्वमात्रानुवन्धिनी वृक्षतेव शिंशिपात्वमात्रानुवन्धिनीति तन्मात्रानुवन्धिनि निरालम्वत्वे साध्ये भवति प्रत्ययत्वं स्वभावहेतुः । अत्रान्तरे सौत्रान्तिकश्चोदयति कथं पुनरसति वाह्येऽर्थे नीलमिदं पीतमित्यादि.

प्रत्ययवैचित्र्यमुपपद्यते स हि मेने ये यस्मिन् सत्यपि कादिचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षा यथाऽविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासाः प्रत्ययाश्च तनसन्तानान्तरसापेक्षाः । तथाच विवादाध्यासिताः सत्यप्यालय विज्ञानसन्ताने षडपि प्रवृत्तिप्रत्यया इति स्वभावहेतुः। यश्चासावालयविज्ञानसन्तानातिरिक्तः कादाचित्कप्रवृत्तिज्ञानभेदहेतुः सवाह्योऽर्थ इति तन्न, यतो नीलाकारं प्रवृत्तिज्ञानं जायते न पीताकारं कस्यचित्तु स तादृशो यतः पीताकारं ज्ञानं न नीलाकारमिति वासनावैचित्र्यादेव स्वप्रत्ययाम्नादिता ज्ञानवैचित्र्यसिद्धेर्नतदतिरिक्तार्थसद्भावे किञ्चनास्ति प्रमाणमिति पश्यामः । आलयविज्ञानसन्तानपतितमेवासम्विदितं ज्ञानं वासना तद्वैचित्र्यान्नीलानुभववैचित्र्यं पूर्वनीलाद्यनुभववैचित्र्याच्च वासनावैचित्र्यमित्यनादितानयोर्विज्ञानवासनयोः तस्मान्न परस्पराश्रय दोषसम्भवो वीजाङ्कुरसन्तानवत् । अन्वयव्यतिरेकाभ्यामपि वासनावैचित्रस्यैव ज्ञानवैचित्र्यहेतुता नार्थवैचित्र्यस्येति योगाचारमतम्।अत्रोच्यते नखल्वभावो वाह्यार्थस्याध्यवसातुं शक्यते सह्युपलम्भाभावाद्वाध्यवसीयेत, सत्यप्युपलम्भे तस्य वाह्याविषयत्वाद्वासत्यपि वाह्यविषयत्वे वाह्यार्थवाधक प्रमाणसद्भावाद्वा। नतावदाद्यः।विज्ञानव्यतिरिक्तस्य वाह्यार्थस्य प्रत्यक्षतया उपलब्धेः । नहि स्फुटतरे सर्वजनीन उपलम्भे सति तदभावो वक्तुं शक्यः नापि द्वितीयः। उपलब्धिग्राहिणा हि प्रमाणेनोपलब्धि गृह्यमाणा वाह्यविषयत्वेनैव गृह्यते नोपलब्धिमात्रमिति ।

नापि तृतीयपक्षः साधीयान् सर्वस्यापि पदार्थजातस्य प्रमाणाधीनत्वात् ।घटादयो हि स्थूला भासन्ते नतु परमसूक्ष्मास्तत्रेदं नानादिग्देशव्यापित्वलक्षणं स्थौल्यंयद्यपि ज्ञानाकारत्वेनावरणानावरणलक्षणेनविरुद्धधर्मसंसर्गेण युज्यते ज्ञानोपाधेरावृतत्वादेव तथापि तद्देशत्वातद्देशत्व कम्पाकम्पत्वरक्तारक्तत्व लक्षणैर्विरुद्धसंसर्गैरस्य नानात्वं प्रसज्यमानं ज्ञानाकारत्वेऽपि न शक्यं शक्रेणापि वारयितुमिति । यश्चसहोपलम्भ नियम उक्तः सोऽपि विकल्पं न सहते । यदि ज्ञानार्थयोरसाहित्येनोपलम्भस्ततोविरुद्धोहेतुर्नाभेदं साधयितुमर्हति साहित्यस्य तद्विरुद्धभेदव्याप्तत्वादभेदे तदनुपपत्तेः । यदुक्तं वाह्यार्थशून्यो जाग्रत्प्रत्ययः प्रत्ययत्वात् स्वप्नादिप्रत्ययवदिति । तदपि न सम्यक् प्रतिभाति स्वप्नजागरितप्रत्यय योर्वैधर्म्यात् । वाधावाधौ वैधर्म्यम् । स्वप्नप्रत्ययो वाधितो जाग्रत्प्रत्यय-

श्चाबाधितः । त्वयापि चावश्यं जाग्रत्प्रत्ययस्यावाधितत्वमास्थेयं तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते । जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेत । नहि बाध्यमेव बाधकं भवितुमर्हति । तथाच न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्यात । तस्माद्बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुमिति । यदप्युक्तं बाह्यार्थाभावेऽपि वासनानिबन्धनं ज्ञानवैचित्र्यं स्यादिति। तदपि विचाराक्षमत्वान्न युक्तं वासनानां भावः त्वन्मते नोपपद्यते यथालोकदर्शनं चान्वयव्यतिरेकावनुस्रियमाणावर्थएवोपलब्धे भवता नार्थानपेक्षयां वासनायाम् वासनाया अप्यर्थोपलब्ध्यधीनत्वात । किञ्च वासना नाम अनुभवजनितः स्मृतिहेतुः संस्कारः । तस्य चाश्रयं विना ज्ञेयाकारवैचित्र्ये सामर्थ्यं कल्पयितुं नैव शक्यम् नच क्षणिकमालयविज्ञानं वासनाधारो भवितु

महंति, द्वयोर्युगपदुत्पद्यमानयोः सव्यदक्षिणशृङ्गवदाधाराधेयभावाभावात् । प्रागुत्पन्नस्य सतः क्षणिकत्वव्याघातः । तस्मात्सिद्धमर्थवैचित्र्यकृतं ज्ञानवैचित्र्यम् । इतियोगाचारमतस्य निराकरणम् । इदानीं माध्यमिकाभिमतःसर्व शून्यवादो निरस्यते । शून्यवादएव बुद्धमतस्य पराकाष्ठा शिष्यबुद्धिवैशद्याय बाह्यार्थाभ्युपगमेन तत्र क्षणिकत्वादयस्तेन कल्पिताः नच बाह्यार्था घटादयो विज्ञानञ्च सर्वे भावाः सन्ति उत्पत्त्यनिरूपणात्तेषां शून्यापत्तिरेव च मोक्ष इत्येव बुद्धाभिप्रायः । स्वतः सिद्धं हि शून्यं न हेतुसाध्यं सत एव हि हेतुरपेक्ष्यतेऽसतश्च पदार्थस्य न भावादभावाद्वोत्पत्तिः सम्भवति जनेरभावादेव न विनाशः । अतो जनिनाशसदसदादिकं भ्रान्तिरेवेति शून्यमेव तत्वमिति माध्यमिको मन्यते नैतदपि युक्तं सर्वप्रमाणविप्रतिसिद्ध-त्वात लोके प्रमाणानि भावाभावगोचराणि तैः खलुसत्सदितिगृह्य—माणं यथाभूतमविपरीतं तत्वंव्यवस्थाप्यते । असच्चासदिति गृह्यमाण यथा भूतमविपरीतं तत्वंव्यवस्थाप्यते सदसतोश्च विचारासहत्वं व्यवस्थापयतासर्वं प्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति तथाच सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते किञ्च येन प्रमाणेन शून्यत्वं साध्यते तस्य सत्यत्वे सर्वस्य सत्यत्वापत्तिः प्रमाणानि हि स्वगोचरे प्रवर्त्तमानानि तत्वमिदमित्येव प्रवर्त्तन्ते । सर्वशून्यमिति वादे सर्वस्य सत्यत्वं वा असत्यत्वं वा सदसत्वं वेति विचारं न सहते । अथ विचारासहत्वेन

निस्तत्त्वतैव भावानां तत्त्वमित्यपि न वक्तुं शक्यं तथा सति हि तत्त्वाभावः स्यात् सोऽपि विचारं न सहत इत्युक्तं भवद्भिः। अपिचारोपितं निषेधनीयम्। आरोपश्च तत्त्वाधिष्ठानो दृष्टः यथा शुक्तिकादिषु रजतादेः। न चेत् किञ्चिदस्ति तत्त्वं कस्य कस्मिन्नारोपस्तस्माच्छून्यवादः सर्वथाऽनुपपन्न एवेति माध्यमिकमतनिराकरणम्।

निरस्तो मुक्तकच्छानां सुगतानां समयः विवसनानामार्हतानां समय इदानीं निरस्यते। ते हि जीवाजीवास्रवसम्वरनिर्जरवन्धमोक्षान् सप्तपदार्थान् मन्यन्ते जैनानां मतं देहपरिमाणो देहादतिरिक्तो जीवात्मा यथा देहो वर्धते तथा तथा तदनुरोधेन तत्रस्थो जीवात्माऽपि वर्धते देहस्यापचये तदनुरोधेनापचीयते. तथाचोपचयापचयविकारसत्त्वान्न जीवात्मा तेषां मते कूटस्थनित्यः किन्तु परिणामिनित्यः॥ ते च वद्धो मुक्तो नित्यसिद्धश्चेति त्रिधा पुद्गलास्तिकायः * षोढ़ा पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमश्चेति धर्मास्तिकायः प्रवृत्त्यनुमेयोऽधर्मास्तिकायः स्थित्यनुमेयः। आकाशास्तिकायोद्विधा लोकाकाशोऽलोकाकाशश्च। तत्रोपर्युपरि स्थितानां लोकानामन्तर्वर्ती लोकाकाशस्तेषामुपरि मोक्षस्थानमलोकाकाशः। तत्र हि न लोकास्सन्ति। द्विधा प्रवृत्तिः सम्यङ्मिथ्या च। तत्र मिथ्या प्रवृत्तिरास्रवः। सम्यक्प्रवृत्ती तु सम्वरनिर्जरौ। आस्रव इन्द्रियसङ्घातः। शमदमादिप्रवृत्तिस्सम्वरः निर्जरस्तरः। बन्धस्त्वष्टविधः कर्मलक्षणः। सप्तभङ्गीनयं सर्वत्रावतारयन्ति। स्यादस्ति स्यान्नास्ति स्यादवक्तव्यः स्यादस्ति च नास्ति च स्यादस्ति चावक्तव्यश्च स्यान्नास्ति स्यादवक्तव्यः स्यादस्ति च नास्ति च स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यइति। अतस्सर्वं वस्तुजातं द्रव्यपर्यायात्मकमनैकान्तिकं द्रव्यस्वरूपस्यैकत्वात्, स्थिरत्वात्सद्वुद्धिवोध्यत्वात्तदात्मन सत्वैकत्वनित्यत्वाद्युपपद्यते। पर्य्यायाश्च द्रव्यस्यावस्थाविशेषः। घटत्वपटत्वादिरूपास्तेषाञ्चानेकत्वादस्थिरत्वादसद्बुद्धिवोध्यत्वात्तदात्मनाऽसत्वानित्यत्वादिकमुपपद्यतेति। तदेतदार्हतमतमप्रामाणिकम्। यतो नह्येकस्मिन् वस्तुनि परमार्थे सति परमार्थसतां युगपत्सदसत्वादिधर्माणां समावेशस्सम्भवति। एवमन्यासामपि भङ्गीनां भङ्गोऽवगन्तव्यः। सप्तभङ्गिनयो यदि निश्चितस्वरूपस्तदा सर्वमनेकान्तमिति प्रतिज्ञा-

* पूर्यन्ते गलन्तीनि पुद्गलाः परमाणुसङ्घाः कायाः। अस्तिकायशब्दः साङ्केतिकः पदार्थवाची।

विरोधः । सप्तभङ्गिनयस्यापि सर्वान्तर्गतत्वात् । यदि सप्तभङ्गिनयोऽप्यनिश्चितस्वरूपस्तर्हि स्वयमनिश्चितस्वरूपेणातएवाप्रमाणभूतेन सप्तभङ्गिनयेन कथमन्येषां सर्ववस्तूनामनिश्चितस्वरूपत्वं सिद्ध्येत् सेयमुभयतः पाशारज्जुः स्याद्वादिनः स्यात्। जीवशरीरप्रमाणोहि जीव इति मन्यन्ते तदपि न, बृहद्देहप्राप्तावपूर्णतापत्तेः । मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्तुमर्हत्यल्पपरिमाणत्वादात्मनः कृत्स्नशरीराव्यापित्वादकात्स्न्यम् । तथाच न शरीरप्रमाणत्वमिति । तथा हस्तिशरीरं परित्यज्य यदा पुत्तिकाशरीरो भवति तदा न तत्र कृत्स्नं पुत्तिकाशरीरं संमीयेतेत्यकात्स्न्यमात्मनः । उपचयापचयाहावयववानात्माऽतो नोक्तदोषावकाश इत्यपि न वक्तुं शक्यते जीवात्मनोविकारित्वदोषतापत्तेः । मोक्षदशायामात्मनो यदन्त्यं परिमाणं तस्य तथैवात्रस्थानमार्हतैरपि वाच्यम् । तदनन्तरं देहान्तराभावेन तदुपचितपरिमाणाप्रसक्तेः । अतो मोक्षदशायां परिमाणं स्वरूपञ्च तद्धि नित्यं भवति तदेव परिमाणमाद्यमध्ययोरवस्थितयोरप्यङ्गीकर्त्तुं युक्तं न तु सङ्कोचविकाशवत्वम् ।

❀ इति जैनमतस्य निराकरणम् ❀

## अथ तार्किकमतस्य सङ्क्षेपेण विमर्शः ।

गौतमेन महर्षिणा प्रमाणादि षोडशपदार्थानां तत्वज्ञानान्मोक्षप्राप्तिरित्युक्तं स्वकीयदर्शने तत्तु कणादस्य सम्मतमेव परन्त्वस्मिन्जगति विद्यमानानां पदार्थानां मध्ये के धर्मिणः कति विधाश्च ते तथा के धर्माः कियन्तश्च ते, इत्येवं मिथोऽसङ्कीर्णरूपेण यावन्न पदार्थज्ञानं तावत्साधर्म्यवैधर्म्यज्ञानाभावेन साहचर्य्यनियमरूपव्याप्तिज्ञानं न सुलभमित्यतोद्रव्यगुणादिभेदेन सप्तैव पदार्थाइति निश्चित्यास्य द्रव्यस्येदं स्वरूपमेत एव तस्य गुणा इत्यादिसर्वंसुव्यस्थितं कणादः प्रत्यपादयत् । अतईदृशविशेषमुद्दिश्य प्रवृत्तत्वादिदं वैशेषिकशास्त्रमिति गीयते ।एतन्मते जालसूर्यमरीचिस्थानि रजांस्येव त्रसरेणुशब्देनोच्यन्ते परमाणु द्वयसंयोगेन जायमानं कार्यंद्व्यणुकशब्देनविधीयते तानि द्व्यणुकानि त्र्यणुकस्यावयवभूतानि त्रयाणां द्व्यणुकानां संयोगेन त्र्यणुकं जायते द्व्यणुकस्यावयवाः परमाणवः ते च पृथिव्यप्तेजोवायुभेदेन चतुर्विधाः नित्याः ज्ञानाश्रयोनित्योविभुश्च जीवात्मा,

तस्मिन् विद्यमाना अपि बुद्ध्यादयो गुणा जीवात्मस्वरूपानन्तर्गता एव यथा भूतले विद्यमानोऽपि घटादिः पदार्थोभूतलस्वरूपान्तर्गतो न भवति तथैवैतत् तथाच गुणिनस्सकाशाद्गुणानां पृथग्भावस्तेषामभिमतः। अतएव तेषां नये द्रव्यादिषु सप्तपदार्थेषु द्रव्यापेक्षया गुणः पार्थक्येन परिगणितास्तथाच बुद्ध्यादीनां गुणाणामुत्पादे विनाशे वा सत्यपि तदाश्रयभूते जीवात्मस्वरूपे न कश्चिद्विकार इति न जीवात्मनः कूटस्थनित्यताहानिः।जीवात्मनःकर्तृत्वंभोक्तृत्वं सत्यमेवेति मन्यते भोगश्चसुखदुःखान्यतरसाक्षात्कारः । एकविंशतिदुःखध्वंसोमोक्षइति वदन्ति ।

## वैशेशिकमतस्यादिग्दर्शनम्।

नैतद्युक्तं यतो यथापटारम्भकास्तन्तवस्संश्लेष्यमाणा षड्भिः पार्श्वैस्संयुज्यमानास्सन्तः स्वाधिकपरिमाणं पटमारम्भन्त इति दृष्टम्, एवं परमाणवोऽपि षड्भिः पार्श्वैस्संयुज्यमाना एव पारिमण्डल्यस्वपरिमाणाधिकपरिमाणमणुत्वह्रस्वत्वयुक्तद्व्यणुकमहत्वदीर्घत्वयुक्तत्र्यणुकादिकार्यमारम्भन्त इति वक्तव्यमिति परमाणूनां प्रदेशभेदोऽवश्यमङ्गीकार्यः। अन्यथा परिमण्डलात्परिमाणोरणुह्रस्वस्य द्व्यणुकस्य द्व्यणुकान्महतो दीर्घस्य द्व्यणुकस्य प्रथिमानुपपत्तेः। किञ्च प्रलये निश्चलेषुपरमाणुषु सर्गाद्यकालद्व्यणुकारम्भक संयोगोत्पादककर्मासम्भवेन तत्संयोगासम्भवादपि परिमाणुकारणवादो हेयः।

अपि च सुषुप्तौ मूर्च्छायाञ्चविषयाभावात् ज्ञानस्याभावइत्यथ ज्ञानयोर्व्याप्यव्यापकभाव स्तथाचनात्मस्वभावश्चैतन्यम्। आत्मानुवृत्तावपि चैतन्यस्याभावात् अत इन्द्रियसंयोगसत्वे ज्ञानसत्वं तदभावे तदभाव इत्यात्मनः संयोगजमागन्तुकं स्वचैतन्यं धर्मो न स्वाभाविको नात इन्द्रियाणां वैयर्थ्यम् तथाच नैयायिकानां वैशेषिकाणाञ्चमते, आत्मस्वरूपं जडमेवेति पर्य्यवसितम्। मुक्तौ ज्ञानविनाशे पाषाणकल्पा आत्मान इति वैशेषिक मतमाक्षिपन्त्यन्ये।

## अत्यन्ताभेदवादिनान्त्वियं प्रक्रिया।

परमार्थत एक एव दृग्रूपः आत्मा तद्व्यतिरिक्तप्रपञ्चजातमवि

यथा कल्पितम् । तदनुसारेण च दृग्दृश्यश्चेति पदार्थद्वयम् । तत्राद्यो दृग्रूपस्त्रिविधः । ईश्वरो जीवः साक्षीचेति भेदात् । कारणीभूताज्ञानोपाधिरीश्वरः अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपाधिविशिष्टो जीवः । ईश्वरो जीवश्च, तत्तदुपाधिसंयुक्तः केवलः साक्षीत्युच्यते । दृश्यपदार्थश्च प्रपञ्चः स त्रिविधः । अव्याकृतमूर्त्तामूर्तभेदात् । अविद्या, तया सह चितः सम्बन्धः, 'तस्यां चिदाभास': जीवेश्वरविभागश्चेति चतुष्टयमनादित्वादव्याकृतशब्देनोच्यते । अविद्यायाः सकाशाज्जातानि शब्दस्पर्शरूपरसगन्धात्मकानि सूक्ष्माणि पञ्चभूतान्यप्यविद्यातएवोत्पन्नान्यन्धकारश्च मूर्त्तशब्देनोच्यते पञ्चीकरणात् पूर्वं तेषां सूक्ष्मभूतानांमूर्त्तावस्थाया अभावात् । अन्धकारोऽप्यमूर्त्त एव। अमूर्त्तावस्थानामेव च भूतानां प्रत्येकं सात्विकाँशादेकैकस्य ज्ञानेन्द्रियस्योत्पत्तिः । सर्वेषां सात्विकांशेभ्योमिलितेभ्यो मनस उत्पत्तिः । तथा तस्यामेवावस्थायां प्रत्येकं राजसांशादेकैकस्य कर्मेन्द्रियस्योत्पत्तिः । मिलितेभ्यश्चराजसांशेभ्यः प्राणस्योत्पत्तिः। ततस्तेषां भूतानां पञ्चीकरणम् । पञ्चीकरणं नाम परस्परमिश्रणम् । तेन मूर्तावस्थासम्पद्यते । ततो भौतिकं सर्वमेतद् भूमण्डलमुत्पद्यते । तत्वज्ञानान्मोक्षः विकारज्ञानाद्बन्ध इत्यद्वैतवादिनां प्रक्रिया ।

शुक्तिकायां रजतभ्रमस्थले शुक्तिविवर्तोपादानमितिविवर्तवादोऽद्वैतवादिभिश्चाद्रियते । नतु परिणामवादिभिरपि साङ्ख्यैः पातञ्जलैश्च तत्र परिणामवाद आदृतः ! इयमेवानिर्वचनीयाख्यातिरित्युच्यते । शुक्तौ रजतप्रतीतिसमयेऽनिर्वचनीयरजतोत्पत्तिर्स्वीकारान्नैयायिकैर्वैशेषिकैश्च नतत्रारम्भवादः स्वीक्रियते रजतभ्रमस्थले तु रजतं नास्त्येव नैवचोत्पद्यते किन्तु शुक्तिरेवदोषवशाद्रजतरूपेणावभासत इयमेवान्यथाख्यातिरित्युच्यते । सत्ख्यातिवादिनस्त्वित्थं मन्यन्ते । तत्र रजतं नास्ति चेद्रजतप्रतीतिः सर्वथा न सम्भवति । अतस्तत्र रजतस्यास्तित्वमात्रमावश्यकम् । किन्तु तद्रजतप्रतीतिसमय एवोत्पद्यत इति वक्तुं न शक्यते विकल्पासहत्वात् । शुक्तिस्वरूपे रजतोत्पादनसामग्री विद्यते ऽथवा न विद्यते । न विद्यते चेत् कथं तदानीं तत्र रजतस्योत्पत्तिः । दोषेण तदानीं रजतमुत्पद्यत इत्युक्तिस्तु न विश्वसनीया भवति । यतो यत्र दोषाभावे वस्तुनो

यथार्थत्वेनाभिमतं ज्ञानं यावद्भिरंशैर्भवितुमर्हति तत्र दोषसत्त्वे स दोषस्तादृशज्ञाने केनचिदंशेन न्यूनतां सम्पादयेन्नत्वाधिक्यम्। तथाच शुक्तेर्यथार्थज्ञाने रजतांशो न भासत इति तत्र दोषेणापि स रजतांशो नोत्पादयितुं शक्यः। अथ तत्र रजतप्रतीत्यनुरोधेन तदुत्पादनसामग्री तत्र विद्यत इति कल्प्यते चेदस्तुनाम। इष्ट एव नः पक्षस्तत्राभ्यनुज्ञायते। किन्तु तया सामग्र्योत्पाद्यमानं रजतं शुक्त्युत्पादनसमय एव शुक्तिस्वरूपेण सहोत्पद्यते न तु प्रतीतिसमय एवोत्पद्यते रजतोत्पादसामग्र्याः शुक्त्युत्पादसामग्र्यपेक्षया न्यूनत्वाद्रजतांशः स्वल्पः शुक्त्युत्पादकसामग्र्या भूयस्त्वाच्छुक्त्यंशोऽधिक अधिकस्यापि च तस्य शुक्त्यंशस्य।

तिमिरादिदोषेणाप्रतीतौ स्वल्पोऽपि रजतांशो दृष्टिगोचरो भवति दोषापगमे शुक्त्यंशप्रतीतिस्तदानीञ्च भूयसा शुक्त्यंशेन दृष्टिप्रतिघातात्तु न प्रतिघातदोषेण दृष्टिसामर्थ्यस्यांशतो ह्रासे सति न रजतांशो भासते। यथा सौरतेजसा चक्षुष्युपहते नक्षत्राणि विद्यमानान्यपि न दृश्यन्ते तद्वत् भ्रमस्थले सर्वत्रैवमेव इयमेव सत् ख्यातिरित्युच्यते। मीमांसकास्त्वेवमाहुः। रजतभ्रमस्थले रजतं सुतरां नास्त्येव प्रतीतिसमयेऽपि च नैवोत्पद्यते। किन्त्विदं रजतमितिज्ञान इदमंशस्यैव प्रत्यक्षं नतु रजतांशस्य इदमंशप्रत्यक्षेण त्विदमंशसादृश्याद्रजतसंस्कारोद्बोधे रजतस्य केवलं स्मरणं भवति नत्वनुभवः। तथाच तत्रेदमंशं प्रत्यक्ष रजतस्मरणञ्चेति ज्ञानद्वयम्। तत्रेदमंशप्रत्यक्षविरुद्धः स्मरणे परोक्षत्वांशः। तादृशस्मरणविरुद्धश्च प्रत्यक्षे शुक्त्यंशः। तयोर्विरुद्धांशयोर्दोषेणाभानेऽन्योन्यवैलक्षण्यप्रतीतौ ज्ञानद्वयमप्येकंज्ञानमित्यवभासते। इयमख्यातिरित्युच्यते। प्रसंगाच्चात्रेमाः ख्यातयस्तन्मतानुसारेण प्रदर्शिता।

## अथ स्वसिद्धान्तस्य द्वैताद्वैतस्य विमर्शः।

एष हि तेषां राद्धान्तः चिदचिदीश्वरभेदेन त्रयः पदार्था स्सन्ति भगवता परमकारुणिकेन श्री विष्णुमूर्तिना श्री कृष्णद्वैपायनव्यासाचार्येण सर्वेषां विदुषां सायुज्यपदवीमुपारुरुक्षूणां मुमुक्षुणांसम्यग् जिज्ञासाविषयीभूतमीश्वरं जिज्ञासुस्तदज्ञानमूलभूता त्रिगुणात्मिका माया चेति तत्त्वत्रयमुपक्रमसूत्रे प्रदर्शितमन्यथा जिज्ञासानुपपत्तेः

भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरमुच्यते उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । इति श्रुतिस्मृतयस्सन्ति ताभिर्निरुक्ततत्वत्रयं प्रतिपाद्यते । चिज्जीवो भोक्ता । अचिज्जडपदार्थजातं भोग्यम्। ईश्वरश्च तयोरन्तर्यामी भूत्वा नियामको भवति एतत्तत्वत्रयं ब्रह्मणो भिन्नाभिन्नं पारमार्थिकम् । तत्र ज्ञानस्वरूपोजीवस्तस्य ज्ञातृत्वं ज्ञानस्य च जीवगुणत्वं श्रुतिप्रमाणेन निश्चीयते । तथा च श्रुतिः। "स यथा सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नोरसघन एवैवं वा अरेयमात्मानन्तरोऽवाह्यः कृत्स्न प्रज्ञानघन एवं" वृ० ४-५-१३ अत्रायं पुरुषः स्वयंज्योतिर्भवति वृ० यथा सैन्धवघनो लवणखण्डोऽनन्तरोऽन्तरावयवव्यतिरिक्तोऽवाह्यो. वाह्यावयवव्यतिरिक्तश्च सर्वोपि रसघनो भवति । अत्रान्तरो वाह्यश्च रसघन इत्युक्ते मध्यावयवानां रसघनत्वं न स्यात् अतस्तत्संग्रहायानन्तरोऽवाह्य इति व्यतिरेकेणोक्तम् किञ्चात्मनो निरवयवत्वात् दृष्टान्तभूतस्य सैन्धवस्य घनस्य तत्साधारण्यसम्पादनायेत्थमुक्तिः एवमयमात्मा प्रज्ञानघन इत्यर्थः । अत्रात्मनो ज्ञानस्वरूपत्वमुक्तं भवति । अत्राम्यां स्वप्नावस्थायामयमात्मा स्वयं ज्योतिर्भवति ।

ज्ञानस्वरूपत्वात् स्वप्रकाशो भवति न हि विज्ञातुर्विज्ञानस्यविपरिलोपो विद्यते वृ० । ४ । ३ । ३० । अथ योयं वेदेदं जिघ्राणीति स आत्मा छा० । ८ । १ । ४ । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः । वृ० । ४ । ३ । ७ । एष हि द्रष्टा स्प्रष्टाश्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ताविज्ञानात्मा पुरुषः । इत्यादिका । विज्ञातुर्विज्ञानाश्रयस्यात्मनो या विज्ञाति गुणभूतविज्ञानं तस्या विनाशो नास्ति नित्यत्वादित्यर्थः।अथ य इति अत्रात्मनोवघ्रातृत्वोक्त्या ज्ञातृत्वं सिद्ध्यति।अवघ्रणस्य ज्ञानविशेषत्वात् तेन चात्मनो ज्ञानगुणकत्वं सिद्ध्यति। योऽयमिति । विज्ञानमय इति प्राचुर्यार्थे मयट् । तेनात्मनो ऽज्ञानव्यतिरेक नक्त इति तस्य ज्ञानगुणकत्वं सिध्यति । प्राणेषु इन्द्रियेषु मध्य आत्मनो ज्योतिरूपत्वोक्त्या ज्ञानस्वरूपत्वमुक्तं भवति । आत्मा

स्वयं ज्ञानरूपोऽपि गुणभूतज्ञानद्वारेन्द्रियसाधनैश्च विषयावभासको भवति । प्रभाद्वारा सूर्य इवेत्यर्थः । एषहीति । अत्र द्रष्टा स्प्रष्टेत्यादि निर्देशादात्मनो ज्ञानगुणकत्वं सिद्ध्यति । विज्ञानात्मेत्यनेन ज्ञानस्वरूपत्वञ्च सिद्धयति एतेनात्मनोज्ञातृत्वमेव न ज्ञानस्वरूपत्वमिति वदन्तस्तार्किकास्तथात्मनो ज्ञानस्वरूपत्वमेव नज्ञातृत्वमिति वदन्तो मायावादिनश्च निरस्ता भवन्ति । ननु जीवात्मनो ज्ञानस्वरूपत्वमङ्गीक्रियते चेत्तदाज्ञातृत्वंकथमुपपद्यते न हि स्वरूपमेव स्वस्य गुणो भवतीति चेन्न यतोऽप्रत्यक्षस्यात्मनो यथा ज्ञानस्वरूपत्वं श्रुतिप्रमाणेन स्वीक्रियते तेनैव प्रमाणेन तस्य ज्ञानाश्रयत्वमप्यभ्युपगन्तुं शक्यते स्वरूपस्य गुणत्वन्तु कथमिति तु नाशङ्कनीयम् । स्वरूपभूतज्ञानापार्थक्येन गुणभूतज्ञानस्य स्वीकारात् ।

यथाहि मणिद्युमणिप्रभृति तेजोद्रव्यं प्रभावद्रूपेणावतिष्ठमानं प्रभारूपगुणाश्रयः । ननु प्रभाया द्रव्यत्वमेव नास्ति कुतस्तद्व्याप्यं तेजस्त्वं नापि तस्या गुणत्वम् । प्रभा नित्यंसूर्यसम्बद्धाऽपि सूर्यादन्यत्र समुद्रपर्वतभूम्यादौगमनदर्शनादिति चेन्न प्रभायां शुक्लरूपाश्रयत्वेन द्रव्यत्वस्यानुमानात् । गुणेषु गुणानङ्गीकारात् । नचतत्रैव किंमानमिति वाच्यं गुणसामान्यं प्रति द्रव्यस्य कारणत्वमिति सर्वानुभवसिद्धत्वात् । कारणत्वस्य कार्याव्यवहितप्रागवृत्तितयापेक्षणाच्च प्रभाया गुणत्वव्यवहारस्तु तस्याः सूर्यादितेजोन्तरावलम्बित्वेन गुणसादृश्याद्गौणः ।

एवं प्रभाया द्रव्यत्वेसिद्धे तस्यास्तेजस्त्वं प्रत्यक्षसिद्धमेव तथात्मनो गुणभूतज्ञानमपि वस्तुतो द्रव्यत्वमेव तस्य गुणव्यवहारस्तुगौणः। नित्यात्मद्रव्यान्तरसम्बद्धत्वेन गुणसादृश्यात् । तस्मात्सिद्धं ज्ञानस्वरूपस्य ज्ञानाश्रयत्वमिति स च जीवात्मा कर्त्ता "विज्ञानं यज्ञं तनुते" "कर्त्ता" शास्त्रार्थवत्वात् । इति श्रुतिसूत्राभ्यां प्रत्यगात्मनः कर्तृत्वं निश्चीयते यजेत स्वर्गकामः मुमुक्षुर्ब्रह्मोपासीतेत्येवमादिशास्त्रं स्वर्गमोक्षादि फलकामं भोक्तारमेवविनियुङ्क्ते शास्त्रफलं प्रयोक्तरितीन्यायात् एतेनोपाधिकं जीवात्मनः कर्तृत्वं मिति वदन्तोमायावादिनः प्रकृतेरेववस्तुतः कर्तृत्वं तच्च प्रकृतिसम्बन्धाज्जीवात्मनि भासते इतिसाङ्ख्याश्च निरस्ता

भवन्ति । शास्त्रेण कर्त्ता बोधजननद्वारा नियुज्यते नचाचेतनया बुद्धि प्रकृत्योः बोधनीयत्वमस्ति अतो भोक्तृत्वात् बोधनीयत्वाच्चात्मैवविधि निषेधशास्त्रनियोज्य इति युक्तम् । नच कूटस्थ आत्माऽहंकर्त्तेति परकीय कर्तृत्वमात्मन्यध्यवसितुं प्रभवति । हन्ताचेन्मन्यते हत मिति मन्त्र स्तु, न जायते म्रियते विपश्चिदिति मन्त्रो न हन्यते हन्यमाने देह इति देहातिरिक्तस्यात्मनो हननायोग्यत्वेन प्रकृतत्वात्तद्विषयतयोपप द्यते कर्तृत्वप्रतिषेधकानि भगवद्वचनानितु प्रकृतिगुणादिकम नपेक्ष्य केवलस्य जीवस्य कर्तृत्वप्रतिषेधकानि । तत्रैवं सति कर्त्तारमा त्मानं केवलन्तुयः, इति वचनान्तरेणैकार्थ्यात् । तत्र केवलशब्दः स्वातन्त्र्यपरः उक्तार्थे मानम् । सर्वथा कर्तृत्वप्रतिषेधे तु केवल पदस्य वैयर्थ्यं प्रसज्येत अन्यथा गुणादीनां कर्तृत्वे तेषामेवभोक्तृत्वा पत्तिस्तयोःसामानाधिकरण्यनियमात् नह्यन्यकर्तृककर्मणा, अन्ये षां भोक्तृत्वं कुत्रापि प्रसिद्धम् । तस्मात् सिद्धं कर्तृत्वं प्रत्यगात्मनाम्, एवं भोक्तृत्वमपि तेषां द्रष्टव्यम् । स च जीवात्माऽहमर्थाभिन्नः । अहमर्थ एव रूपं स्वरूपं यस्यस, अहं जानामीच्छामिकरोमीत्यादि प्रत्ययेभ्यः, एतावन्तं कालमहमस्वाप्सं न किञ्चिदवेदिषम्; इत्यादि श्रुतिसिद्धः सुषुप्त्यादावप्यहमर्थस्यावगमः ।

ब्रह्मवेदमग्र आसीत् स चात्मान वेदाहमस्मीति बहुस्यां प्रजा येय नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतं करवाणि इत्याद्या श्रुतयः सन्ति ताभिः परब्रह्मणः श्री पुरुषोत्तमस्याहमर्थस्वरूपत्वं प्रतिपाद्य ते श्रीमद्भगवद्गीतायामपि श्रीमुखेनैवाहमर्थस्यात्मत्व'निर्णीतं तथाहि वेदाहं समतीतानि वर्त्तमानानिचार्जुनेऽत्यस्मदर्थस्यैव सर्वज्ञत्व योगः अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा मत्तः सर्वं प्रवर्त्तत इति जगज्जन्मादिकारणब्रह्मलक्षणलक्षितत्वमहमर्थस्यैव श्रूयते, तस्मात्सि द्धमहमर्थस्यात्मत्वम् ।

### जीवात्मनः परिमाणत्वविमर्शः

चार्वाकाबौद्धास्तदन्तर्गतमाध्यमिका जैनाश्च मध्यमपरिमाणो जीवात्मेति मन्यन्ते । तन्न सम्यक् प्रत्यगात्मनां मध्यमपरिम णत्वे सावयवत्वेनानित्यत्वापत्तेः तथासति शारीराणां नित्यत्वप्रति पादिकाश्श्रुतयो बाध्येरन । नैयायिका वैशेषिकाः साङ्ख्याः पातञ्ज

ला अद्वैतवेदान्तिनश्च जीवात्मनो विभुत्वमिच्छन्ति नैतदपि युक्तं यतो यदि जीवानां विभुपरिमाणवत्त्वमिष्यते तदोत्क्रान्तिगत्यागति भिश्रवणमेव न घटेत तथात्वे चोत्क्रान्त्यादि बोधकाश्श्रुतयो व्याकुप्येर न्। अतो जीवात्मनामणुपरिमाणकत्वमभ्युपेयम्। अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश, अणुर्ह्येष आत्मा यंवाएते सिनीतः पुण्यपापम् वालाग्रशतभागस्य शतधाकल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते, इत्यादि श्रुतिवचनेभ्यो जीवानां साक्षादणुत्वं निश्चीयते तस्मात्सिद्धं जीवात्मनामणुपरिमाणवत्त्वमिति।

ते च जीवात्मान अनन्ताः सङ्ख्यानिरूपितावसानशून्या इति तदर्थः।तथा चाह भगवान् पाराशरः "स्थूलैःसूक्ष्मैस्तथासूक्ष्मसूक्ष्मैः सूक्ष्म तरैस्तथा।"स्थूलैस्स्थूलतरैश्चैवतत्सर्वं प्राणिभिर्वृतम् अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम। न सन्ति प्राणिनो यत्र निजकर्मनिबन्धनेति। ते च प्रतिशरीरं भिन्नाः। ब्रह्मादिस्थावरान्तेषु प्रत्येकमेकेकोविलक्षण स्वरूप इति तदर्थः। एतेनैकजीववादपक्षो निरस्तो भवति। यद्येक एव जीवात्मा स्वीक्रियते तदा सर्वेषां प्राणिनां भोगसांङ्कर्य्यं प्रसज्येत नोपपद्येतबन्धमोक्षव्यवस्थाचेति।

## इति चित्पदार्थस्य विमर्शः।

अचित्पदार्थस्त्रिविधः॥ प्राकृताप्राकृतकालभेदात्।तत्र गुणत्रयाश्रयी तं द्रव्यंप्राकृतं तच्चानित्यं परिणामादिविकारिच गौरनाद्यन्तवती जनित्री भूतभाविनी सितासितारक्ताच सर्वकामदुघाविभो,, अजामेकामित्यादिश्रुतिभ्यः। अप्राकृतं नाम त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनञ्च प्रकृतिमण्डलभिन्नदेशवृत्तिनित्यविभूतिविष्णुपदपरमव्योम परंपद ब्रह्मलोकादिपदाभिधेयम्।

तच्च धाम भगवदीयानादिसङ्कल्पात्तस्य तदीयानां नित्यमुक्तानाञ्च भोग्यादिरूपेणानेक रूपं परिणामादिविक्रियानर्हएव कालातीतत्वात्।

अथ प्राकृताप्राकृतोभयभिन्नोऽचेतनद्रव्यविशेषः कालो नित्यो विभुश्च। ईश्वरस्तु अचिन्त्यानन्तनिरतिशयस्वाभाविककल्याणगुणाद्याश्रयः जगज्जन्मादिहेतुः परमकारुणिकोभक्तवत्सलः परब्रह्मनारायणवासुदेवशब्दाभिधेयः श्री कृष्णः सच तदुपासकानुगुणतत्तत्फल

प्रदानाय वासुदेवसङ्कर्षण प्रद्युम्नानिरुद्धभेदेन चतुर्धाऽवतिष्ठते ।
चेतनाचेतनयोः सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्त्वत
न्नियम्यत्वसर्वाधारत्वादिधर्मैः स्वाभाविकोभेदः ब्रह्मात्मकत्वतन्नियम्यत्व
तद्व्याप्यत्वतत्तन्त्रसत्त्वपरार्थत्वादि धर्मैरभेदःस्वाभाविक इति भेदाभेद
बोधकश्रुतिभ्यां निश्चीयते नचोभयविधवाक्यानामितरेतरबाध्यबाधक-
भावो वक्तुं शक्यस्तुल्यबलत्वात् तथाचोभयेषां वचनानां स्वार्थप्रामाण्य-
सिद्धये चिदचिद्भिन्नाभिन्नं ब्रह्म वेदान्तशास्त्रप्रतिपाद्यं भवितुमर्हति तद्वि
षयकविज्ञानेन मोक्षप्रतिबन्धकीभूताज्ञाने नष्टे भगवद्भक्तायतन्निष्ठाय
भक्तवत्सलः परमकारुणिकः पुरुषोत्तमः स्वयाथात्म्यानुभवानुगुणनिरव-
धिकानन्दरूपं पुनरावृत्तिरहितं स्वपदं प्रयच्छति । तथाचस्मृतिः । "मामु-
पेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं
परमांगतिमि" ति । तदेतत्सर्वं हृदि निधाय कोटिसूर्य्यप्रकाशो भग-
वान् श्रीसुदर्शनावतारो नियमानन्दाभिध आद्याचार्य्यः शारीरकमीमां-
सावाक्यार्थरूपवेदान्तपारिजातं सौरभाख्यमकार्षीत् तस्य तात्पर्य्यजिघ्रा-
हिषया श्रीभगवच्छङ्खावतारैः पूज्यपादश्रीश्रीनिवासाचार्य्यैर्वेदान्त-
कौस्तुभाख्यो ग्रन्थो व्यरचि तदनन्तरञ्चाद्वैतसाम्प्रदायिकैर्भाष्यपञ्चपादिका
विवरणवार्तिककारैः बादरायणसूत्राणामर्थोऽन्यथात्वं नीतः ततः सुप्रौढ
पांडित्येनातिविसृत्वरस्वकीर्त्तिकिरणधवलीकृतसर्वदिङ्मण्डलेन श्रीम-
न्माधवमुकुन्दचरणेनाद्वैतवादयुक्तयुत्सारणपुरस्कृतं द्वैताद्वैतं परिपक्षगि
रिवज्रनामकमहानिबन्धप्रणयनेन पुरस्कृतं तदनुगतश्रीश्रीकेशवकाश्मीरि-
भट्टाचार्य्येण वेदान्तकौस्तुभप्रभाख्या ब्रह्मसूत्रवृत्तिः निर्मिता । एतेषां पूर्वा
चार्य्याणामुक्तितोऽन्यतश्चायमात्मपरमात्मतत्त्वादर्शो मया सङ्गृहीतः।

आत्म-परमात्म-तत्त्वादर्शस्य—

# विषयानुक्रमणिका ।


| प्रथम परिच्छेदे | | पृष्ठाङ्क |
|---|---|---|
| १ मंगलाचरणम् | ...... ...... | १—२ |
| २ चार्वाकमतनिराकरणम् | ...... ...... | ३ । |
| बौद्धमतस्य निरसनम् | ...... ...... | ४—१३ |
| जैनमतस्य निराकरणम् | ...... ...... | १४—१६ |
| वैशेषिकमतनिरसनम् | ...... ...... | १७—२६ |
| साङ्ख्यमतनिरसनम् | ...... ...... | २०—३१ |
| ४द्वैताद्वैतदर्शनानुसारेणात्मनः | ...... ...... | ४ |
| स्वरूपनिरूपणम् | ...... ...... | ३१—३६ |
| एकजीववादस्य निराकरणम् | ...... ...... | ४०—४१ |
| अवच्छेदवादस्य निरसनम् | ...... ...... | ४२ |
| प्रतिविम्ववादनिरसनम् | ...... ...... | ४३—४५ |
| आभासवादस्य निराकरणम् | ...... ...... | ४६—४७ |
| प्रत्यगात्मनामनेकत्वसमर्थनम् | ... ...... | ५० |
| परमात्मस्वरूपनिरूपणे | ...... ...... | " " |
| भट्टभास्करमतस्य निरसनम् | ...... ...... | ५१—५३ |
| अत्यन्ताभेदवादिमतस्य निरसनम् | ...... | ५१—५८ |
| अत्यन्तभेदवादिमतस्य निरसनम् | ...... | ५८—६३ |
| भेदाभेदसमर्थनपुरस्सरं द्वैताद्वैतसिद्धान्तस्य निरूपणम् | | ६३—८३ |
| भगवद्बादरायणसूत्राणां विमर्शे... | ...... | |

द्वितीय परिच्छेदे प्रष्ठांक
शङ्कोत्तरभावेनादिमसूत्रार्थनिरूपणम् ...... ८३—८६
प्रमाणव्यवस्थायाः समर्थनम् ...... ...... ८६—८८
पाञ्चरात्रस्य प्रामाण्यसमर्थनम् ... ...... ८९—९५
अर्थापत्त्यादीनां निरूपणम् ...... ...... ९६
प्रामाण्यस्यस्वतस्त्वविचारः ...... ...... ९७—१००
शास्त्रैकवेद्यमेव ब्रह्मेति समर्थनम् ...... १००—१०१
जैमिनिमतस्य निरूपणावसरे श्रुतिलिङ्गवाक्यप्रकरण-
समाख्यादीनां निरूपणम् ...... ...... १०२—११५
समन्वयाधिकरणविचारे जैमिनिमतस्य निरसनम् ११५—१२०
५ ईक्षत्यधिकरणम् ...... ...... १२०—१२१
६ शङ्कोत्तरभावेनानन्दमयाधि ... ...... १२२—१२९
करणस्य विमर्शः ...... ......
७ आकाशाधिकरणम् ...... ...... १३०
८ प्राणाधिकरणम् ...... ...... ,,
९ ज्योतिरधिकरणम् ...... ...... १३१
१० इन्द्रप्राणाधिकरणम् ...... ...... १३[illegible]
द्वितीय पा० १ सर्वत्र प्रसिद्ध्यधिकरणम् ...... १३[illegible]
२ गुहाप्रविष्टाधिकरणम् ...... ...... १३[illegible]
३ अन्तराधिकरणम् ...... ...... १३[illegible]
४ अन्तर्याम्यधिकरणम् ...... ...... १३[illegible]
५ अदृश्यत्वादिगुणकाधिकरणम् ...... १३[illegible]
६ वैश्वानराधिकरणम् ...... ...... १३[illegible]
तृतीय पा० १ द्युभ्वाद्यधिकरणम् ...... ...... १४[illegible]
२ भूमाधिकरणम् ...... ...... १५[illegible]

द्वितीय परिच्छेदे — पृष्ठांक


३ अन्तराधिकरणम् ...... ...... १४२
४ ईक्षतिकर्माधिकरणम् ...... ...... "
५ दहराधिकरणम् ...... ...... १४५
६ प्रमिताधिकरणम् ...... ...... "
७ देवताधिकरणम् ...... ...... १४७
८ मध्वधिकरणम् ...... ...... "
९ अपशूद्राधिकरणम् ...... ...... १४९
प्रमिताधिकरणस्य शेषोभागः...... ...... "
चतुर्थपादे ...... ......
१ अनुमानाधिकरणम् ...... ...... १५१
२ चमसाधिकरणम् ...... ...... १५२
३ सङ्ख्योपसङ्ग्रहाधिकरणम् ... ...... १५३
४ कारणत्वाधिकरणम् ...... ...... १५४
५ जगद्वाचित्वाधिकरणम् ...... ...... १५५
६ वाक्याधिकरणम् ...... ...... १५७
७ प्रकृत्यधिकरणम ...... ...... "
सर्वव्याख्यानाधिकरणम् ...... ...... १५८

श्रीनिकुञ्जविहारिणेनमः ।

महामुनीन्द्रायश्रीनिम्बार्कायनमः ।

# आत्म-परमात्मतत्वादर्शः ।

श्रीमद्धंसकुमारांश्च देवर्षिं नारदं नुमः ।
हृत्तमोनाशनेशक्तं निम्वभानुं सुखाकरम् ॥ १ ॥
शारदेन्दीवरश्यामं राधिकाप्राणजीवनम् ।
वृन्दाबननिकुञ्जस्थं नौमि कुञ्जविहारिणम् ॥२॥
निम्वादित्यस्य पादाब्जं लोचनानन्ददायकम् ।
सकलार्थप्रदं नृणां प्रणमामि पुनः पुनः ॥ ३ ॥
श्रीनिवासं गुरुं वन्दे करुणावरुणालयम् ।
वादरायणसूत्राणां भाष्यकारं गुणार्णवम् ॥ ४ ॥
सनाढ्यान्वयसम्भूतं हरिदासं महोज्वलम् ।
गङ्गाधरसुतं नौमि नैष्ठिकव्रतधारिणम् ॥ ५ ॥
ज्ञानवैराग्यभावादि कल्याणगुणसागरम् ।
आशुधीरस्य शिष्यं श्रीहरिदासं नतोस्म्यहम् ॥६॥
वीठलविपुलं देवं दयमानदृगञ्चलम् ।
स्मयमानमुखाम्भोजं नौमि राधापरायणम् ॥ ७ ॥
गुरोर्विहारिदेवस्प संसारामयभेषजम् ।
दिव्यं पदद्वयं वन्दे माधुर्य्यभावदायकम् ॥ ८ ॥

वृन्दाबने सुखासीनं भक्तिवैराग्यसागरम् ।
सरसं सरसं वन्दे गुरुं तापत्रयापहम् ॥ ९ ॥
श्रीनरिहरदेवञ्च भावुकं परमं गुरुम् ।
आनन्दसागरे मग्नं नौमि कृष्णपरायणम् ॥१०॥
रसिकं रसिकं वन्दे कल्याणगुणसागरम् ।
सदा कृष्णपदासक्तं स्वीयानां प्रेमदायकम् ॥ ११ ॥
श्रीललितकिशोर्य्याख्यं रसिकस्य पदाश्रितम् ।
वैराग्यसागरं नौमि सन्मार्गरक्षकं सदा ॥ १२ ॥
आपीनविपुलोरस्कमाजानुभुजभूषणम् ।
ललितमोहिनिं वन्दे हंसवंशविभूषणम् ॥ १३ ॥
ततः परानहं वन्दे भावुकान् रसिकानपि ।
भूतान् भव्यान् गुरून् विज्ञांश्चिन्तितार्थप्रकाशकान् १
आत्म-परमात्मतत्वादर्शः मनसि वितनोतु विनोदम
अमोलकरामविदुषा भणितः योबुधमधुपानां हि। १

सन्ति चात्मतत्वे वादिनां विप्रतिपत्तयः भूतचतुष्टयमेवात्
तिलोकायतिकामन्यन्ते तन्न विचारचारु भूतानां चेतन
घटस्यापि चेतनत्वापत्तेर्नच प्रत्येकं भूतानामचेतनत्वेऽपि भूतचतुष्ट
समुदायस्य तथात्वं ब्रूमइतिवाच्यम् । प्रत्येकभूतापेक्षया भूतसमुदा
स्यानतिरिक्तत्वात् । प्रत्येकमात्रवृत्तिधर्मावच्छेदेन चैतन्यं नास्ति चे
कथं भूतसमुदाये तत्सत्वं वक्तुं शक्यते । देहाकारपरिणतभूतचतुष्ट
मात्मेतिचार्वाकस्तन्मते देहातिरिक्तस्वतन्त्रचैतन्यं नास्ति किन
कायाकारपरिणतभूतचतुष्टयान्तर्गतमितिमन्यते तदप्यकिञ्चित्करम्
मृतशरीरे व्यभिचारात् नच चैतन्यविशिष्टं कायाकारपरिणतभूत
चतुष्टयमात्मा मृतशरीरे चैतन्यवैशिष्ट्याविरहान्न तथात्वं तथाचान्व
व्यतिरेकाभ्यां जीवितशरीरस्यैव ज्ञानहेतुत्वं सिद्ध्यति सिद्धे तस्मि

समवायिकारणं तदेव कल्प्यते तद्व्यतिरिक्तचेतनकल्पने मानाभावात् गौरोऽहंजानामीत्यनुभवाच्चेति वाच्यम्। शरीरस्यानुभवितृत्वे कर्तृत्वे च तन्नाशादन्यस्य भोक्तृत्वे प्रतिसन्धातृत्वे चातिप्रसङ्गात्। नापि कर्मज्ञानाभ्यां जनितावदृष्टसंस्कारौ सर्वत्र प्रतिभूतनियतौ अनुवर्तिष्येते यतोभोगप्रतिसन्धाननियमः यत्कायसन्ताने कर्म तत्कायसन्ताने भोगोयत्कायसन्तानेऽनुभवस्तत्कायसन्ताने स्मृतिरितिविवेक-इत्यपि वक्तुं शक्यते।

वाल्यशरीरेणानुभूतस्य युवशरीरेण स्मरणानुपपत्तेः। अन्यानुभूतस्यान्येनस्मरणे अतिप्रसङ्गात्। नच वाल्ययौवनयोरेकंशरीरं भवितुमर्हति शरीराणां विनश्वरस्वभावात्। जाठराग्निना पच्यमानानां भुक्तपीताहारावयवानां प्रतिक्षणमुपचयापचयवैषम्यान् अवयविशरीरमपिप्रतिक्षणमुपचयापचयवदन्यदन्यद्भवति यद्यपि शरीरस्य प्रतिकलमुपचायापचयदर्शनं नास्ति तथापि वर्षधारानिपातैस्तटाकजलस्यैव घटीयन्त्राक्षेपणैः कूपजलस्येव चान्तेतद्दर्शनात् यौक्तिकं प्रतिक्षणं किञ्चित् किञ्चिदुपचयापचयज्ञानमस्त्येव। आहारावयवानां शरीरावयवत्वप्राप्त्या तदपचयोपचयाभ्यां शरीरापचयोपचयावश्य-म्भावात्। यथा हि चन्द्रतारकादीनां मुहूर्तादिकालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शनात् प्रतिक्षणं स्वल्पदेशान्तरप्राप्तिज्ञानं यौक्तिकमस्तीत्यभ्युपगच्छन्ति तार्किकाः। नापि मृगमदवासनेव वस्त्रादिषुसंसर्गादन्यवासनाऽन्यत्र सङ्क्रामति। मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसाङ्गात्। नचोपादानोपादेयभावनियमोगतिः। क्षणिकपक्षेवाल्ययुवशरीरयोः परमाणुपुञ्जात्मकतयोपादानोपादेयभावेऽपि तद्वासनासङ्क्रमः स्यात् स्थिरपक्षेपरमाणूनांतदभावेनोपादानोपादेयभावानुपपत्तेः खण्डावयविनं प्रति विच्छिन्नानामनुपादानत्वात् पूर्वसिद्धस्यावयविनोविनाशात्। तथाच तद्वासनासङ्क्रमाभावात्। तदनुभूतं खण्डशरीरेण न स्मर्येत। नच परमाणूनां चैतन्यं तद्गुणानामतीन्द्रियत्वेन ज्ञानादेरप्यतीन्द्रि-यत्वापत्तेः शरीरान्वयादेश्च कारणत्वमात्रं सिद्ध्यति नसमवायि-कारणत्वं तदेवंविपक्षवाधकाच्छरीरं न चेतनं भूतत्वात् घटवत्। इतिचार्वाकमतनिराकरणम्। अथ वौद्धमतविमर्शः।

माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाश्चतुर्विधा वौद्धाः। तेसर्वेऽप्यादिवुद्धस्य शिष्याः क्रमेण सर्वशून्यत्ववाह्यार्थशून्यत्ववाह्या-र्थानुमेयत्ववाह्यार्थप्रत्यक्षत्ववादिनः। तत्र बुद्ध्याविविच्यमानानां स्वभा-

घोनावधार्यते । अतोनिरभिलप्यास्तेनिस्स्वभावाश्च दर्शिताः ॥ यथा यथा विचार्य्यन्ते तथा तथेत्यादिन्यायैः गुरुणा सर्वशून्यत्वं बोधितेषु शिष्येषु येगुरूक्तं तथैवाङ्गीकृत्य पर्यनुयोगं नाकुर्वन् ते गुरूक्तस्य श्रद्धयाङ्गी करणादुत्तमाः। ततउपरिपर्यनुयोगकरणादधमाश्चेत्युत्तमाधमत्वयोगात् मध्यमां स्थितिमास्थितामाध्यमिकाः। ये तु वाह्यार्थानां शून्यत्वमङ्गी- कृत्य कथं विज्ञानस्यापि शून्यत्वं जगदान्ध्यप्रसङ्गा । दितिपर्यनुयोगमकुर्वन् ते गुरूक्ताङ्गीकरणस्याचारसंज्ञया तन्मते परिभाषितस्य तत उपरिपर्यनुयोगस्य योग संज्ञा तन्मते परिभाषितस्य च सद्भावात् योगाचाराः । गुरुणा तान् प्रत्यान्तरं विज्ञानमात्रमस्ति तदेव नीलाद्याकारं नतु तद्व्यतिरेकेण वाह्यं नीलादि कमस्ति सहोपलम्भनियमेन नीलादीनां तद्विज्ञानाचाभेदसिद्धेः । भेदे गवाश्ववत्तन्नियमाभावप्रसङ्गात्। तदेव विज्ञानाकारात्मकं नीलादिक- मनादिवासनावशात् वहिर्वदवभासतइति वोधिते कथं सर्वथैव वाह्यार्थस्य शून्यत्वं वाह्यस्य नीलादेरवभासात् । अहमुल्लेखेन विज्ञानस्यान्तरतया इदमुल्लेखेन नीलादेर्वाह्यतया च भेदेऽवभासमाने स होपलम्भनियममात्रस्याप्रयोजकस्याभेदसाधनात्क्षमत्वात् सहत्वोक्त्यैव भेदानुमतेश्चेति यैः पर्यनुयुक्तं तान् प्रति सत्यमस्तिवाह्यं नीलादिकं न तु तत्प्रत्यक्षम् अनुत्पन्नस्याविद्यमानस्य प्रत्यक्षत्वायोगात् । उत्पन्नस्य क्षणिकस्य स्थित्यभावात् । किन्तु उत्पद्यमाननीलादिविज्ञाने स्वाकारं समर्प्य नश्यति । ततोविज्ञानगताकारेणातीतन्नीलादिकमनुमीयते । इति- वोधिते सति तैरित्थंशिष्यप्रश्नानुसारेण कियत्पर्य्यन्तामुपदेशसूत्रं प्रवर्ति ष्यतइतिसूत्रस्यान्ते पृष्टे गुरुणाऽभिहिते भवन्तस्सूत्रस्यान्तंपृष्टवन्तास्सौ त्रान्तिका भवन्त्विति। अतस्ते सौत्रान्तिकाः ततो विज्ञानानुमेयं वाह्य मितीयं विरुद्धाभाषा। तस्यैवविज्ञानस्य तद्विषयप्रत्यक्षत्वात् प्रत्यक्षस्य कस्यचिदप्यर्थस्याभावे व्याप्तिसम्वेदनस्थानाभावेन अनुमानाप्रवृतेश्चेतियैः पर्यनुयुक्तं तेवैभाषिकाः । तान् प्रति वाह्यप्रत्यक्षत्वमप्युपदिष्टम्। एवं यथाश्रुतं स्वस्वप्रश्नोत्तरवाक्यार्थं श्रद्दधानास्ते तथैव मतभेदे नास्थिषत।

बौद्धास्तु सर्वस्यापि प्रपञ्चस्य क्षणिकत्वमभ्युपगच्छन्तस्सर्वै वैनाशिकाः तत्र परमाणुवादिनोवैभाषिकसौत्रान्तिकारेवमाहुः । रूप रसगन्धस्पर्शस्वभावाः पार्थिवाः परमाणवः रूपरसस्पर्शस्वभावाआप्याः रूपस्पर्शस्वभावास्तैजसाः,स्पर्शस्वभावावायवीयाः भूभूधरसमुद्रवाडवान लमहावायवात्मकभूतरूपेण संहन्यते। तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रि

थघटादि विषयरूपभौतिकसङ्घाता भवन्ति । सर्वत्रसङ्घातः । अवय-वसमुदायएव न तद्व्यतिरेकेण अवयविद्रव्यान्तरोत्पत्तिरस्ति तदुत्पत्तौ तत्र चाक्षुषत्वाद्यर्थं पृथग्रूपादिमत्वस्याभ्युपगन्तव्यत्वात् । अवयवरूपादिव्यतिरिक्तस्य चावयविनि रूपादेरनुपलम्भात् । न हि नानावर्णैस्तन्तुभिरारब्धे पटे तन्तुगतनानारूपव्यतिरेकेण पटे रूपान्तरम् । अवयवभेदव्यवस्थितमधुराम्लरसव्यतिरेकेण आम्रफले रसान्तरम् । अतिपक्वाल्पपक्व भागभेदव्यवस्थितपूतिगन्ध सुरभिगन्धव्यतिरेकेण, नागवल्लीवर्णे गन्धान्तरं भागभेद व्यवस्थित कठिनसुकुमारस्पर्शव्यतिरेकेण कदलीदले स्पर्शान्तरं मूलमध्याग्रभाग व्यवस्थित महदल्पालपतरपरिमाणव्यतिरेकेण वृत्ते परिमाणान्तरञ्च उपलभामहे । नानावर्णतन्त्वारब्धेषु पटेषु चित्राख्यं रूपान्तरं कैश्चिदभ्युप गतमितिचेत् तदन्यैर्दूषितमेव । "चित्रंचेदेकता न स्यात् एकञ्चे चित्रता कथम् । एकञ्च तच्चचित्रञ्चे त्यतो चित्रतरं महदिति" । रसादिषु तु अव्याप्य वृत्तित्वं केनापिनाभ्युपगतं तस्मादणुहेतुको भूतसमुदायः भूतहेतुकोभौतिक समुदायइत्येव मणुभूतहेतुकसमुदायद्वय रूपवाह्यार्थः सेयं प्रक्रियाऽनुपपन्ना । यतोऽणुहेतुकभूत समुदायद्वयेऽभ्युपगम्यमाने जगदात्मकसमुदायभावः चेतनस्य तद्विषयव्यवहारश्च न प्राप्नोति । कुतः । अणूनां भूतानाञ्च मेलनार्थं व्यापारं विना हेतुत्वे सदाकार्योत्पत्यापत्तेः । मेलनहेतु व्यापारविशिष्टानामणूनां भूतानाञ्च भूतभौतिकहेतुत्वं वक्तव्यम् । नच तत् क्षणिकत्वे घटते येषां व्यापारावेशः तेषां मेलनक्षणेनष्टत्वात् येषां मेलनं तेषां व्यापारक्षणानुत्पन्नत्वात् । यस्य चेतनस्येन्द्रियसन्निकर्षः तस्य ज्ञानोत्पत्तिकाले, यस्य ज्ञानोत्पत्तिः तस्य हानादिव्यवहारकाले नष्टत्वात् । केषाञ्चिन्मेलनहेतुव्यापारेणान्येषां मेलनाभ्युपगमे कस्यचिदिन्द्रियसन्निकर्षादिनाऽन्यस्य वेदनाभ्युपगमे चाति प्रसङ्गात् ।

नच व्यापारवतां मेलनवताञ्चाणु भूतानामेकसन्तानवर्त्तित्वात् । इन्द्रियसन्निकर्षवतोवेदनादिमतश्चेतनस्य एकसन्तानवर्त्तित्वाच्चानतिप्रसङ्गः । क्षणिकसन्तानव्यतिरिक्तस्य स्थिरस्य सन्तानस्य क्षणिकत्ववादिभिरनभ्युपगमात् । नचा स्थिरेष्वपिस्थिरत्वभ्रान्तिरूपाऽविद्याऽस्ति साच रागादिहेतुः । रागादिपार वश्यञ्चविद्याहेतुरिति अविद्यारागादेः प्रवाहस्तावदनुभवसिद्धः । तस्य शरीरेन्द्रियविषयादि रूप समुदायभावाभावे अनुपपत्तेः । तदाक्षिप्त समुदायसिद्धिरप्रतिक्षेप्येति चेन्न ।

कारणाभावेन समुदाय भावानुपपत्तावुक्तायां कारणतया हि

तदुपपत्तिः समर्थनीया न चाविद्यारागादिः परमाण्वादिव्यापारनि र पेक्षस्समुदायहेतुः शुक्तिरजतभ्रान्तिरूपाविद्यारजतरागादिनाऽपि शुक्तेः शुक्तिरूपसमुदायताप्रहाणेन रजतरूपसमुदायतापत्तिप्रसङ्गात् । अन्य स्थाविद्ययाऽन्यस्य रागादिजननेऽतिप्रसङ्गेनाविद्यारागादि प्रवाहानुप पत्तेश्च । स्यादेतदन्यस्य कर्मणा अन्यत्र संयोगजननेऽतिप्रसङ्ग इतिदोषे न बौद्धमते प्रसरति नहितैः क्षणिकेषु परमाण्वादिषु कर्मसंयोगावभ्युप गम्येते । किन्तुदेशान्तरस्थेन देशान्तरस्थस्योत्पादः सकर्मप्रत्ययस्य लम्बनं विप्रकृष्टदेशेन सन्निकृष्ट देशस्योत्पादः ससंयोग प्रत्ययस्य । तत्र यथा न्यायमते नानादिक्प्रभवशब्दमूलकशब्दपरम्पराजननक्रमेण बहूनां शब्दानां मेलने सति कोलाहलप्रत्ययः ॥ एवं बहूनां परमाणून तथा पुञ्जीभावे सति भूभूधरादि प्रत्ययः दृष्टं ह्येकैकस्य दृ दृश्यत्वाभावेऽपि बहूनां केशानां कबर्यादिरूपेण पुञ्जीभावे सति तत्स समुदायस्य दृश्यत्वंनचादृश्य समुदायस्यादृश्यत्वनियमः । अप्रयोजकत्वात् एकैकस्य तन्तोः स्त्यवनाकर्षणशक्त्यभावेऽपि तत्समुदायस्य तदाकर्षण शक्तिवत् । एकैकस्य परमाणोरदृश्यत्वेपि तत्समुदायस्य दृश्यत्वोपपत्तेः तदाहु "प्रत्येकं दृष्टययोग्यत्वेप्यणूनां दृश्यता भवेत् । मेलने सति तन्तून नौकाद्या कृष्टशक्ति वदिति" । तस्मान्नहेत्वसम्भवेन समुदाय भावानुपप त्तिरितिचेत् एवमपि हेतुहेतुमद्भावोनोपपद्यते । उत्तरघटक्षणोत्पत्ति दशायां पूर्वघटक्षणस्य विनष्टत्वेन तस्योत्तरघटक्षणं प्रति हेतुत्वानु- पपत्तेः । बौद्धमते वस्तुतः कालोनास्ति उद्यन्नेव स्वरसभङ्गुरोघटादि क्षणकल्पनामात्रनिमित्तं भवति ।

स च घटादिः स्वोदयविनाशपरिकल्पितक्षणवत्वात् क्षणिक इत्युपचर्य्यते वपुष्मान् शिलापुत्रकइति वदिति तेषां प्रक्रिया । अतस्तन्म तमर्यादया घटएवक्षण इति सामानाधिकरण्येन घटः क्षणइति तद् ग्रन्थेषु व्यवहारः । ननु नष्टस्य हेतुत्वा सम्भवः । उक्तं हि तेषां तत्व- संग्रहे—भावानां कारणत्वं न नष्टतया अवस्थिततयावा । अपि तु भूततया । भूतश्चस्थितोवा भवतु नष्टोवा । कारणान्तरपौष्कल्ये सति स्वकार्यमविलम्बेन करोतीति । दृष्टं हि बीजकृतदोहलसंस्कारस्य कलान्तरभाविपुष्पफलादिगतवर्णरसहेतुत्वं तस्मा न्नष्टत्वेन हेतुत्वनापत्ति रितिचेत् मैवम् । यदि कार्यदशायामसदपि यदाकदाचित्पूर्वसत्वमात्रेण- हेतुस्स्यात् तदा सर्वत्र-सर्वस्याप्युत्पत्तिस्स्यात् । घटोत्पत्तिदशायामङ्कुरा- देरपि उत्पत्तिस्स्यात् ॥ अनादौकालप्रवाहे नष्टस्य बीजादेस्सत्वात् । नष्ट

त्रतत्कर्षणादिसहकार्यभावश्शङ्कनीयः तस्यापि नष्टस्य पूर्वसत्वात् दोहलद्रव्याणान्तु यावत्कार्योत्पत्तिसूक्ष्मरूपेणानुवृत्तिरस्त्येव वृक्षायुर्वेदादिदोहलशास्त्रप्रसिद्धा। स्यादेतच्चिरनष्टस्य निर्व्यापारस्य माभूद्धेतुत्वं स्वरूपेण स्वव्यापाररूपेण वा पूर्वक्षणवर्तिनस्तुस्यात् । अवश्यञ्च कारणस्य पूर्ववृत्तित्वं वाच्यम् । तेनैव कारणत्वोपपत्तौ किंकार्यकालवृतित्वेन । लोके च विनष्टस्य बीजस्याङ्कुरे क्षीरस्य दध्नि मृत्पिण्डस्यघटे च कारणत्वं दृष्टं दितुकारणस्यकार्यकालवृत्तित्वमपेक्ष्येततदाबीजादीनांविनाशोङ्कुरादिकारणं पूर्वघटक्षणविनाश उत्तरघटक्षण कारणमित्यस्तिबतिचेत्।यद्येवं कार्यकालासतः कारणत्वमिष्यते। अधिपतिसहकार्यालम्बनसमनतरप्रत्ययाः चत्वारः चित्तचैत्त्यहेतवइति बौद्धानां प्रतिज्ञा । तथाहि बुद्धसूत्रम् चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्याउत्पद्यन्तइति । अधिपतिरिन्द्रियं तद्विज्ञानस्य रूपादिषु पञ्चषु एकैकमात्रविषयत्वनियामकम् । नियामकश्च लोके अधिपतिरुच्यते । सहकारि आलोकादिकम् । आलम्बनं घटादिकम् । समनन्तरप्रत्ययः पूर्वज्ञानम् । एतान् चतुर्विधान् हेतून् प्राप्य चित्तं ज्ञानं चैत्यास्तद्भिन्नास्सुखादयश्च जायन्तइतिप्रतिज्ञार्थः । इयं हीयेत प्रतिज्ञा । पूर्वक्षणवृतित्वाभावे कारणत्वायोगात् । उत्तरक्षणवृतित्वाभावेवर्तमानत्वग्राहिप्रत्यक्षविषयत्वायोगात् । अन्यथा कारणस्य विषयतासिद्ध्यर्थंतस्यापि कार्योत्पत्तिक्षणे स्थित्यभ्युपगमे घटद्वये यौगपद्यं प्रसज्यते । अथैतद्दोषपरिजिहीर्षया कारणस्य कार्योत्पतिक्षणे स्थितिमनभ्युपगम्य कारणक्षणएव तस्य विषयत्वमभ्युपगम्येत । तदा संयोगज्ञानयोर्हेतुर्हेतुमतोः यौगपद्यं स्यात् । एतेन पूर्वक्षणविनाशस्योत्तरक्षणकारणत्वमपिनिरस्तम् । तथासत्यधिपत्यादिकारणत्वप्रतिज्ञाविरोधात् ।

किञ्च पराभिमतोनिरोधाख्योविनाशएव न सम्भवति । एवं हि कल्पयन्ति । सर्वत्रनिरन्वयो निरनुवृत्तिकएवसनिरोधशब्देनोच्यते । स द्विविधः स्थूलःसूक्ष्मश्च । मुद्गरपातानन्तरं सर्वैरुपलभ्यमानोघटनाशः स्थूलः प्रतिसंख्यानिरोधः,प्रतिसंख्या विषयत्व प्रतिकूला दसत्वग्राहिणीलौकिकानांबुद्धिः, तद्विपरीतः । अप्रतिसंख्यानिरोध सूक्ष्मः लौकिकोपलब्ध्ययोग्योयुक्त्या साध्यमानः प्रतिक्षणविनाशइति । द्विविधोऽप्ययं निरन्वयविनाशो न सम्भाति अविच्छेदात् । सदैवाविच्छिन्नतयाऽनुवर्त्तमानस्य द्रव्यस्य पूर्वावस्था प्रहाणोत्तरावस्था भ्यामेव नाशोत्पतिव्यवहारः। नतुद्रव्यस्यक्वचिदपिनिरन्वयनाशोऽस्तीइत्यारम्भणाधिकरणेसमर्थितत्वात् । अतोविनाशस्य कारणत्वंन सम्भवति । आकाशं

द्वौ निरोधौ च नित्यं त्रयमसंस्कृतम् ॥ बुद्धिवैध्यं त्रयादन्यत् संस्कृ
क्षणिकञ्च तत् । इति बौद्धैः संस्कृतं कार्यमेवानित्यम् । असंस्कृतमच
माकाशादित्रयंनित्यमिति नित्यत्वेनाभ्युपगतस्य निरोधद्वयस्य कार
त्वानुपपत्तेश्च । अविच्छेदेनानुवर्तमानस्य कारणत्वे सदा सर्वत्र का
त्पातिप्रसङ्गात् । तत्सहकारित्वेनाभिमतानामपि निरोधद्वयस्य नित्यत्वा
किञ्चनिरोधद्वयमाकाशञ्चेति त्रयमवस्थात्मकंतुच्छमितिबौद्धामन्य
तत्र तुच्छत्वात् कथं जगदुत्पत्तिः तुच्छादुत्पत्तौ तुच्छस्य निर्विशेष
कारणविशेषकृतकार्यविशेषव्यवस्थित्यसम्भवात् । घटक्षणानन्तरं सर्व
जगतउत्पत्तिस्स्यात् । तुच्छादुत्पद्यमानञ्चकार्यं च तुच्छमेवस्यात् । त
सद्रूपतया प्रतीतिर्नस्यात् । सुवर्णरुचकादिन्यायेन कारणानुसारित्व
कार्यस्य । अपिच आकशमपितुच्छमितिबौद्धैरुच्यते । तत्कथमुपप
प्रतीयते हि स्पष्टमाकाशम् अत्र श्येनः पतति अत्र गृध्रइति श्येनादि
नदेशत्वेन नत्वियं प्रतीतिश्चन्द्रसूर्यालोकविषयत्वेनोपपद्यते महान्धकारे ग
तइहपततीति प्रतीतिः खद्योतस्याकाशविषयत्वेनोपपद्यते इह चन्द्रइहर
इतिप्रतीतिरपितत्तदालोकविषयत्वेनोपपद्यते तदाश्रितस्याप्यालोकस्य
रूपसम्बन्धविशेषेण तदाधारतया प्रतीत्युपपद्यते वने तिलकइति
समुदायरूपस्य वनस्य स्वरूपसम्बन्धविशेषेण तिलकवृक्षाधारत्वप्रती
दर्शनात् आकाशस्यापि श्येनाधारता स्वरूपसम्बन्धविशेषेणैवोप
दनीया निविडमूर्तद्रव्यस्य भूतलादेरिव तस्य मुख्यतया गुरुद्रव्याधार
सम्भवात् किञ्च इहपक्षी नेहपक्षीति आधारत्वानाधारत्वप्रतीतिद्व
अवयवभेदावच्छेदेन शक्यमुपपादयितुमालोके नत्वाकाशे
निरवयवत्वात् नचाकाशेऽपि तत्तदधःक्षितिभागभेदएवअवच्छेदकभेद
दितिवाच्यम् ऊर्ध्वाधरदेशयोः इहपक्षीनेहपक्षीतिप्रतीत्योस्तदभा
तस्माच्छेयनपतनादिप्रतीतेरालोकविषयत्वसम्भवात् आकशे सा
प्रमाणमितिचेदुच्यते अस्ति तावत् प्राग्भागे श्येनः पतति प्रत्यग्भागे
इत्यादिप्रतीतिः तस्यां प्राग्देशादिरूपाधारः प्रतीयते सएवाक
तद्व्यतिरेकेण दिशोऽनङ्गीकारात् तस्यैव तत्तदुपाधिभेदेन प्रागादिरूप
पपत्तेः नच वाच्यं तत्तदुपाधिसम्बन्धेनालोकएव प्राग्भागादिरूपोऽस्ति
प्राग्भागे चन्द्रालोकः प्रत्यग्भागेतम इत्यादिप्रतीतिष्वपि आलोकादेर
धारत्वेन प्रागादिदेश प्रतीतेः एवं तर्हि प्राग्भागेऽवकाशोऽस्तीत्यादिव्यव
आकाशात्मका दाकाशादप्यन्यस्तदाधारोदेशस्स्यादितिचेन्न आकाशश
निविडमूर्त द्रव्यावस्थानविरोधिमूर्त्तद्रव्यान्तरनिरोधाभावपरत्वात् ।

अतएव । प्राग्भागेऽवकाशोऽस्ति न प्रत्यग्भागे भुञ्जानैर्निविडइति क्वचिद्देश अवकाशनिषेधोऽपि दृश्यते। नह्याकाशस्य तत्र निषेधः सम्भवति । सर्वगतत्वात् । असर्वगतत्वे चावरणापायेऽप्यवकाशाभावप्रसङ्गात् । न हि असन्नाकाशः एवञ्च मूर्त्तद्रव्याभाव एवावकाशः तदुपाध्यवच्छिन्नः प्रागादिव्यवहारालम्बनमस्तीत्यपि शङ्का निरस्ता तस्य देशाधेयत्वेन प्रतीतेः । प्रग्भागेऽवकाशो नास्ति तत्र नीरन्ध्रमासते द्विजा इति। आवरणाभावरूपावकाशप्रतिषेधेऽपि प्रागादिदेशसत्वव्यवहाराच्च । नचैवमावरणाभावरूपावकाशस्येव प्राग्भागादिरूपदेशस्यापि देशाधेयत्वेन व्यवहारोऽस्ति । येन ततोऽपि व्यतिरिक्तोदेशस्सिध्येत् । अयं प्राग्देश इत्यादिरेवहि व्यवहारोऽस्ति। नत्वस्मिन् देशे प्राग्देश इत्यादिरूपः । इहाकाशइत्यपि लौकिकप्रतीतिस्तद्व्यतिरिक्तोदेशस्स्यादितिचेन्न लोकानामाकाशप्रतीतेरुपरिपरितश्चावाङ्मुखेन्द्रनीलमहाकटाहवदवभासमाने मेरुशिखररत्नप्रभा विशेषत्वेनागमसिद्धे नीलद्रव्य एव व्यवस्थितत्वात् तस्य दिग्विशेषाधेयत्वेन प्रतीत्यविरोधात् । देशरूपस्याकाशस्य ( इदानीमिहघट ) इत्यादिप्रतीतिषु कालवत् पदार्थविषयत्वेन भानं बिना क्वचिदपि लौकिकप्रतीतौ स्वातंत्र्येण भानानङ्गीकारात् । तस्मादाकाशस्य प्रामाणिकत्वात् आकाशं निरोधद्वयमिति तुच्छत्रयमेवनित्यं सद्रूपमन्यत्सर्वं क्षणिकमित्येतदयुक्तम् । ननु क्षणिकत्वं प्रामाणिकं कथं प्रत्याख्यायते । प्रत्यक्षं हि वर्त्तमानवस्तुविषयम्। अवर्त्तमानादतीतात् पूर्वक्षण वर्त्तिनोऽनागता च्चोत्तर क्षणवर्त्तिनस्स्वविषयं व्यावृतमवगमयति । यथा ( नीलो घट इति ) नैल्यविशिष्टप्रत्यक्षमरुणादिव्यावृत्तं घटमवगमयतीतिचेदुच्यते उदाहृतमभिज्ञानं घटस्य वर्त्तमानकालसम्बन्धमिव सोऽयं घट इतिप्रत्यभिज्ञानं तस्यावर्त्तमानकालसम्बन्धमपि विषयीकरोति । अतस्तदनुसारादेकस्य वर्त्तमानावर्त्तमानकालद्वयसम्बन्धसिद्धौ क्रमिकत्वेन कालद्वयस्याविरोधोपपत्तेश्च वर्त्तमानकालसम्बन्धविषयंज्ञानमयोगव्यवच्छेदमवगमयेत् नान्ययोगव्यवच्छेदं स्वावच्छेदेन वाऽन्ययोग व्यवच्छेदं नतु सर्वात्मना । अतएव चित्रपटे नैल्यज्ञानं नानीलव्यावृत्तिं गमयति। प्रदेशविशेषावच्छेदेन वा तां गमयति नहि धर्मयोरविरोधो धर्मिभेदेनैवोपपादनीयः । अपितु सामानधिकरण्यप्रतीत्यनुदयेनापि । तदुदये तु स्वमनीषामात्रकल्पितोविरोधो न प्रामाणिकानां हृदयंगमः ननु स्मृति प्रत्यक्षयोः क्लृप्तकारणाभ्यां सइति अयंघट इति च स्मृत्यनुभव

रूपं ज्ञानद्वयमेव भवितु मर्हति । न प्रत्यभिज्ञारूपमेकंज्ञानमितिचेन्न
तदिदं मया निहितं रजतमिति तदर्थिन इदमर्थे प्रवृत्तिदर्शनेन प्रत्यभि
ज्ञानस्यैकज्ञानत्वसिद्धौ तत्रकार्यबलात् तत्र संस्कारप्रत्यासत्तिसहि
मिन्द्रियं कारण मिति कल्पनोपपत्तेः । ननु तथापि प्रत्यभिज्ञाभ्रान्ति
रूपैव क्रमसंवर्धमानेषु तरुगुल्मलतादिषु, सन्तत्यमानावयवोप
यापचयवत्सु गिरिसमुद्रादिष्वत्यन्तविलक्षरोषु बालवार्धक्याप
शरीरेष्वपि दृश्यते अतःकूटसारिणी प्रत्यभिज्ञा न क्वापि प्रमाणमि
चेन्न । उदाहृतप्रत्यभिज्ञानस्यावस्थाभेदेप्यवस्थावद्द्रव्यैक्यविषयत्वे
प्रामाण्योपपत्तेः । नहि प्रत्यभिज्ञानस्यावस्थैक्यं विषयः येनाप्राम
ण्यं भवेत् किन्त्ववस्थावद्द्रव्यैक्यमेव नचागमापाय्यवस्थाव्यतिरेके
नेकावस्थानुयायिद्रव्यमेवनास्तीतिवाच्यम् तस्मिन्नन्ततउदाहृतप्रत्यभि
ज्ञानमेव प्रामाण्यसिध्या तत्प्रत्याख्यानायोगात् ज्वालालूनपुन
र्जातकेशनखादिप्रत्यभिज्ञानावस्थासादृश्यनिबन्धन भ्रान्तित्वकल्पनम
न युक्तम् बाधितज्ञानदृष्टान्तेनाबाधितज्ञानानामप्यप्रामाण्यकल्प
प्रमाणेन वस्तुसिद्धिमात्रस्य लोपप्रसङ्गात् एतेन यद्बौद्धा वदन्ति स्मृति
पूर्वानुभूतेर्थे दर्शनं वार्तमानिके तयोरत्यन्तभेदेच केनाभेदः प्रतीयताम
रूपशक्त्यादिभेदेन बालाद्वृद्धोऽतिभेदवान् परस्मिन् पूर्वरूप
न लेशोऽप्युपलभ्यते । परस्यापि न पूर्वत्र कथमेकन्तु तद्भवे
अवस्थानामयंभेदो नावस्थावतो यदि अवस्था एव दृश्यन्ते न स्वप्ने
ततः परमिति ।

नन्विदं सर्वं क्षणिकत्वनिराकरणहेतुजालं वैभाषिकमत
न सौत्रान्तिकमते प्रवर्तते तत्र यत्प्रत्यक्षविषयस्य तत्कारणत्वं नस्य
दिति प्रतिज्ञाविरोधापादनं तत्तावन्न प्रवर्त्तते। सा हि प्रतिज्ञा बाह्या
प्रत्यक्षवादिनामेव । यच्च क्षणिकत्वकल्पनस्य प्रत्यभिज्ञाप्रत्यक्षेण
बाधवचनं तदपि न प्रवर्त्तते । बाह्यार्थेषु प्रत्यक्षप्रत्यभिज्ञायामसि
एवञ्च घटादिकं क्षणिकमर्थक्रियाकारित्वात् शरीरवदिति बौद्धा
क्षणिकत्वानुमानमपि प्रत्यभिज्ञानबाधासिद्धया निरुपप्लवम् । अस्ति
चात्र विपक्षबाधकतर्कस्सत्वोच्छित्तिप्रसङ्गः । अर्थक्रियाकार्यत्वमे
सत्वं, न ततोन्यज्जात्यादिरूपं प्रमाणाभावात् । तच्च स्थायित्वपक्षे
सम्भवति। तथाहि स्थायी भावः स्वीयामर्थक्रियां क्रमेण कुर्यात् युग
पद्वा आद्ये कालान्तर भाविनीं प्रत्यपि इदानीं समर्थवान्नवा प्रथ
मार्यदिदानीमेव कुर्यात्। समर्थस्य क्षेपायोगात्। द्वितीये कालान्तरेऽ

न कुर्यात् । नहीदानीमसमर्थः कालान्तरे समर्थो भवति । युगपदिति पक्षे त्विदानी मेव कर्तव्यस्य सर्वस्य कृतत्वात् कालान्तरे तस्यासत्वं भवेत् ननु इह क्षणिकत्वानुमाने अस्ति प्रबलः प्रतिकूलतर्कः । क्षणिकत्वे हि त्वदुक्तविपक्षबाधकतर्कोऽपि न प्रवर्त्तते । तदुपयोग्यापाद्यापादकभूयस्सहचारदर्शनो पाध्यभावावधारण व्याप्ति ग्रहणादीनामेका धिकरण्यनियमात् । मैवम् प्रागुपदर्शितव्याप्तिग्रहणादीनामैकाधिकरण्यनियमे क्षणिकत्ववादिनामसंप्रतिपत्तेः । अतिप्रसङ्गशङ्का तु कार्यकारणभावस्य नियामकत्वेन निवारणीया । चैत्रमैत्रादयोहि प्रत्येकं कार्यकारणभावापन्ननिरन्तरसन्तत्यमानालयविज्ञानक्षणनिचयात्मकाः तस्मात्सौत्रान्तिकपक्षे न कोपि दोष इत्यधिकया प्रत्यवतिष्ठमानानां सौत्रान्तिकानां मतमित्थं ज्ञानगतैर्नीलाद्याकारैः बाह्यार्थगतास्तेऽनुमीयन्ते । इन्द्रिय सन्निकृष्टेन नीलाद्यर्थेन जायमानं हि ज्ञानं स्वयमप्यर्थवन्नीलाद्याकारं भवति । तज्ज्ञानं स्वप्रकाशतया स्वात्मानं विषयी कुर्वन् स्वगतं नीलाद्याकारमपि विषयीकारोतीति ज्ञानस्य नीलादिषु नापरोक्षयानुभवः नीलाद्यर्थिनो बहिः प्रवृत्तिस्तु नापरोक्षज्ञानात् किंतु तदनन्तरभाविन आनुमानिकज्ञानात् ।

यथा वायुनिषेवणार्थिनश्शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्तिः न चाक्षुषशाखाचलनज्ञानात् किन्तु तल्लिङ्गवायुसञ्चारविषयानुमानिकज्ञानादिति तत्रेदं दूषणम् । इन्द्रियसन्निकृष्टभावक्षणानन्तरक्षणे हि ज्ञानं जायते । तत्र तस्य भावक्षणस्य स्वधर्मसङ्क्रमणनिमित्तत्वं न युज्यते । असतः कुसुमादेः स्फटिकादिषु स्वधर्मसङ्क्रमणनिमित्तत्वादर्शनात् । तथापि नीलादिसङ्क्रमणाभ्युपगमे तद्गतं पुरो वर्त्तित्व नेदीयस्त्वदवीयस्त्वजडत्वादिकमपि सङ्क्रामति न वा। सङ्क्रामति चेत् आन्तरत्वज्ञानत्वादेस्तद्विरोधिनोऽवभासो न स्यात्। स्फाटिके लौहित्यसङ्क्रामतौ शौक्ल्यस्यैव । अथ न सङ्क्रामति दर्पणे मुखगत प्राङ्मुखत्वनेदीयस्त्वादिवत् तदा लिङ्गाभावात्तदवभासो न स्यात् । अतः क्षणिकवादे बाह्यार्थ प्रत्यक्षस्येव तदनुमानस्यासम्भवात् । अतस्तेषां व्यवहारसिध्यर्थं स्थायित्व मेवाङ्गीकरणीयम् । क्षणिकत्वेन भावानां यानीष्टप्राप्त्यनिष्ट परिहारार्थानि लौकिकानि विहितानि च कर्माणि तेषां यः कर्त्ता स नतत्फलभोक्ता किन्त्वन्य एवेत्यापत्तेरुदासीनानामपि फलसिद्धिस्स्यात् । कस्यापि कर्मसु प्रवृत्तिर्नस्यात् । भाविभोक्तैक्यभ्रमात् प्रवृत्तिरितिचेन्न । क्षणिकत्वनिश्चयवतः प्रवृत्त्यनुपपत्तेः । ननु भेदग्रहेऽपि

पुत्रपौत्रादिपरम्परानुभाव्यफलेच्छयाकर्मसु प्रवृतिदर्शनात्तथेहापि प्रवृत्ति
स्यात् । तत्र कार्यकारणभावस्यनियामकत्वक्लृप्तेरितिचेत्तर्हि पि
कृतानां सर्वेषां कर्मणां फलं पित्रानुभवादिफलस्मरणादिकञ्च पु
पौत्रादिपरम्परायां भवेत् । कार्यकारणभावस्य स्वकीयविज्ञानसन्त
इव तस्यामपि सत्वात् ।

तस्मात्कार्यकारणभावस्य नियामकत्वात्फलादिव्यवस्थासिद्ध
प्रत्यभिज्ञाप्रामाण्यनिर्वाहाय च आत्मनोऽन्येषाञ्च स्थैर्य्यमेवाङ्गीकार्य
क्षणिकत्वानुमानस्य विपक्षबाधकतर्कस्तु न प्रवर्त्तते । समर्थस्यापि स
कारिसमवधानक्रमात् कार्यक्रमोपपत्तोरित्यादिक्षणिकत्वनिराकर
प्रपञ्चोऽन्यत्र द्रष्टव्यः । सम्प्रति योगाचारमतं निरूप्यते । क्षणिकत्व
पक्षे नीलाद्यर्थानां प्रत्यक्षत्वमनुमेयत्वं वा न घटते । इति वैभाषिक सौ
त्रान्तिकमतयोरभिहितं दूषणं न योगाचारमते प्रवर्त्तते । नीलाद्यर्था
मान्तरविज्ञानरूपत्वेन स्वप्रकाशै स्तैरेवतत्प्रत्यक्षीकरणसम्भवा
योगाचारमते घटपटादिज्ञानानां तत्तदर्थासाधारण्यं तत्तादर्थसारू
मन्तरेण न घटत इत्यवश्यं ज्ञानेऽर्थसरूपं रूपमास्थेयम् । तावतै
सर्वव्यवहारोपपत्तेः । ज्ञानाकारनीलादि व्यतिरेकेण वाह्यार्थ कल्पना
नीलादीनां विज्ञानाकारत्वे च नीलादिकं ज्ञानाभिन्नं भासमानत्वा
ज्ञानसहोपलम्भनियतत्वात् ज्ञानवदित्यनुमानञ्च । न च सहत्वस्य भे
गर्भत्वाद् द्वितीयोहेतुर्विरुद्ध इति वाच्यम् । ज्ञानोपलम्भव्याप्योप
म्भविषयत्वस्य तदर्थत्वात् । तदविनाभावरूपस्य च व्याप्यत
स्याभेदेपिसम्भवात् । नचाभेदे इदं जानामीति क्रियाकर्मभाव
रूपभेदावभासविरोधः तस्य द्विचन्द्रज्ञानवद्भ्रान्तित्वात् । तथाहुः
सहोपलम्भनियमादभेदोभेदतद्धियोः । भेदस्तुभ्रांतिविज्ञा
दृश्यश्चन्द्र इवाद्वय इति । वाह्यस्य नीलादेः कथमान्तरज्ञानभेदावभा
सो भ्रम इति चेत् वाह्यत्वाभावेऽपि भ्रमएव उपरि स्थितानां नक्षत्रा
दीनामुच्चतां भूमिस्थत्वावभासात् । एतेन अहं जानामीतिकर्तृकर्मभाव
न भेदावभासोऽपि व्याख्यातः । तदप्याहुः । अविभागोऽपि बुद्ध्यात्म
विपर्यासितदर्शनैः ग्राह्यग्राहकसंवित्तिभेदवानिवलक्ष्यते ॥ इति ॥ न
वस्तुतएकस्य ज्ञानस्य अहमिदंजानामीति कर्तृकर्मक्रियात्मतया भेदेन
स्फुरणं कथमिति चेन्न । पूर्वपूर्ववासना वशात् । घटाकारज्ञानोत्पत्यनन्त

कपालाकारज्ञानोत्पत्तिस्तु वासनावैचित्र्यादिति। इदमयुक्तम्। कर्तुः क्रियाकर्मतया वाह्यत्वेन प्रत्यक्षायां नीलाद्युपलब्धौ जाग्रत्यां तेषां ज्ञान भेदानुमानानामनुत्थानात्। नच वाच्यं वाह्यं नीलादिकमुपयद्भिरपि ज्ञानानां नीलाद्याकारत्वमनुभवसिद्धमङ्गीकार्यम्। तेनैव सर्वव्यवहारोपपत्तौ किं वाह्यार्थकल्पनया नहि नीलाद्याकारद्वयमुपलभ्यत इति। यतोनीलाद्यर्थविशेषविषयेच्छादिव्यवहारानुगुण्यमेव ज्ञानस्य नीलाद्याकारः। न तु वाह्यार्थस्येव मुख्यं नीलाद्याकारत्वमस्ति। नीलशीतोष्णादि समूहालम्बनानां परस्परविरुद्धानेकरूपत्वापत्तेः। स्वप्नदृष्टान्तेन ज्ञानानां वाह्यार्थशून्यत्वकल्पनमपि न युक्तम्। वाधावाधाभ्यां स्वप्न जागरितज्ञानयोर्वैधर्म्यात्। अर्थशून्यस्य ज्ञानस्य क्वचिदप्यनुपलब्ध्या स्वप्नज्ञानानामपि तादात्विकविषयत्वाच्च वासनावैचित्र्यात् विचित्रज्ञानोदयसमर्थनमप्ययुक्तं निरन्वयविनाशवादे वासनाधानस्याप्यसम्भवात्॥ इति विज्ञानांमात्रास्तित्ववादियोगाचारमतनिराकरणम्। तदप्यपलपतां माध्यमिकानां मतं निराक्रियते। ते खलुएवमाहुः। नेष्टन्तदपिधीराणां विज्ञानं पारमार्थिकम्। एकानेकस्वभावेन वियोगाद्वियदब्जवत्। विज्ञानानामपि नीलपीतशीतोष्णाद्येकानेकस्वभावत्वं विकल्पदौस्थ्यान्नपरमार्थसत्। अतस्तुच्छत्वमेवतत्वमिति इदमयुक्तम् तुच्छत्वप्रतिजानानस्य तत्तुच्छत्वं सत्वरूपमिति वा असत्वरूपमिति वा प्रकारान्तरमिति वा अभिप्रायः। सर्वथा पि नसम्भवति लोके सत्वासत्वयोः नित्यानुवर्तमानद्रव्यावस्थाविशेषत्वेनान्यत्रप्रतिपादिततया तुच्छत्वं सत्वमेवेति वा असत्वमेवेतिवा प्रकारान्तरमिति वा उपपादनासम्भवात्। सर्वेष्वपि कार्येषु सतएवकारणत्वेन केवलादसतः प्रकारान्तरापन्नाद्वा कार्योपपत्त्यसम्भवात्। एतेनाभावात्मकत्वमेव तुच्छत्वं चतुष्कोटिविनिर्मुक्तत्वं वा तुच्छत्वम्। न सन्नासन्नसदसत् नचाप्यनुभयात्मकचतुष्कोटिविनिर्मुक्तं तत्वं माध्यमिको विदुरितिबचनादिति निरस्तम्। भावातिरिक्ताभावानंगीकारेण अभावकारणतोक्तेः सत्कारणवादएवपर्यवसानात्। सद्बुद्धिशब्दवत् सत्वनिषेधादिबुद्धिशब्दानामपि देशकालपरिच्छिन्नवस्तुविषयत्वेन ततस्तुच्छत्वासिद्धेः। इदमिदानीमस्ति इदमेवं रूपं भवतीति सत्वबुद्धिशब्दयोरपि देशकालवस्तुपरिच्छिन्नसत्वविषयत्वेनैव लोके प्रसिद्धतयाक्वचिदपिनिरुपाधिकनिषेधासिद्धेरिति माध्यमिकमत निराकरणम्। निरस्तास्सौगताः। जैना निरस्यन्ते ते किल मन्यन्ते जीवधर्माधर्म पुद्गलकालाकाशाख्यषड्द्रव्यात्मकं जगत् निरीश्वरम्। तत्र

जीवाः वद्धयोगसिद्धमुक्तास्त्रिविधाः । धर्मो गतिमतां गतिहेतुर्व्या
द्रव्यविशेषः । अधर्मः अधर्मस्थितिहेतुर्व्यापीद्रव्यविशे
पुद्गलस्त्वणुभूधरसमुद्रादिः । अभूदस्ति भविष्यतीतिव्यवह
हेतुरणुद्रव्यविशेषः कालः आकाशोऽप्येकः किन्त्वनन्तप्रदे
इति । पुनश्चापरमपि संग्रहं कुर्वन्ति जीवाजीवास्त्रववन्ध निर्जर सम्
मोक्षा इति । जीवा उक्ताः । अजीवो जीवभोग्यं सर्वं वस्तुजातम् । अ
स्त्रवत्यनेन जीवा घटादिज्ञानरूपेणेत्यास्त्रव इन्द्रियसङ्घातः। केचित्त
स्त्रवति जीवे गच्छतिसति सर्वत्रानुगच्छतीति कर्म वन्ध आस्त्रवइत्य
तदाह जिनदत्तः। आस्रवः कर्मणां बन्धेनिर्जरस्तद्विमोचनमिति
वन्धःघातिकर्मचतुष्काघातिकर्मचतुष्कभेदेनाष्टविधः । तत्राद्यचतु
जीवस्य ज्ञानदर्शनसुखवीर्यगुणानां मोक्षदशायामाविर्भविष्यतां प्र
घातकं प्रवाहानादिरूपम् । द्वितीयचतुष्कं शरीरसंस्थानतदभिम
तत्स्थिततत्प्रयुक्तसुखादिनिमित्तपुण्यमिश्रितत्वात् पुण्यरूप
निर्जरो निश्शेषं जीर्यत्यनेन कामक्रोधादिरितिव्युत्पत्या केशोल्लुञ्च
तप्तशिलारोहणादिरूपं तपः। सम्वर इन्द्रियनिरोधः । स्वाभाविक
स्वरूपाविर्भावो मोक्षः। केचित्तु सततोर्ध्वगमनं मोक्षः वन्धमुक्त
ह्यूर्ध्वगमनं स्वभावः । यथा पञ्जरमुक्तशुकस्य,यथा निर्भिन्नस्य पा
तैरण्डवीजस्य, यथावा दृढ़पङ्कलिप्तस्य जलनिमज्जनप्रक्षीणपङ्कले
शुष्कालावुफलस्य । इह त्वनादिकालप्रवृत्तबन्धविगमात् सततोर्ध्वग
सर्वेषां लोकानामुपरिस्थितो निरवधिरालोकाकाशस्सततोर्ध्व गमनावक
इत्याहुः । तथा पठन्ति । गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रह
अद्यापि न निवर्तन्ते त्वालोकाकाशमार्गगा इति । अपरेत्वाविर्भूत
नादि गुणस्योपरिदेशावस्थानं मोक्ष इत्याहुः । सर्वमेतद्वस्तुजातं
भङ्गीनयेन योजयन्ति । स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति स्याद
व्यम् । स्यादस्तिचावक्तव्यञ्चेति । अत्र सत्वासत्वसदसत्वसद
लक्षणत्वरूपानिर्वचनीयत्वविषयाश्चत्वारः प्रकाराः । पुनश्चानिर्वच
यत्वेन सह सत्वासत्व सदसत्व संयोजनेन त्रयः प्रकाराः जैनैरीषत्स्व
कृतेषु सर्वेष्वपि पदार्थेषु वर्ण्यन्ते ।

स्याच्छब्द ईषदर्थ इतिकेचित् । अनैकान्त्यार्थ इत्यन्ये । उभयथ
तिङन्तप्रतिरूपकमव्ययम् । सत्वे प्रदर्शितः सप्तभङ्गीनयः स्यान्नि
स्यादनित्यमित्यादिरूपेण नित्यत्वभिन्नत्वादिधर्मेष्वपि समानइति
तदिदं जैनमतमपि न युक्तम् । एकस्मिन् विनोपाधिभेदं विरुद्धानेकधर्म
मावेशासम्भवात् । नत्वेकस्मिन्नपि देशकालाद्य पाधिभेदेन विरुद्धध

समावेशोऽभ्युपगम्यते। स न तत्रोपाधिभेदः सम्भवतीत्येतावताऽभ्युपगम्यते। किन्तु प्रमाणवत्त्वेनातएव पिण्डत्वघटत्वयोः कालोपाधिभेदेन समावेशमभ्युपगच्छतापि सिद्धान्तिना जीवत्वेश्वरत्वादीनां तथा समावेशे प्रमाणं नास्तीति तेषां यत्किञ्चिदुपाधिभेदेन समावेशो नाभ्युपगम्यते। एवंच प्रमाणाधीनएव धर्मसमावेशः नतूपाधिसम्भवाधीन इतिस्थिते सत्यत्वादिकं व्यवस्थापयद्भिस्तैर्वादिभिरुपपादितानि। सत्वासत्व सदसत्वादिषु प्रमाणानीति तेषां समावेशः कुतो न स्यादितिचेन्न तैस्तैर्वादिभिरुत्प्रेक्षितानां सर्वेषां प्रामाण्यासम्भवात् परस्परविरोधित्वेन केषांचिदाभासत्वावश्यम्भावात्। अन्यथा प्रपंचसत्ववादिभिस्तदसत्यत्वादौ दोषाणामप्युच्यमानत्वेन तेषामप्यारोप्यत्वापत्याऽनैकान्त्यवादिनस्तद्वाग्युक्त दोषभाक्त्वस्यापिप्रसङ्गात् एतेन यदुक्तं स्याद्वादमञ्जर्याम्। अन्योन्यपक्ष प्रतिपक्षभावाद्यथापरे मत्सरिणः प्रवादाः। नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा न इति तन्निरस्तम्। अपक्षपातेन सकलसमयोक्तसत्वादि संग्रहे तत्तदुक्तसत्वदोषाणामपि संग्रहापत्तेः। ननु तर्हि लोकाविरोधेनैव सप्तभङ्गीनयं समर्थयामहे। सर्वसम्प्रतिपन्ने न तावदेकस्य कालभेदेन सत्वासत्वे। अतस्तयोस्स्वस्वकालविवक्षया अस्तीति नास्तीतिच भङ्गद्वयं क्रमविवक्षया सदसदिदमिति तृतीयभङ्गः युगपत्सत्वासत्वविवक्षयाऽनिर्वचनीयमिति चतुर्थः भङ्गः। नहि युगपदेकस्य सत्वमसत्वंच निर्वक्तुं शक्यम्। युगपत्सत्वासत्वयोरनिर्वचनीयत्वेन सह सत्वस्यासत्वस्य क्रमिकोभयस्य च मेलनेऽवशिष्टं भङ्गत्रयमिति। तदाहानन्तवीर्यः तद्विधानाविवक्षायां स्यादस्तीति गतिर्भवेत्। स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते क्रमेणोभयवांच्छायां प्रयोगस्समुदायभाक्। युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः। आद्यावाच्यविवक्षायां पंचमोभङ्ग इष्यते। अन्त्यावाच्य विवक्षायां षष्ठभङ्गस्समुद्भवी। समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते। इति तस्मादविरोधेन सप्तभङ्गीनय उपपाद्यत इतिचेत्। यद्येवं पारिभाषिकोऽयं सप्तभङ्गीनयः। तदा स्वीक्रियतएव। घटादिस्स्वदेशेऽस्ति अन्यदेशे नास्ति, स्वकालेऽस्ति, अन्यकाले नास्ति स्वात्मनाऽस्ति, अन्यात्मना नास्तीति देशकाल प्रतियोगिभेदेन सत्वासत्वसमावेशे लौकिकपरीक्षकाणां विप्रतिपत्यभावात्। न चैतावता जैनाभिमतवस्त्वनैकान्त्यसिद्धिः॥ स्वकाले सदेव, अन्यकाले असदेवेत्यादिनियमक्षत्यभावात्। ननु सर्वधर्मानैकान्त्यवादिनामेकत्वमपि न व्यवस्थितम्।

अतः स्यादनेकमित्यनेकत्वपर्यायमादाय सत्वासत्वादि समावेश

उपपद्यत इतिचेन्न प्रथमापंचितस्यैकत्वानेकत्वसमावेशस्याप्यविरोधेन
पपादयितुमशक्यत्वात् । सङ्ख्यैकान्त्यानङ्गीकारे जीवधर्माधर्मादी
षड्द्रव्याणीति स्वसिद्धान्तस्थित्युपन्यासायोगाच्च । किं बहुना । स
नैकान्त्यबादिनाम् । अयमस्याः पुत्रः । अयमस्याः पतिः, अयमस्याः पि
त्यादिव्यवस्थायाप्यसिध्या तस्यां पुत्रादीनां मातृत्वाद्युचितव्यवह
अपि न व्यवतिष्टेरन् । तस्मात्सर्वबहिष्कार्योऽयमनेकान्तवादः । किं
त्मा देहपरिमाण इति जैनैरिष्यते । तदप्ययुक्तम् । मातङ्गशरीरं व्या
स्थितस्यात्मनो मशकशरीरप्रवेशे वैकल्यप्रसङ्गात् । मशकशरीरान्मा
शरीरं प्रविशतः तद्व्यापनसमर्थपरिमाणाभावेन तत्र तस्य सर्वाङ्ग
सुखानुभवाभावप्रसङ्गाच्च ननु संकोचविकासवानात्मा तत्तच्छरीर
सारेण संकोचरूपं विकासरूपं वा पर्यायमवस्थान्तरमापद्यत इत्य
यते । अतोन दोष इतिचेन्न तथासत्यात्मनोविकार तत्प्रयुक्तानित्यत्व
प्रसङ्गात् । तस्मान्मोक्षदशायामात्मनो यदन्त्यं परिमाणं तस्य तथै
स्थानं जैनैरपि वक्तव्यम् तदनन्तरं देहान्तराभावेन तदुपचितपरिमा
प्रसक्तेः । अतो मोक्षदशावस्थितात्मस्वरूपवत् तत्परिमाणस्यापि
त्यत्वाविशेषात् तदेवात्मनस्स्वाभाविकं परिमाणमित्यङ्गीकर्त्तुं यु
नतु संकोचविकासवत्वम् ।

॥ इति जैनमतस्य निराकरणम् ॥

---

# अथ तार्किकमतविमर्शः ।

इयमिह परमाणुवादिनां प्रक्रिया । प्रलीने जगति प्राणिकर्मा
विशेषोपधानादीश्वरस्येच्छायां सिसृक्षारूपायां सत्यां निश्चलेषु निरवय
परमाणुष्वाद्यं कर्मोत्पद्यते । तेन कर्मणा परमाणुद्वयं संयुज्यते
संयुक्तेन परमाणुद्वयेन द्व्यणुकमारभ्यते । त्रिभिर्द्व्यणुकैस्त्र्यणुकमित्य
क्रमेण सर्वं जगदुत्पद्यते । तत्र यथा पटारम्भकास्तन्तवः तन्त्वाद्यव
नां स्वांशैः षड्भिः पार्श्वैः संयुज्यमानाः स्वाधिकपरिमाणं पटमारभन्ते
एवं परमाणवोऽपि षड्भिः पार्श्वैस्संयुज्यमाना एव पारिमण्डल्याख्य
परिमाणाधिकपरिमाणमणुत्वह्रस्वत्वयुक्तद्व्यणुकं कार्यमारभन्त इ
वक्तव्यमिति परमाणूनां प्रदेशभेदोऽवश्यमङ्गीकर्त्तव्यः । अन्य

परिमण्डलात् परमाणोरणुह्रस्वस्य द्व्यणुकस्य द्व्यणुकान्महतो दीर्घस्य त्र्यणुकस्य च प्रथिमानुपपत्तेः न च वाच्यं माभूत्परमाणुतः प्रथिमा द्व्यणुकस्य द्व्यणुकात् त्र्यणुकस्य तु प्रथिमा कारणबहुत्वाद्भविष्यतीतिचेन्न। तथासति परिमाणोः पारिमाण्डल्यं परिमाणं द्व्यणुकस्याणुत्वह्रस्वत्व इति विभागाभावप्रसङ्गात्। परमाणुद्वयसंयोगस्य व्याप्यवृत्तित्वे द्व्यणुकस्यापि परिमण्डलत्वापत्तेः द्व्यणुकोत्पादकं परमाण्वोस्संयोगमभ्युपगच्छतः तेनैव तयोः प्रदेशसिद्धेश्च। नहिपरमाणू संयुज्यमानौ तावपिसमानदेशौ सन्तौ संयुज्येते मूर्तानां समानदेशताविरोधात्। अतः प्राक्प्रत्यग्भावेन, दक्षिणोत्तरभावेन ऊर्ध्वाधरभावेन वा भिन्नदेशास्थितौ संयुज्येत इत्येव वक्तव्यम्। तथासति यद्देशस्थितः परमाणुर्येन परमाण्वन्तरेण संयुज्यते स तद्देशान्यदेशावच्छिन्नेनापि तेन किं संयोक्तुमर्हति, अनर्हत्वे वा कथं तस्मिन् प्रदेशभेदो न भवेदिति एवमेव परिभावय ननु परमाणूनां निरवयवत्वेऽपि तत्ताद्दिगवच्छेदलभ्यः प्रदेशभेदो वक्तुं शक्य इति तत एव परमाणुद्वयसंयोगस्यप्रादेशिकत्वं द्व्यणुके परिमाणोत्कर्षश्च भविष्यतीतिचेन्न। दिग्विशेषसंयोगस्यापि परमाणावव्याप्यवृत्तित्वोपपादकांशाभावेन व्याप्यवृत्तित्वापत्त्या तस्य परमाण्वन्तरसंयोगाव्याप्यवृत्तित्वोपपादकत्वायोगात्। नहि कपिसंयोगतदभावावच्छेदकमूलाग्रवत् व्यवस्थितदेशावच्छेदकाभावेऽपि यथाकथञ्चिदवच्छेदकभेदसद्भावमात्रेण परमाणुद्वयसंयोगस्याव्याप्यवृत्तित्वं घटत इति वक्तुं शक्यते। सर्वदिक्संयोगानामपिव्याप्यवृत्तित्वाविशेषे किं दिक्संयोगः परमाण्वन्तरसंयोगावच्छेदकइति। अत्रैव नियामकाभावेन सर्वदिक्संयोगानामपि तदवच्छेदकत्वप्राप्तौ, अवच्छेदकभेदाभावात् यथाकथञ्चिदवच्छेदकभेदलाभेऽपि व्यवस्थितदेशत्वाभावे तयोर्व्याप्यवृत्तित्वानुपपादकत्वात्। अन्यथा पृथिव्या सङ्ख्यावत्वे द्रव्यत्वमवच्छेदकंगन्धवत्वे पृथिवीत्वमित्यवच्छेदकभेदसत्वेन सङ्ख्यादीनामव्याप्यवृत्तित्वव्यवहारप्रसङ्गात्। तस्माद् द्व्यणुकोत्पादकसंयोगनिर्वाहार्थं परमाणुष्ववयवरूपप्रदेशभेदोऽवश्यमभ्युपेयः। तथा त्र्यणुकोत्पादकद्व्यणुकत्रयसंयोगनिर्वाहार्थमपि सोऽभ्युपेयः स हि कायपुस्तकसंयोगोहस्तपुस्तकसंयोगेनेव द्व्यणुकस्य द्व्यणुकान्तरारम्भकपरमाणुनासह संयोगो निर्वाह्यः। कारणाकारणसंयोगात् कार्याकार्यसंयोगइति त्वयाऽभ्युपगतत्वात्। तथाच

द्व्यणुकारम्भकपरमाणौ तदारम्भकपरमाण्वन्तरसंयोगे प्राक्
स्थिते प्रदेशभेदं विना कथं त्र्यणुकोत्पत्तिसमये द्व्यणुकान्तरसंयो
स्यात्। मूर्तानां समानदेशताविरोधादेव यदि तु मूर्तत्वेऽपि परम
समानदेशताविरोधमर्यादा नेष्येत तदा षण्णां परमाणूनां पि
त्र्यणुकं परमाणुमात्रं भवेत्। तदाहुः—षट्केन युगपद्योगात् प
णोष्षडंशता षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रक
प्रागाद्यूर्ध्वाधारदेशवर्तिभिः षड्भिः परमाणुभिः सम्बन्ध्यमानोम
परमाणुष्षडंशः प्राप्नोति भिन्नदेशत्वात्सम्बन्धानाम्। अथ
देशास्सर्वे सम्बन्धाः तदा सर्वेषां पिण्डः परमाणुमात्रः प्रा
त्यर्थः। समानमिदं दूषणं द्व्यणुकेभ्यस्त्र्यणुकोत्पत्तावपि। त
द्व्यणुकत्र्यणुकादिजननपरिमाणातिशयसिद्ध्यर्थं परमाणुषड्ंशत्व
च्छद्भिरपि परमाणुवादिभिरङ्गीकार्यः ननु तदङ्गीकारे तत्तदंशानामप्यु
येन सांशतायामनवस्था प्रसज्यते। तथा चानन्तावयवारब्धत्वावि
मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गः अतः सांशत्वमपि नाङ्
राहमितिचेत् तर्हि सांशत्वे त्वनवस्था निरंशत्वे द्व्यणुकोत्पत्त्याद्यनुप
रिति पक्षद्वयेऽपि समापतद्दोषं परमाणुकारणवादव्यसनं त्यक्त्वा
भव। यदितु परमाणोस्सावयवतायामनित्यत्वापत्त्या स्वाभ्युपग
कारणत्वासिद्धिप्रसंगात् सांशत्वं नेष्यते तदा द्व्यणुकादिजन
थिमानुपपत्तिरनिवार्या तस्मात्परमाणुकारण वादो हेयः। किञ्च
निश्चलेषु परमाणुषु सर्गाद्यकालद्व्यणुकारम्भकसंयोगोत्पादककर्मास
तत्संयोगासम्भवादपि स हेयः। नन्वग्नेरूर्ध्वज्वलनंवायोस्ति
गमनम्। अणुमनसोश्चाद्यं कर्मेत्येतान्यदृष्टकारितानीत्यभ्युपेयते।
ऽदृष्टवशादुत्पन्नेन कर्मणा संयोगस्सम्भवतीतिचेन्न। तददृष्
प्राणिषु समवेतं। यदि वा परमाणुषु उभयथापि तत्कर्म
भविष्यति। तस्य तत्कर्मकारणत्वे पूर्वकल्पोपार्जितस्य
प्रलयेऽपि सत्त्वेन तदानीमपि ततस्तत्कर्मोत्पत्त्या जगत्कल्पनाप्र
अथ विपाकादृष्टं कर्म कारणं कर्मेश्वररूपोभयविधजगत्
साफल्यप्रतिपदनार्थस्येश्वरः कारणं पुरुषकर्मसाफल्यदर्शनादि
पादसूत्रजातस्य व्याख्यानावसरे वार्तिककृता नब्रूमः कर्मानपेक्ष
कारणमिति कर्म पुरुषस्य ईश्वरोनुऽगृह्णाति कोऽनुग्रहार्थः य
भूतं यस्य च यदा पाककालस्तदा तथाच विनियुक्त मितिप्र

त् अतोनायं दोष इति चेन्न । हरीतक्यादिद्रव्यस्यैव आत्मगुण-
ादृष्टस्य विपाकासम्भवात् । पाककालागमो विपाकः सतु सर्गा-
ालागमएवेतिचेन्न । अनन्तैः प्राणिभिरयुगपदनुष्ठितविविधकर्म-
नेतादृष्टानां सर्गाद्यकालएव फलकालः न तु ततः प्रागूद्विपरार्धात्मके
ये न कोऽपि क्षणइति कल्पनस्याप्रामाणिकत्वात्। ननु सर्गकाल-
ऽहनि निरन्तरगतागतखिन्नानां । प्राणिनां तत्समानपरिमाण
लं शर्वरीरूपं कृत्वा तस्मिन् तान् महासुषुप्तिं प्रापय्य विशिश्रम
ोरीश्वरस्येच्छया प्रलयमध्ये समागतफलकालान्यपि कर्माणि
ावद्धशक्तिकानि भवन्ति । अतएव ब्रह्महन्तुस्तद्देहपातानन्तरं
पपर्यन्तयातनानुभवः ततः परं सप्तसु जन्मसु क्षयरोगादितच्चिन्हा
ृत्तिरिति चोदितं फलं प्रलयाव्यवहितपूर्वकाले कृतब्रह्महननस्य
सस्तद्देहपातानन्तरमेव न भवतीति चेन्न। त्वन्मते नित्यायाईश्वरे
छाया प्रलयेऽपि सत्वात्। न च परमाणुकर्मोत्पादकादृष्टोपधानाभा-
दीश्वरेच्छा परमाणुकर्मोत्पादयिषारूपा न भवतीति त्वया वक्तुं
क्यं तस्यापि प्रलये सत्वात् । ममतु प्रलये प्राक्सिद्धानां प्राण्य-
ानामीश्वरस्येच्छान्तराणाञ्च सत्वेऽपि वहुस्यां प्रजायेय तासां-
वृतं त्रिवृतमेकैकां करवाणि नामरूपे व्याकरवाणीति तदानीन्त
सृष्टिसङ्कल्परूपाणां भाविनीनामीश्वरेच्छानामभावात्सर्गाभावाः
ं तर्हि यस्मिन् काले तथा सङ्कल्परूपेच्छा भवतीति त्वयेष्यते
कालोपहितेव नित्येश्वरेच्छा मम परमाणुकर्मोत्पादयिषा भविष्य
ीतिचेदुच्यते मया कश्चित् तादृक्सङ्कल्पकाले स्वमनीषाकल्पितो
परिगृह्यते किंतु सदेवसोम्येदमग्रआसीदित्यादिश्रुतितदुपवृंहण
राणेतिहासादिप्रमाणकद्विपरार्धात्मकमहाशर्वर्यन्तरकालः परिगृह्यते ।
च तवेश्वरं तदीयव्यापारञ्च युक्तिभिरेव कल्पयितुमिच्छतः
तस्मिन् काले वहुभवनसङ्कल्पः ततोभूतानां क्रमेण सृष्टिस्तत
त्रिवृत्करणसङ्कल्पस्त्रिवृत्करणञ्च ततो नामरूपव्याकरणसंकल्पः
द्व्याकरणञ्चेत्यादिकं युक्तिपथत्वमवतरति ।

न हि रामचरितादिकं रामायणादिप्रतिपन्नं युक्तिभिः कल्प
यितुं शक्यम् । यदीश्वरे कालविशेषावच्छिन्नसृष्ट्यादिव्यापारे श्रुति-
शरणी करणीया तदेश्वरेऽपि सैव शरणी कर्त्तुं यक्तेति। यथा

श्रु त्यनन्तकल्याणगुणाकरतदोदित्वैस्सङ्कल्पविशेषैर्जगद्व्यापारल्
कुर्वन्नेवेश्वरोऽभ्युपेयः न तु श्रु तिषु स्वानभिमतांशं परित्य
नित्यज्ञानेच्छाप्रयत्नमात्रवान् स्वाभिमतसृष्टिव्यापारकर्ताऽभ्युपेयः
दूषितश्चानुमानिकेश्वरः शास्त्रयोनित्वाधिकरणे । तेनापि तस्य पर
गुणकर्मोत्पादनप्रक्रियया स्रष्टृत्वं त्वदभिमतं वैशेषिकमतं निरस्तप्रायम्
अतोऽप्रामाणिकपरमाणु कारणवादाभ्युपगमादसमञ्जसं वैशेषिकम

तथा समवायाभ्युपगमादप्यसमञ्जसम् । अयुतसिद्धेष्वव
विगुणक्रियाजातिष्वयुतसिद्ध्युपपादनार्थं हि समवायोऽभ्युपगम्यते
समवायस्यापिसम्बन्धान्तरमपेक्षणीयम् । अयुतसिद्धिसाम्यात्
एवं तस्य तस्यापि सम्वन्धान्तरस्यायुतसिद्ध्युपपादकं । सम्वन्धान
मपेक्षणीयमित्यनवस्थानात् । समवायस्याभावादिवत् स्वरूपसम्व
इष्यतइति चेत् अवयव्यादिष्वपि स एवास्तु । ननु अवयव्यादीन
नन्तत्वात् । लाघवेन सर्वानुगत एकस्समवायः कल्प्यतइति चेन्न
एकस्य वहूनाञ्च कल्प्यत्वे हि लाघवादेकस्य कल्पनम् । इह बहू
क्लृप्तत्वात् किमर्थमेकस्यापिकल्पनम् । ननु बहूनांक्लृप्तत्वेऽपि तेषु सम्ब
त्वं कल्प्यं तत्तु नैकं कल्पयितुं शक्यम् । अवयव्यादिस्वरूप
गतैकसम्वन्धत्वानिर्वचनात् । अतोऽनन्तसम्बन्धत्वकल्पनादेकस्यसम
यस्य तद्गतैकस्य सम्वन्धत्वस्य कल्पनं लघ्विति चेन्न । अवयव्या
तत्तादभावादिकं प्रति सम्वन्धत्वस्यापि क्लृप्तत्वात् । तेष्ववयवादिनि
पितसम्वन्धत्वक्लृप्तिर्नास्तीति तान्यनन्तानि कल्प्यानीतिचेन्न । निरूप
भेदेन सम्बन्धत्वभेदे समवायेऽपि तद्भेदेन तान्यनन्तानि कल्प्या
समवायश्च कल्प्यइति समवायपक्षएव गौरवापत्तेः । अवयवगु
क्रियाजातीस्तद्गतश्चायुतसिद्धत्वेन क्रोडीकृत्य अयुतसिद्धनिरूपितस
न्धत्वमेकमेव समवाये कल्प्यतइति चेन्न । एवं ताः क्रोडीकृ
तेष्वेकसम्वन्धत्वकल्पनोपपत्तौ समवायकल्पने गौरवात् किञ्च अव
वावयव्यादिषु समवायाभ्युपगमेऽपि स्वरूपसम्वन्धाभ्युपगमश्च
श्यकः अन्यथा समवायविशेषेण अवयवावयव्यादिषु आधाराधेयभा
व्यवस्थित्यभावप्रसङ्गात तस्मादवयवादिष्ववयव्यादिनिरूपिताधार
रूपं स्वरूपसम्वन्धत्वमेकम् । अवयवादिनिरूपितमाधेयत्वरूपं तद
दिति स्वरूपसम्वन्धद्वयेन विषयीभूतेन । इह तन्तुष पटइत्यादिप्रत्यय

निर्वाह्यः । समवायेन तन्निर्वहणे वायौ रूपसमवायसत्वेन वायौ रूप मिति प्रतीत्यापत्तेः । अतस्समवायस्थलेऽपि स्वरूपसम्बन्धस्यावश्यकत्वे तेनैवाधाराधेयप्रतीतेर्निर्वहणीयत्वे च किं समवायेन एतेन यदुक्तं कणादसूत्रे इहेति यतः कार्यकारणयोस्समवायः तदिति तन्निरस्तम् । इह प्रत्ययस्य सर्वत्राधाराधेयभावस्वरूपसम्बन्धद्वयविषयत्वावश्यभावेन तेनैव विशिष्टप्रत्ययचारिताथ्यात् । स्यादेतत् इह सूत्रे वर्णित प्रत्ययनिर्वाहकत्वेन समवायसिद्धिरुक्तेति सत्यम् । न तु तन्निर्वाहकत्वं विषयतया विवक्षितं तन्मते समवायस्याप्रत्यक्षत्वात् किंतु कारणतया अवयवक्रियादिविशिष्टबुद्धीनामनुगतं किञ्चित्कारणंयत्सिद्धयति स समवाय इति मैवम् । अवयवादिविशिष्टबुद्धीनां स्वयमननुगतत्वेनानुगतकारणापेक्षाभावात् । विशिष्टबुद्धित्वेनानुगमे दण्डी पुरुषः घटस्य ज्ञानं पटस्याभावः । इत्यादिषु विशिष्टबुद्धिष्वातिप्रसङ्गात् । स्फुटतरविवेकरहितसम्बन्धिद्वयगोचरविशिष्टप्रत्ययत्वेनानतिप्रसक्तेनानुगमइति चेन्न । तर्हि स्फुटतरविवेकरहितत्वेनानुगतीकृतानामवयवाऽवयव्यादीनामेव तत्र कारणत्वमस्तु कृतं समवायकल्पनया अतिप्रसक्तत्वे दमुक्तविशिष्टबुद्धित्वम् । अभावाधिकरणयोर्विशिष्टबुद्धौ पीतं सुवर्णमितितदुपष्टम्भकयोर्विशिष्टबुद्धावपि । ननु दण्डादिविशिष्टबुद्धिसाधारण्ये प्रत्यक्षविशिष्टबुद्धिमात्रे अनुगतं कारणं कल्प्यमानं नित्यत्वादेकत्वाच्च सर्वत्र सम्भवन् समवायएवेति सिद्धयति । विषयभावं विनापि सर्वासु तासु तस्य कारणत्वसम्भवादिति चेन्न । संयोगस्यानुगतकारणस्य सम्भवात् । सन्ति हि चाक्षुषादिविशिष्टप्रत्यक्षेषु तत्तद्द्रव्येन्द्रियसंयोगाः कारणत्वेन क्लृप्ताः । शब्दप्रत्यक्षत्वेप्यस्ति श्रोत्रमनस्संयोगः ।

तेषामेव संयोगत्वेनास्तु कारणता । किञ्च विशिष्टज्ञानत्वं विशेषणज्ञानकार्यतावच्छेदकं प्रत्यक्षत्वमिन्द्रियकार्यतावच्छेदकमित्यवच्छेदकान्तरोपपन्नकार्यताधिकरणवृत्तित्वात् नीलघटत्ववदर्थवशसम्पन्नं विशिष्टप्रत्यक्षत्वं न कार्यतावच्छेदकमिति न तदवच्छेदेनानुगताकारणापेक्षास्ति । एतेन तन्त्वादिनाशे तन्निष्ठावयवगुणादिकं यन्नश्यति तत्र तन्निष्ठावयव्यादिनाशत्वस्याऽननुगमात् । तत्सम्बन्धिनाशत्वस्य तत्संयुक्ततृणादिनाशेऽतिप्रसक्तत्वात् तावदनुगतसम्बन्धः सिद्धयन् समवायः पर्य्यवस्येतेतिचेन्न । समवायाङ्गीकारेऽपि

तन्तुनाशे तन्तुसमवायवतामंशूनां नाशप्रसङ्गानिवारणात् । न च समवायवत्वे सत्याधेयत्वरूपसमवेतत्वमवच्छेदके निवेशनीयं तथापि तन्त्वाश्रिततृणादिनाशप्रसङ्गतादवस्थ्यात् समवायस्यैकत्वेन तन्तुसमुदायस्य तृणेऽपि सत्वात् अयुतसिद्धाधेयत्वस्यैव अक्लिष्टस्य क्लृप्तस्य कार्यतावच्छेदकेनिवेशयितुं युक्तत्वाच्च । न च तथासति तदयुतसिद्धाधेयस्य पटध्वंसादेर्नाशप्रसङ्गः परपक्षेऽपि तन्तुसमवेतजात्यादिनाशप्रसङ्गतौल्यात् । तन्तुनाशे तत्समवेतकार्यनाशइतिनियमश्चेत्तर्हि तन्नाशे तदयुतसिद्धाधेयस्य विनाशिनोनाशइति नियमोऽस्तु । न ध्वंसनाशेऽपि किञ्चिदनिष्टमापद्यते । प्राग्भावध्वंसस्य घटस्येव तद्ध्वंसस्यापि ध्वंसोपपत्तेः घटतद्ध्वंसयोरुभयोरपि प्रागभावप्रध्वंसाङ्गीकारेण प्रागभावानुमज्जनासमर्थने घटध्वंसपरम्परया घटध्वंसत्वाङ्गीकारेण घटानुमज्जनसमर्थनोपपत्तेः । तदेवं समवायासिद्धौतदघटितस्य समवायिकारणत्वस्यासिद्ध्या त्र्यणुकद्वयणुकसमवायिकारणत्वेद्व्यणुकपरमाण्वनुमानं न प्रवर्त्तते । इत्यतोप्यसमञ्जसः परमाणुकारणवादः । किञ्च समवायस्य नित्यत्वाभ्युपगमात् तदाश्रयाणामपि नित्यत्वमभ्युपगन्तव्यम् । अन्यथा सम्बन्धिनाशे संयोगवत् समवायस्यापि नाशप्रसङ्गात् अतस्समवायाश्रयतया त्र्यणुकस्यापि नित्यत्वया वक्तव्यं स्यादित्यतोऽपि तत्कारणतया द्व्यणुकानुमानासिद्धिः

यद्युच्येत सम्बन्धिनाशनाश्यत्वे संयोगत्वं प्रयोजकं लाघवात् न सम्बन्धत्वमुपाधित्वादिति । तदित्थं लाघवमनुसरता जगन्मूलकारणानुमानेप्यैक्यलाघवमनुसरणीयमिति तेन ब्रह्मणः प्रधानस्य च सिद्धेर्न तेन परमाणुसिद्धिः । नच कार्यद्रव्यस्यावयवसंयोगारभ्यत्वनियमस्य पटादिषु दृष्टत्वान्नैकस्माद्द्रव्योत्पत्तिस्सम्भवतीति लाघवमकिञ्चित्करमिति वाच्यम् । एकावयविरूपेण क्षीरेण दध्यारम्भे नियमभङ्गात् । क्षीरारम्भकावयवाः परस्परं संयुज्य पुनस्संयोगान्तरं लब्ध्वा दध्यारभन्तइति कल्पनायां प्रमाणाभावात् । क्षीरनाशककारणानुपलब्धिवत् दध्युत्पत्तिवच्च तदुत्पत्तिः न पयसः परिणामोगुणान्तरप्रादुर्भावादित्याद्यक्षपादसूत्राणां प्रमाणमूलत्वाभावात् । स्थितेऽपि द्रव्ये पार्थिवपरमाणूनामिव गुणान्तरप्रादुर्भावोपपत्तेः । तन्तुसंयोगपटयोः कुविन्दव्यापारादिरूपसामग्र्यैक्येन समकालोत्पत्तिकतया पटस्य तन्तुसंयोगारभ्यत्वाऽसम्प्रतिपत्तेश्च । न च तन्तसंयोगनाशे पटनाशदर्शना

अकारणनाशेनाकार्यनाशासम्भवात् पटतन्तुसंयोगयोः कार्यकारणभावोवक्तव्यइति वाच्यम्। नाशयोरपि सामग्र्यैक्येन समकालत्वोपपत्तेः। किंच यदि जगन्मूलकारणं रूपादिमत्स्यात् तदा तत्र नित्यत्वनिरवयवत्वयोर्विपर्ययस्स्यात्। रूपादिमतामनित्यत्वसावयवत्वदर्शनादिति तर्कानुग्रहीतेन त्र्यणुकमूलकारणं रूपादिरहितं नित्यत्वान्निरवयवत्वादित्यनुमानेन पराहतत्वादपि न रूपादिमत्परमाणुरूपकारणसिद्धिः। विपक्षे बाधकाभावात्। व्याप्त्यसिद्ध्या प्रशिथिलमूलस्तर्कइति चेत् त्र्यणुकं समवायिकारणारभ्यं महत्वे सति चाक्षुषत्वात्। तदपि त्र्यणुकसमवायिकारणं समवायिकारणारभ्यं महदारम्भकत्वादिति द्व्यणुकपरमाणुसाधकानुमानयोः कोविपक्षबाधकोदृष्टः। येन मदनुमानस्य दौर्बल्यं त्वदनुमानयोः प्राबल्यञ्च स्यात्। ननु त्र्यणुकसाधकानुमानेऽस्ति विपक्षबाधकतर्कः। तथाहि महत्वपरिमाणस्य जन्यत्वे महत्वावान्तर जातिरूपापकर्षमात्रंप्रयोजकम्। नतूत्कर्षापकर्षरूपतदवान्तरजातिद्वयं गौरवात्। तथाच त्र्यणुकमहत्वस्यापकृष्टमहत्वरूपतया जन्यत्वेन कारणापेक्षायां महत्वे स्वाश्रयसमवायिकारणगतसङ्ख्यापरिमाण संयोगविशेषाणामेव कारणत्वात्। त्र्यणुकस्य समवायिकारणत्वमवश्यमभ्युपेयमिति। एवं तद्युक्तरीत्यैव तर्कमूलव्याप्तावप्यस्ति विपक्ष बाधकतर्कः। रूपादीनां जन्यत्वे रूपत्वादिकं प्रयोजकमनुगतत्वाल्लघुत्वाच्च। न तु कार्यगतरूपत्वादिकं पार्थिवपरमाणुरूपाद्यननुगतत्वात्गुरुत्वाच्च तथाच परमाणुषु रूपाङ्गीकारे, अग्निसंयोगजन्या रूपादयः स्वाश्रय कारणगतरूपादिजन्याइति त्वद्रीत्यैव जलपरमाणुगतरूपादीनां पार्थिव परमाणौ श्यामत्वस्यचोत्पत्तावपेक्षितानां रूपादीनामाश्रयत्वेन परमाणूनामवयवास्सिद्ध्यन्तो न निवारयितुं शक्याः सावयवत्वे चानित्यत्वमप्यनिवार्यमिति रूपादीनां जन्यत्वे रूपत्वादिकं प्रयोजकमित्येतत् त्वयावश्यमेष्टव्यम्। अन्यथा त्र्यणुककारणत्वेनानुमीयमानेषु परमाणुषु रूपाद्यसिद्धिप्रसङ्गात्। तेषु रूपादिमत्वानुमाने हि रूपादीनां कारण गुणपूर्वकत्वनियममूलएव हि तत्र विपक्षबाधकतर्कएष्टव्यः। किञ्च महत्वस्य जन्यत्वे परिमाणापकर्षःप्रयोजकोयुक्तः। अतएवाकाशादिगत परममहत्वव्यावृत्तिसिद्धेः। नतुमहत्वापकर्षः विशेषरूपत्वात् दैर्घ्याननुगतत्वाच्च। तथाच यदि त्र्यणुकमूलकारणअपकृष्टपरिमाणमभ्युपगम्येत तदा तस्य जन्यत्वेन कारणपरिमाणापेक्षया मूलकारणस्य

सावयवत्वं प्रसज्येतेति तत्परिहाराय तस्मिन् परममहत्वमेवाभ्युपग
व्यम । नच कार्यद्रव्यस्य स्वन्यूनपरिमाणाद्रव्यारभ्यत्वनियमात् । 
स्तन्तुभिर्द्ढतरावर्त्तितैस्तन्यूनदैर्ध्यस्य विशालैः पटैरावर्त्तितैस्तन्न्यू
पुल्यस्य च सूत्रस्यारम्भदर्शनात् । तस्माद्बलवत्प्रत्यक्षाऽनुमानपर
रूपादिवज्जगन्मूलकारणानुमानम् । तथा यद्यनित्यत्वादिपरिहा
परमाणूनांरूपादि शून्यत्वमुच्यते तदा कार्यगुणानां कारणगुणपू
त्वनियमासिद्धिः तत्सिद्धये रूपादिमत्वाङ्गीकारे चानित्यत्वापत्ति
उभयथापि दुष्टः परमाणुकारणवाद इति ।

चक्षुरादीन्द्रियाणामेवात्मत्वं साधयन्तीन्द्रियात्मवादिनः तेष
ज्ञानकरणत्वं कर्तृत्वञ्च । नच कर्तृत्वञ्चक्रियानुकूलकृतिमत्वं तच्चा
चक्षुरादौ न सम्भवतीति वाच्यम् । तन्मते कृत्यादीनामात्मसमवे
नङ्गीकरणात् नन्वेवं कर्तृकरणपदयोः पर्यायतापत्तिरेकार्थ
चेष्टापत्तिः कर्तृवाचकपदस्थाने कारणवाचकपदप्रयोगापत्तेरि
चेन्न कर्तृकरणपदयोर्विभिन्नप्रवृत्तिनिमित्तकत्वेनोक्तदोषानवकाशा
वदन्ति । नैतद्युक्तं यतो येनेन्द्रियेणप्राक्घटोऽनुभूतस्तदिन्द्रि
नाशे सति योहं घटमद्राक्षं सोऽहमिदानींस्पृशामीति स्मरणं न स्य
अनुभवितुरभावात् ! नचेन्द्रियान्तरेणैव स्मृतिर्भविष्यतीति वाच्य
अन्यानुभूतस्यान्येन स्मरणासम्भवात् । अनुभवस्मरणयोस्सामा
करण्येन कार्यकारणभावात् । किंच सुषुप्त्यादाविन्द्रियाणां लया
इन्द्रियवर्गोनात्मा भवितुमर्हति सर्वावस्थाननगतत्वाद्देहवत् । 
त्वाद्वास्यादिवत् । नह्यचेतनानां करणानां फलजनकत्वं कर्त्तारमन्त
पपद्यते । इत्यतिरिक्तः कर्त्ताआत्माऽस्ति । बुद्धिमनसोश्च करणय
मिति कर्तृप्रतिभानप्रत्ययालम्बनत्वायोगात् । तयोरप्यात्मत्वमभ्यु
न्तुं न शक्यते। मन आत्मा न भवति करणत्वात् । वास्यादि
बुद्धिरात्मा न भवति अन्तःकरणत्वात । प्राणएवात्मेति चान्ये व
तत्तुच्छंजडत्वात सुषुप्तौ पाटच्चरैर्विभूषणादौ मुषिते चैतन्याभावे
नुभूयमानत्वात् । प्राणोनात्मा वायुत्वात व्यजनजन्यवायुवत् । त
देहेन्द्रियमनोबुद्धिविषयेभ्योव्यावृतः स्फुटतराहमनुभवप्रत्ययगम
त्मेति सिद्धम् । अतएव वैशेषिकाः ।

देहादिभ्योऽतिरिक्तं ज्ञानेच्छादिप्रयत्नगुणकं विभुं प्रतिदेह

दृष्यात्मकमात्मानं मन्यन्ते तदुक्तं कुसुमाञ्जलौ प्रथमस्तवके ( कर्तृ र्मानियन्तारश्चेतिता च स एव नः। अन्यथाऽनपवर्गःस्यादसंसारोऽथवा ुवः ) इति यत्र कृतिस्तद्दृष्टस्य तत्रैव भोगजनकत्वमित्यत्राऽविवादे त्याश्रय एव चेतनः। अन्यथेति। बुद्धेर्नित्यत्वे मोक्षाभावः। आत्मनो- द्धयुपधानस्यैव संसारत्वात्। अनित्यत्वे च तदुत्पत्तेः पूर्वं प्रकृतेः धारण्यान्नियामकाभावेन संसाराभावइत्यर्थः। तदप्यसमञ्जसमस- भवात्। तथाहि यद्यात्मनोविभुत्वमभ्युपेयते तदा सुखदुःखयोस्साङ्- र्यापत्तिः। एकस्यात्मनोदुःखानुभवकाले सर्वेषामप्यात्मनांदुःखानु- वः स्यात्। सर्वेषामात्मनां तत्र सत्वात्। आत्मनोविभुत्वात्। नच स्य शरीरे कण्टकवेधोजातस्तस्यैव वेदनानुभवोनान्येषामित्यङ्गीकारान्न- ाङ्कर्यमिति वाच्यम्। यस्य शरीरे कण्टकवेधोजातस्तस्मिन् शरीरे र्वेषामात्मनां सान्निध्यात्सर्वेषां दुःखानुभवस्य दुर्वारत्वात्। नाप्यदृ- ्स्य प्रत्यात्मनि भिन्नत्वान्नसर्वेषां कण्टकवेदनाजन्यदुःखानुभवइति ाच्यम्। तादृशाऽदृष्टोत्पत्तौ आत्ममनो योगस्य कारणत्वं वाच्यं च सर्वसाधारणमेकमेव तस्य कारणत्वे क्वचिदेवादृष्टोत्पत्तिर्नान्यत्रेति ियन्तुमशक्यत्वात्। नह्यदृष्टोत्पत्तिं प्रत्यात्ममनः संयोगस्य कारणत्वं ्रतिपादयामोयेनोक्तदोषः प्रसज्येत। किन्त्वहमिदं फलं प्राप्स्यामीत्यभि- न्धेरपि कारणत्वं ब्रूमस्तथाच तादृशाभिसन्धेः सर्वत्रासत्वान्नोक्त- ोषावकाशइत्यपि वक्तुं न शक्यते। अभिसन्ध्यादीनामपि साधारण- नःसंयोगनिष्पाद्यतया व्यवस्थित्यसिद्धेः। ननु तत्तन्मनः ंयोगः अहमिदं फलं प्राप्स्यामीत्यभिसन्धिप्रत्यसाधारणकारणमिति ्यवस्था सूपपन्नेति चेन्न सर्वात्मसंयुक्तं नित्यं। मनः स्यैव नत्वन्यस्येति नियन्तुमशक्यत्वात् नचादृष्टविशेष- ुक्तं मनः स्वात्मनैवसम्बद्धमिति वाच्यम्। अदृष्टविशेषं प्रत्यप्या- ममनःसंयोगस्यैव हेतुत्वं वाच्यं। तच्च सर्वसाधारणमित्युक्तदोषस्य ुर्वारत्वात्। नच भवतु तावदात्मनां विभुत्वं तथापि तत्तच्छरीरावच्छे- नात्मनां प्रदेशविशेषास्सन्ति त एव बन्धभाजस्तत एव सुखदुःखादीनां ्यवस्था सेत्स्यति। आत्मान्तराणां विभुत्वाच्चैत्रशरीरे सान्निध्येऽपि, ात्मान्तरप्रदेशस्यासत्वान्न सुखदुःखादिसाङ्कर्यमिति वाच्यम्। यतः ैत्रीयशरीरे मैत्रशरीरवर्त्यात्मप्रदेशस्य सत्वं कार्यदर्शनेनानुमातुं शक्यते द्यथा चैत्रेण स्वशरीरप्रदेशे सुखमनुभूतं ततस्तस्माद्देशादपक्रान्तस्त-

स्मिन्नेव देशे मैत्रस्य सान्निध्ये सति मैत्रस्यापि तस्मिन् प्रदेशे सुखं
तेन शरीरान्तरे आत्मान्तर प्रदेशविशेषस्यान्तर्भाव इति। तस्माद्वै
काभिमतं प्रत्यगात्मनां विभुत्वं नोपपद्यते। सुखदुःखव्यवस्थाया
त्वात्। किञ्च सुषुप्तौ मूर्च्छायाञ्च विषयाभावात्। ज्ञानस्याभावइत्यर्थ
र्व्याप्य व्यापकभावस्तथाच नात्मस्वभावश्चैतन्यमात्मानुवृत्तावपि
स्याभावात्। अत इन्द्रियसंयोगसत्वे ज्ञानसत्वं तदभावे तदभाव
मनःसंयोगजमागन्तुकं चैतन्यं धर्मो न स्वाभाविको नात इन्द्रिया
र्थ्यम्। तस्माज्जडा एव प्रत्यगात्मान इति वैशेषिकामन्यन्ते तदप्यस
श्रुतिस्मृतिविरुद्धत्वात्तथाहि अत्रायं पुरुषः स्वयं ज्योतिर्भवति।
विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते नहि द्रष्टुर्दृष्टेर्विपरिलोपो वि
नाशित्वात्। अविनाशी वारेयमात्मा अनुच्छित्तिधर्मा, जाना
पुरुषः इति शतशः श्रुतयस्सन्ति ताभिः प्रत्यगात्मनां स्वाभाविकं
प्रतिपाद्यते। स्वयं ज्योतिष्ट्वं नाम करणायत्तप्रकाशशून्यत्वं
प्रकाशकत्वात्। यदि जीवात्मनां स्वाभाविकी ज्ञानशक्तिर्न
इन्द्रियादिसन्निकर्षेऽपि न जानीरन्नाकाशवत्। किञ्च यदाऽ
ज्ञानं जडस्वभावं तत्कदाचित्परोक्षं कदाचित्सन्दिग्धं
विपर्य्यस्तं यथा घटादि। नचैवमात्मा। तथाहि अनुमिमानोऽप्य
स्मरन्नप्यानुभविकः सन्दिहानोऽप्यसंदिग्धः। विपर्य्यस्यन्नप्य
सर्वस्यात्मा तथा च तत्स्वभावः न च तत्स्वभावस्य चैतन्यस्याभा
नित्यत्वात्। प्रत्यगात्मनः सज्ज्ञानं सुषुप्तिमूर्च्छादौ कर्मणा सङ्कु
जागरेऽभिव्यज्यते वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभि
र्न स्वरूपाभावात्। तद्वत् प्रत्यगात्मा ज्ञानस्वरूपश्चेतनत्वात् स्वप्र
त्वात् अचिद्भिन्नत्वाच्च ब्रह्मवत्। प्रत्यगात्मा यदि ज्ञानस्वरूपो न स्या
देहादिप्रकाशकोऽपि न स्यात्। इत्यनुकूलतर्कस्य विद्यमानत्वा
नुमानेऽप्रयोजकत्वशङ्का योऽयं विज्ञानघन इति श्रुतेः। बद्धावस्था
प्रत्यगात्मनो धर्मभूतस्य ज्ञानस्य कर्मणा सङ्कुचितत्वात्करणाना
वर्तते न तु मुक्तावस्थाया मितिविवेकः। तस्मात्सिद्धं प्रत्यगात्मनां
विकज्ञानवत्त्वम्। तस्मादसमञ्जसं वैशेषिकमतम्।

इति वैशेषिकमतनिरसनम्॥

एषा साङ्ख्यानां प्रक्रिया ( मूलप्रकृतिरविकृतिर्महदाद्याः
कृति विकृतयस्सप्त षोडशकश्च विकारो न प्रकृति र्न विकृतिःपुरुषः । )
मूलप्रकृतिः सत्वरजस्तमोगुणरूपाणां साम्यावस्था । सा चैका
यमचेतना सकलचेतनभोगापवर्गार्था नित्या सर्वगता च स्वयं प्रकृतिरे
न कस्य चिद्विकृतिः महदाद्याः प्रकृतेर्महान् महतोऽहङ्कारः । अहङ्का-
त् पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानीत्येतास्सप्त स्वस्वका-
पेक्षया प्रकृतयः स्वस्वकारणापेक्षया विकृतयश्च । आकाशादीनि पञ्चम-
भूतानि श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि वागादीनि पञ्चकर्मेन्द्रियाणीति
डशको गणो विकृतिरेव न कस्य चित्तत्वान्तरस्य प्रकृतिः । पुरुषस्त्वप-
णामित्वान्न कस्यचित् प्रकृतिः नित्यत्वान्न कस्यचिद्विकृतिः निर्धर्मक-
तन्यमात्रवपुः सर्वगतः प्रतिशरीरं भिन्नश्च । निर्विकारत्वान्न कर्त्ता नापि
क्ता एवम्भूतोऽपि तत्वे मूढाः प्रकृतिपुरुषसन्निधिमात्रेण पुरुषस्य चैतन्यं
कृतावध्यस्यन्ति । तेन चैतन्ययोगात् कर्तृशक्तिमत्वाच्च ज्ञातृत्वं
कृतेरेवान्तः करणरूपापन्नायाः तस्याश्च कर्तृत्वं पुरुषेऽध्यस्यन्ति एव-
योन्याध्यासादहङ्कर्त्ता, अहम्भोक्तेत्यभिमानात्मको भोगस्तत्वज्ञाना-
वर्ग इत्येवं पञ्चविंशतितत्वानीति तत्र सकलमूलकारणत्वाभिमतस्व-
त्रप्रधानानुमाननिरसनेन तन्मतं सर्वं निरस्तं भवतीति तदिह
स्यते । इदमिह तेषामनुमानं सर्वं कार्यं सुखदुःखमोहात्मकंद्रव्य
कृतिकं तत्समन्वितत्वात् सामान्यव्याप्तौ घटवदिति । यद्वा सर्वं
र्यं सत्प्रकृतिकं कार्यत्वात् विशेषव्याप्तौ घटवदिति । आद्यानुमाने
खदुःखमोहात्मकानि द्रव्याणि कार्याणां कारणत्वेन सिध्यन्ति सत्वर
स्तमांस्येव पर्य्यवस्यन्ति तेषान्तथात्वात् उक्तं तत्वसंग्रहे प्रीत्यप्रीति
षादात्मकाः प्रकाशप्रवृत्तिनियमार्थाइति । अयमर्थः सत्वरजस्तमो-
णाः प्रीत्यप्रीतिविषादात्मकाः क्रमात् सुखदु-खमोहात्मकाः क्रमादेव
काशप्रवृत्तिनियमप्रयोजनाश्च । स्वच्छं सत्वं प्रकाशयति रजोगुणः
काशकार्ये सत्वं प्रवर्त्तयति लघोस्सत्वगुणस्य चलनस्वभावेन रजसा
त्र प्रवर्तने प्रसक्ते यथाकार्यं गुरुस्तमोगुणो नियच्छतीति । नचा-
तोरसिद्धिः कार्याणां सुखदुःखमोहान्वितत्वस्य लोकसिद्धत्वात् ।
ाहि घटो येन प्राप्यते तं प्रति सत्वगुणोद्भवात् घटस्सुखात्मको
वति यदीयस्सोन्येनापह्रियते तं प्रति रजोगुणोद्भवात् दुःखात्मको
वति । यस्य तस्मिन्नुपेक्षया दर्शनमेव नोदेति तम्प्रति तमोगुणोद्भवात्

मोहात्मको भवति मुह वैचित्य इति धातुः । नच गुणानां पुरुषभेद
वस्थयोद्भवे विनिगमनाविरहः तत्तत्पुरुषभोगरूपप्रयोजनवशा
सिद्धेः । तद्यथा सत्वं रजस्तमसी कंचित्प्रति कदाचिदभिभूय शा
स्ववृत्तिं लभते । एवं रजस्सत्वतमसी अभिभूय घोरां स्ववृत्तिं ।
सत्वरजसी अभिभूय मूढां स्ववृत्तिमिति । नच द्वितीयानुमानस्य प
एवादिकारणकत्वेनार्थान्तरं लाघवादेककारणकत्वसिद्धेः । नचत
ब्रह्मप्रकृतिकत्वेनार्थान्तरं जडं सुखदुःखमोहात्मकं कार्यजातं प्रत्य
भूतस्य कारणत्वेन सिद्ध्यनवकाशादिति एवं रूपस्य साङ्ख्यानुमा
दूषणानुमानमुच्यते । प्रधानं न जगद्रचनायां समर्थम् । अचेतनत्वे
चेतनानधिष्ठितत्वात् । यदेवं तदेवम् । यथा चेतनानधिष्ठितं मृद्दा
कम् । न चव्याप्त्यसिद्धिः चेतनानधिष्ठितस्य कार्यारम्भकत्वानुप
चेतनाधिष्ठितस्यैव कार्यारम्भप्रवृत्तेस्सर्वत्र दर्शनाच्च । ननु सिद्धान्ते
प्रसिद्धिः । नच प्रधानक्षेत्रज्ञपतिर्गुणेश इति श्रुतिसिद्धं प्रधानं सि
न्तेऽप्यस्तीतिवाच्यम् । तस्यानुमानगम्यत्वाभावेन कर्मण्युत्पन्नसूत्रानु
पदनिर्देश्यत्वायोगात् ।

साध्यस्य च बाधः प्रधानस्य सिद्धान्ते जगद्रचनासामर्थ्या
मात् । हेतोश्चासिद्धिः तस्य सिद्धान्ते चेतनाधिष्ठानसत्वादिति चेत्स
परप्रक्रियया परोदूषणीय इति परसिद्धं पक्षादिकं परिगृह्य दम
मुक्तम् । यद्वा परानुमानस्य प्रतिकूलतर्करूपं दूषणानुमानमुक्तम् ।
प्रधानम् अचेतनत्वे सति चेतनानधिष्ठितं स्यात् । जगद्रचनायाम
स्यात् अथवा हेतोर्विशेष्यांशस्य साध्ये प्रतियोगिविशेषणतयाऽन्वय
प्रधानं न चेतनानधिष्ठितं कार्यजनकम् । अचेतनत्वात् घटगृहादिज
दार्वादिवदित्यनुमानशरीरम् । नचानुमानिकप्रधानानभ्युपगमादा
सिद्धिः । महदादिकं सप्रकृतिकं कार्यत्वाद् घटादिवदित्यनुमानस्य वि
भावेन सिद्धान्तेऽभ्युपगन्तुं शक्यत्वात् । साध्ये स्वातंत्र्याप्रवेशात्तस्ये
पारतन्त्र्यमात्रे श्रुत्यपेक्षणात् । नन्वचेतनस्य चेतनाधिष्ठितस्यैव प्रवृ
न नियमः वत्सवृद्ध्यर्थं धेनुगतस्य क्षीरस्य स्वयमेव प्रस्नवदर्शनात् ।
वृद्ध्यर्थं वारिदमुक्तस्य जलस्य स्वयमेव निस्सरणदर्शनात् । एवं पु
भोगापवर्गार्थं चेतनानधिष्ठितस्यापि प्रधानस्य प्रवृत्तिसम्भवादिति
क्षीरजलयोरप्यचेतनत्वाच्चेतनाधिष्ठानाभावे प्रवृत्त्यसम्भवतौल्येन प

पक्षतौल्येऽपि व्यभिचाराभावात् एतेन धेन्वाद्युपभुक्ततृणादेः क्षीरादि
भावापत्तिरपि व्याख्याता । तत्रापि चेतनाधिष्ठानावश्यम्भावेन पक्षतौ-
ल्यात् अन्यथा चेतनविशेषसंकल्पस्य नियामकाभावे अनडुहाद्युपभुक्त
स्यापि तृणादेः क्षीरादिभावप्रसङ्गात् नच धैनवजाठराग्निसंयोगे
कश्चित्पाके विशेषः । अग्निसंयोगमात्रस्य पाकहेतुत्वात् तस्य अनडुहादि
जठरसंयोगेऽप्य विशेषात् । पाचकसङ्कल्पविशेषात् पाकविशेषस्तु
लोके दृष्टः । नन्वप्रयोजकमिदं चेतनाधिष्ठानानुमानं यथा प्रवृत्तिशक्ति-
युक्तोऽन्धः दृक्छक्तियुक्तपङ्गुसन्निधानात्प्रवर्त्तते । यथा चाऽयस्कान्त-
मणिसन्निधानादयः प्रवर्त्तते तथा चैतन्यवपुषः पुरुषस्य सन्निधानात्
प्रधानस्य प्रवृत्त्युपपत्तेरिति चेत् । एवं दृष्टान्तोपादानेऽपि प्रधानस्य
प्रवृत्त्यसम्भवरूपदोषस्तदवस्थः । अस्ति हि पङ्गोर्गमनशक्तिविकलस्य
अन्धेनोह्यमानस्य स्वयं मार्गदर्शनं वोढारमन्धं प्रति तदुपदेश इति च
व्यापारः । अयस्कान्तमणेरप्ययस्समीपगमनं तदभिमुखीभाव इत्यस्ति
व्यापारः । पुरुषस्य तु निष्क्रियस्य न तादृशः कश्चिद्व्यापारः अयः प्रवृत्ता-
वपि चेतनाधिष्ठानावश्यम्भावान्न व्यभिचारोऽपि । तस्मान्निर्दोषं दूष-
णानुमानम् । साङ्ख्यानुमानमेव च प्रतिकूलतर्कपराहतम् । पुरुषसन्नि
धानमात्रेण प्रधानस्य परिणामित्वे सर्गव्यतिरेकः प्रलयः कदापि न
स्यात् । नित्यस्य पुरुषसन्निधानस्य सर्वदावशिष्टत्वादिति तस्मादधिष्ठातु
रीश्वरस्यैव सङ्कल्पविशेषास्सर्गप्रलयनियामका इत्यभ्युपेयम् । न च
धर्माधर्मावेवतन्नियामकौ स्यातामिति वाच्यम् । धर्माधर्मयोः परमपुरुषा-
राधनतद्विपर्ययरूपतयैव सकलश्रुतिप्रसिद्धयोस्तदभ्युपगतावात्मलाभाभा-
वात् । यदि च गुणानां कदाचित्साम्येनावस्थानमभ्युपेत्य तदा गुणाना
मुत्कर्षापकर्ष निवन्धनाङ्गाङ्गिभावाभावात् तन्निमित्ता जगत्प्रसूतिर्नास्तीति
प्रलय उपपाद्यते तदा प्रलयाऽवस्थायां साम्येनावस्थितानां क्षोभकपुरुष
व्यापाराभावेन स्वयमेव वैषम्यावस्थांप्राप्तुमक्षमाणामङ्गाङ्गिभावानुपपत्तेः
कदाचिदपि जगत्सर्गो न स्यात् । यदि सुखदुःखमोहात्मकवैषम्यावस्थं
जगत् दृष्ट्वा यथाकार्यं वैषम्यावस्थापन्नमेव त्रिगुणमनुमीयते तदा
धर्मिग्राहकमानसिद्धाया वैषम्यावस्थायास्सदानुवृत्तेस्सदा सर्ग एव स्यात् ।
यदुच्येत त्रिगुणं न वैषम्यावस्थं नापि साम्यावस्थमनुमीयते येन सदा
सर्गः प्रलयोवा स्यात् किन्त्वनादिसृष्टिप्रलयप्रवाहमूलाद्विविधसंस्का-
रानुवृत्तिसद्भावात्तत्संस्कारोद्बोधानुसारतः साम्यवैषम्यभागुभयस्वभा-

वमनुमीयतइति । नैतदपि युक्तम् । अन्धस्य मार्गोपदेशकपङ्गुसन्निधानान् मार्गज्ञातृत्ववत् प्रधानस्य निर्व्यापारपुरुषसन्निधानात् । चिच्छायापत्त्या ज्ञातृत्वासम्भवस्योक्तत्वात् ।

तदसम्भवे चाचेतनस्य चेतनाधिष्ठानं विना प्रवृत्त्ययोगात् किञ्च प्रधानाभ्युपगमे यदि प्रयोजनं किञ्चित्स्यात् तदा यथा कथञ्चि भ्युपगच्छेम । न किमपि प्रयोजनमस्ति पुरुषस्य भोगापवर्गौ हि प्रयो जनमितीष्यते भोगश्च सुखदुःखानुभवरूपः प्रधानपरिणामरूपायाबुद्धे पुरुषस्य तु बुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य तद्दर्शनं भोगः । तस्य विवेकाग्रहात् आध्यासिकं भोक्तृत्वं भोक्तृत्वाध्यासस्य तद्विवे ख्यात्या निवृत्तिर्मोक्ष इति साङ्ख्यैरिष्यते । नच निर्विकारचैतन्यमा पुषः पुरुषस्य सविकारबुद्ध्यैक्याभिमानः तदीय भोगदर्शनं तद्विवेक सन्धानं वा सम्भवति ननु साङ्ख्यैरेव बुद्ध्यादिष्वचेतनेष्वसम्भावित भोक्तृत्वमोक्षोपायश्रवणादिप्रवृत्तिभ्यां बुद्ध्याद्यतिरिक्तो भोक्ता श्रव प्रवृत्तिमांश्च पुरुषस्साधितः पुरुषोऽस्ति भोक्तृभावात् । कैवल्यार्थप्र श्चेति " प्रकृतेः पुरुषभोगार्थत्वञ्च तत्स्वरूपदर्शने सति तदैव पुरुषस्य वर्गश्चेत्येतदुभयमपि बहुधा प्रपञ्चितम् ।

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः गुणवत्यगुण सतः तस्यार्थमपार्थकं चरति । रङ्गस्य दर्शयित्वा निवर्त्तते नर्तकी नृत्तात् । पुरुषस्य तथात्मानं प्रकाश्य विनिवर्त्तते प्रकृतिः । प्र सुकुमारतरं न किञ्चिदस्तीतिमे मतिर्भवति । याद्दृष्टाऽस्तीति पुनर्नदर्श मुपैति पुरुषस्येति। तस्मादस्त्येव तन्मते पुरुषस्य प्रकृतिभोक्तृत्वं तद्य दर्शनार्थश्रवणादिकर्तृत्वञ्च । अतः कथं तन्मते प्रयोजनासम्भव चेत्तर्हि परस्परविरुद्धार्थकथनादेव तन्मतमसमञ्जसम् । तत्वसङ्ग्रह हि । तस्मान्नबध्यते नापि मुच्यते नापि संसरति कश्चित् । संस बध्यते मुच्यते च नानाश्रयाप्रकृतिरित्यादिभिः प्रकृतेरेव बन्धमोक्षावि प्रपञ्चितं किञ्च जगतः कारणं सिद्ध्यत् लाघवादेकमेव प्रकृति सिद्ध्यतीति वदद्भिरेव गुणत्रयसङ्घात एव प्रकृतिः नतु तद्व्यति प्रकृतिर्नामास्तीत्यभ्युपगतं ततोऽपि तन्मतं विप्रतिषिद्धं पञ्चविंशति त्वानीत्युक्त्वैव गुणाः परस्परभिन्ना इत्यप्युक्तं तदपि विप्रतिषिद्धम् । भेदे हि सप्तविंशतिस्तत्वानि स्युः । अर्थविप्रतिषिद्धं चेदं दर्शितम् ।

पटलाभादिमतां सुखदुःखमोहा भवन्तीति विषयाणामपि सुखदुःखमोहा-न्वयकल्पनं युक्तं रजतभुजगादिदर्शिनामिच्छाद्वेषाद्युदयेन विषयाणा-मपि तद्वत्त्वकल्पनापत्तेः । विषयाणां सुखदुःखाद्यन्वये च तत्कारणं कुतस्सुखदुःखमोहात्मकं सिद्ध्यति । न खलु शौक्ल्यगोत्वादिकं विषया-न्वितमिति तत्कारणमपि शौक्ल्यगोत्वादिरूपंभवतीति विषयान्वितं द्रव्यं घटान्वितमृन्न्यायेन कारणं भवतीतिचेन्न सत्वरजस्तमसां द्रव्यत्वा-सिद्धेः पृथिव्यादिद्रव्यादिगतलघुत्वप्रकाशादिहेतवस्तद्गुणाएव हि सत्वादयः । अतएवगुणाइत्येव तेषां प्रसिद्धिः तस्मात्परस्परविप्रतिषेधार्थ विप्रतिषेधाभ्यामप्यसमञ्जसं साङ्ख्यमतम् ।

॥ इति साङ्ख्यमतनिरसनम् ॥

औपनिषदानामात्मतत्त्व इयं प्रक्रिया तथाहि देहेन्द्रियमनोबुद्धि प्राणादिविलक्षणो ज्ञानस्वरूपोज्ञाताऽहमर्थरूपः परमेश्वरायत्तास्वरूप-स्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरभिन्नोऽनन्तव्यक्तिर्बन्धमोक्षार्हः प्रत्यगात्मा तथाचोक्तं भगवद्भिराद्याचार्यचरणैः ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् । अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः । ) इत्यादिना व्याख्यातश्चायं श्लोकः श्रीपुरुषोत्तमाचार्य्य चरणैर्वेदान्तरत्नमञ्जूषायां तत्रैवास्य व्याख्यानं द्रष्टव्यम् । आद्यविशेष-णेन देहेन्द्रियाद्यात्मवादिनां मतमपाकृतं भवति तेषां खण्डनप्रकारः प्रागेव निरूपितः ।

देहेन्द्रियादिविलक्षणस्य ज्ञानेच्छादिचतुर्दशगुणाश्रयस्य विभु-परिमाणकद्रव्यविशेषस्य तार्किकैरप्यात्मत्वेनाभ्युपगमात्तत्रातिव्याप्ति निवारणाय ज्ञानस्वरूपइति । ज्ञानं चैतन्यं स्वरूपमस्येति तथा सः । सन्ति च प्रत्यगात्मनो ज्ञानस्वरूपत्वे श्रुतयः प्रमाणभूताः ।

( तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमयः ) यथा सैन्धवघनोऽनन्तरोवाह्यः कृत्स्नो रसघन एवायमात्माऽनन्तरो वाह्यः कृत्स्नः प्रज्ञानघन एव अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्याद्याः । निर्विशेषचिन्मात्रं ब्रह्मैव जीवत्वेनाभ्युपगच्छतां मायावादिनां मतेऽ-तिप्रसक्तिनिरासाय ज्ञातेति ज्ञानाश्रयइत्यर्थः ( अविनाशी वाऽरे अय-

मात्मा अनुच्छित्तिधर्मा । अथ योऽयं वेद जिघ्राणीति, स आत्मा आत्मा योऽयं विज्ञानमयः प्राणः सुहृदन्तर्ज्योतिः पुरुष एव द्रष्टा रसयिता मन्ता वोद्धा विज्ञानात्मा पुरुषः नहि द्रष्टुर्दृष्टेर्विपरिलो विद्यतेऽविनाशित्वात् । नहि श्रोतुः श्रुतेः नहि मन्तुर्मतेः नहि वि र्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वात् । विज्ञातारमरे केन विजा यात् ) जानात्येवायं पुरुषः । न पश्योमृत्युं पश्यति न रोगं नोतदुः स उत्तमः पुरुषो नो पजनं स्मरन्निदं शरीरम् एवमेव परिद्रष्टुरिमाः षो कलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्तीत्याद्याः श्रुतयः प्रत्यगा स्वाभाविकं ज्ञातृत्वं वोधयन्ति वादरायणेनापि प्रत्यगात्मनां ज्ञा सूत्रितम् । ( ज्ञोऽतएव ) २ । ३ । १६ इति ।

अयमात्मा ज्ञ एव ज्ञानस्वरूपत्वे सति ज्ञातृस्वरूप एव न पा कल्पः नापि ज्ञानमात्रं कुतः । अतएव श्रुतिभ्य एवेत्यर्थः श्रुतयः प्रा दिष्टाः । प्रत्यगात्मा ज्ञाता आत्मत्वात् ब्रह्मवत् । प्रत्यगात्मा यदि श्रयो न स्यात्तर्हि तदुपदेशशास्त्रस्य सार्थक्यमपि न स्यात् जानात्ये पुरुष इति श्रुतेः । नच स्यादेतद्यदि तवाभिप्रेतं धर्मज्ञानं सिद्ध तदस्ति ज्ञानयोरत्यन्तसजातीयतया ऽऽधाराधेयभावाऽसम्भवाज्जले प जलवत्तथाच ज्ञानस्वरूपस्यात्मनो ज्ञानाश्रयत्वं न घटते स्वस्मिन् त्तित्वाभावेन विरुद्धत्वात् । वस्तुनोऽभेदआधाराधेयभावादर्शनाच्चे ति विषमोऽयं दृष्टान्तः जलयोर्द्रव्यत्वेन तत्र भेदानुपलब्धिरिष्टा अत्यन्तसाजात्यात् । धर्मधर्मिणोरत्यन्तसाजात्यं यदि तयोरभेद कारणं स्यात्तदा धर्मधर्मिणोरभेदस्स्यात् । नत्वेवं किन्तु तयोरत्यन्त त्येन धर्मधर्मिणोर्भेदो न ग्रहीतुं शक्यते परन्तु जलस्य सावयवद्रव्य भेदस्यानुमातुं शक्यत्वात् । यदि सावयवद्रव्यत्वेन भेदो नाङ्गी तदा जलस्य वृद्धिह्रासो नोपपद्येत, ज्ञानस्वरूपजीवतद्धर्मयोर्ज्ञा साम्येऽपि धर्मत्वधर्मित्वावच्छिन्नतया आधाराधेयभाव उपपादयितुं क्यते । ज्ञानस्वरूप आत्मा धर्मी ज्ञानं तद्धर्म इति विवेकः । दृ लोके द्युमणिप्रभयोः द्युमणित्वेन प्रभात्वेन धर्मधर्मिभावः प्र वच्छिन्नधर्मतानिरूपिता द्युमणित्वावच्छिन्नधर्मितेति यावत् ।

तथाचोक्तप्रकारेणाश्रयाश्रयीभावो न विरुद्ध्यते नच मण्या ऽवेव प्रभात्वव्यवहारः सूर्यस्यावयवा एव विशीर्यमाणा लोके व्य

वाच्यम् कालान्तरे द्रव्यनाशप्रसङ्गात् नच तत्रावयवान्तरोत्पत्तिः कल्पनीयेति वाच्यम् । प्रमाणाभावात् । प्रभातद्वतोर्भेदस्य च प्रत्यक्षसिद्धत्वात् रामेणानुगता सीता भास्करेण प्रभा यथेति सर्वज्ञश्रीवाल्मीक्युक्तेः । अन्यथा रजतादिसम्पुटनिहितायाः कस्तूरिकाया अवयवनाशे कालान्तरे सर्वस्यानुपलब्धिप्रसङ्गः स्यात् । तस्माद्यथा सूर्यतत्प्रभयोस्तेजस्त्वाविशेषेऽपि सूर्यत्वप्रभात्वावच्छिन्नतयाऽऽधाराधेयभावः प्रत्यक्षादिप्रमाणसिद्धस्तथा प्रकृतेऽपि । उभयोर्ज्ञानत्वसाम्येऽपि धर्मत्वधर्मित्वावच्छिन्नतयाऽऽधाराधेयभावउपपद्यते । इति ज्ञातृत्वं प्रत्यगात्मनः सिद्धम् । सचाहमर्थाभिन्नइति दर्शयितुमहमर्थरूपइत्युक्तम् । अहमर्थएव रूपं स्वरूपं यस्य स,अहं जानामीच्छामि करोमीत्यादिप्रत्ययेभ्यः । ननु सुषुप्त्यादावहमर्थस्य व्यभिचारान्नास्ति, अस्मदर्थस्यात्मत्वम् । आत्मनः सर्वास्ववस्थास्वनुगतत्वात् अतः प्रकृतिकार्यरूपएवायमहं जानामीत्यादिप्रतीतिविषयोऽहमर्थः । अहङ्कारइतीयं मे भिन्ना प्रकृतिरष्टधेति भगवदुक्तेरिति चेन्न, उक्तहेतोः स्वरूपासिद्धत्वात्तथाहि सुषुप्त्यादावहमर्थस्यावगमोमानसिद्धः एतावन्तंकालं सुख महमस्वाप्सं न किंचिदवेदिषम् ।

एतावन्तं कालं मूर्च्छितएवासमित्यादिप्रत्यभिज्ञाया एव मानत्वात् । तस्मात् सुषुप्त्यादावपि सुखाज्ञानविषयकज्ञानाश्रयाभिन्नोऽहमर्थोऽनुगतएव विशेषविषयाभावेन विशेषविषयकप्रत्यक्षस्यानुत्था नात् । नचैतावन्तं कालं मामप्यहं नावेदिषमित्यस्मदर्थाभावविषयकप्रत्ययस्य नजानात्ययमहमस्मीतिश्रुतेश्च सुषुप्तावहमर्थाभावे मानत्वात् कथमस्मदयुक्तहेतोः स्वरूपासिद्धत्वमिति वाच्यम् एतावन्तं कालं मामप्यहं नाऽवेदिषमितिप्रत्यये ऽहमर्थस्यानुवृत्तिदर्शनात् । तथाहि । अहं नावेदिषमित्यत्र वेदनाभावाधिकरणतयाऽहमर्थस्य वेदितुरात्मनः प्रतिपत्ते र्नतन्निषेधः कर्त्तुं शक्यते नापि तत्प्रकाशनिषेधः । स्वयं ज्योतिष्ट्वबोधकश्रुतिविरोधप्रसक्तेः वात्द्यार्थस्यापि न स्वरूपतोनिषेधः सुषुप्तौ विश्वप्रलयस्यासम्भवात् । अतः स्वान्यवेद्यविषयनिषेध एव विवक्षितस्तथोक्तप्रत्यये ऽहमर्थस्यानुवृत्तिदर्शनान्नास्मदुक्तहेतोः स्वरूपासिद्धत्वम् । एतावन्तं कालं मामप्यहं नावेदिषमिति श्रुत्यर्थस्तु मामिति द्वितीयान्तस्य कर्मरूपाहमर्थस्य जाग्रदनुभूतानादिकर्मसंस्कारप्रयुक्तात्माभिमतदेहाद्यवच्छिन्नोविषयः । अहमिति प्रथमान्तस्य कर्त्तु रस्मदर्थस्य

देहादिविलक्षणशुद्धब्रह्मात्मकप्रत्यगात्मा ज्ञाताविषयः तथाच जाग्रदव
नुभूतदेहादियुक्तत्वरूपविशेषणविशिष्टमहमर्थरूपमात्मानं नावेदि
देहादिविलक्षणशुद्धात्मेति तत्र देहादिविलक्षणस्य शुद्धात्मास्मद
तत्र सत्वेऽपि जाग्रदनुभूतदेहादियुक्तत्वरूपविशेषणस्याभावाद्वि
भावस्तद्विषयकानुभवाश्रयस्य सत्वं तत्राप्यव्याहतं । तस्य ज्ञात
भानमपि सूपपन्नम् । एवमहमर्थस्य सर्वावस्थानुगतत्वात् । अनुभ
त्योरेकाधिकरणनियमाच्च, उक्तहेतोरसिद्धत्वं तादवस्थ्यमेव । अ
एतावन्तं कालं नाहमासमिदानीं जातोऽहम् । एतावन्तं कालं नाह
किन्तु किञ्चिन्मद्विलक्षणानुभूतिमात्रमासीदिदानीं तदन्योऽहमस्मी
प्रत्यभिज्ञानं स्यात् तस्य तु कुत्राप्यदृष्टश्रुतत्वादनुपपन्नं । तस्मादु
यप्रमाणसिद्धज्ञात्रभिन्नाहमर्थएवात्मेति सिद्धम् ।

किञ्चास्तां तावदहमर्थस्य सुषुप्त्यादौ व्यभिचारशङ्का मो
या मपि तस्यानुगतत्वेनात्मस्वरूपत्वनिश्चयात् । तथाहि विश्वलय
महाप्रलये ऽवशिष्टयैकाद्वितीयशब्दाभिधेयस्य परब्रह्मणः श्रीपुरु
स्य नित्यमुक्तत्वं तावन्निर्विवादं तथाच तस्यापि ज्ञात्रभिन्नाहमर्थस्व
प्रतिपादयन्त्य स्तत्साम्यापन्नानां मुक्तानां जीवात्मनामपि तथात्वं
न्वन्ति श्रुतयः " ब्रह्मैवेदमग्र आसीत् । सचात्मानं वेदाहं ब्रह्मा
बहुस्यां प्रजायेय नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतं करवा
निरञ्जनः परमं साम्यमुपैतीत्याद्याः।" न केवलमेतासांश्रुतिनामत्रप्रम
किन्तु मुक्तानां वामदेवादीनामनुभवश्रवणमपि तद्धयेतत् पश्य ऋषि
देवः प्रतिपेदे, अहं मनुरभवं सूर्य्यश्च । अभयं वै जनकः प्राप्तोऽसि यदा
मेव वेदाहं ब्रह्मास्मीति । श्रीमद्भगवद्गीतायामपि श्रीमुखेनैवाहमर्थ
त्वं निर्णीतं तथाहि 'वेदाहं समतीतानि वर्त्तमानानि चार्जुने'त्यस्मद
सर्वज्ञत्वयोगः । " अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा मत्त
प्रवर्त्तते " इति जगज्जन्मादिकारणब्रह्मलक्षणलक्षितत्वम् ।
मत्वा भजन्ते मां बुधाभावसमन्विता । सर्वज्ञानवद्भजनीय
"तेषामहं समुद्धर्तेति " संसारनिवारकत्वम् । मम साधर्म्यमा
इति मुक्तोपसृप्यत्वम् । " मामप्राप्यैव कौन्तेयततोयान्त्यधमांगति
तदप्राप्तेः संसारकारणत्वम् । " अतोऽस्मि लोके वेदेच प्रथितः
त्तमइति " " मत्तः परतरं नान्यत्किञ्चिदस्ती " त्यन्वयव्यतिरे

र्वोत्कृष्टत्वम्। "अहमात्मागुडाकेश। क्षेत्रज्ञं चापिमांविद्धीति" विश्वा-
तरात्मत्वम्। "विष्टभ्याहमिदं कृत्स्नमिति" सर्वाधारत्वम्। "न
दस्ति विना यत्स्यान्मया भूतं चराचरामिति" सर्वव्यापकत्वम्।
वेदैश्च सर्वै रहमेववेद्य इति" शास्त्रयोनित्वम्। "प्रकृतिं विद्धि
परामिति" चेतनाचेतनप्रकृत्यधिष्टातृत्वम् "अवजानन्ति मां
ढाइति" तदवज्ञयामूढत्वराक्षसत्वासुरत्वप्राप्तिहेतुत्वम्। "मामेकं
रणं ब्रजेति सर्वशरण्यत्वम् "अहं त्वां सर्वपापेभ्योमोक्षयिष्यामि
शुचइति" सर्वपापनाशकत्वं तच्छरणागतस्य शोकाभावश्चेत्यादिना
था।च सर्वशास्त्ररूपाया गीताया अस्मदर्थाभिन्नसर्वज्ञानन्तविचित्रशक्त्या-
यः श्रीभगवान् पुरुषोत्तमोरमानिवासः श्रीकृष्णएव विषयइति निर्श्चीयते,
ाहृतहेतुगर्भितवाक्येभ्यः तस्मादहमर्थाभिन्नएव परब्रह्मभूतोविश्वात्मा
गवान्वासुदेवः। तथैवास्मदर्थाभिन्ना उक्तलक्षणलक्ष्या जीवात्मनः। इति
द्धम्। किञ्च सर्वश्रुतिमूलभूतस्य सर्वमन्त्रशिरोमणिरूपस्याप्यस्मच्छ-
प्रयोगदर्शनात् गायत्र्याख्यस्याप्ययमेवार्थः ज्ञात्रभिन्नास्मदर्थएवात्मेति
वत्। ननु आत्मबुद्ध्योरन्योन्याध्यासाभिप्रायको ऽयमस्मत्प्रयोगोना-
स्वरूपइति चेन्न धीशब्दस्य पृथक् प्रयुक्तत्वात्। "योदेवो नो धियः
चोदयादि"त्यत्र योदेवपदार्थः सार्वज्ञ्याद्यनन्ताचिन्त्ययावदात्मवृत्तिस्वा-
विकगुणशक्तिवैभवाश्रयः परमेश्वरो विश्वात्मा स नोऽस्मदर्थभूतानां
वात्मनां सम्बन्धिधीबुद्धिर्विषयप्रवणा तस्याधिय इति कर्मणि षष्ठी
यमित्यर्थः यद्वा द्वितीयान्तवहुवचनमिदं वोद्धव्यम् तथाच या विषय-
वणाः ताः प्रचोदयात् स्वविषयिका ब्रह्मस्वरूपविषयिकाः कुर्यादिति
णोनियन्तृत्वेन स्वतन्त्रसत्वयोगोऽस्मदर्थभूतानाञ्च प्रत्यगात्मनां
शब्दोपलक्षितचेतनवर्गस्य च नियम्यत्वेन परतन्त्रसत्तायोगश्च स्पष्टं
न्त्रतइति। एतेन कर्तृत्वमपि निरूपितं, तथाहि (विज्ञानं यज्ञं तनुत-
) कर्त्ता शास्त्रार्थवत्वादिति शास्त्रात्।

किं प्रकृतिरेव कर्त्रीति तदीयकर्तृत्वाध्यासेन जीवस्य कर्तृत्व-
वहारः। उत स्वभावत एव जीव कर्त्तेति संशये पूर्वपक्षः। "अकर्तै
त्मा"। कठवल्लीषु "हन्ताचेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् उभौ
न विजानीतो नायं हन्ति न हन्यते"। इतिश्रवणात्। हन्तुं हन्तारं
न्तुमित्यादाविव। औणादिकस्तुन् प्रत्ययः। "य एनं वेत्ति हन्तारं

यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते
इति श्रीगीतावचनैकार्थ्यात्। हननकर्तृत्वप्रतिषेधश्च कर्तृत्वमात्र
षेधोपलक्षणम्। अतएव गीतासु भगवद्वचनम्। "प्रकृतेः क्रियमा
गुणैः कर्माणि सर्वशः। अहङ्कार विमूढात्मा कर्त्ताहमिति मन
"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यत" इति। अतो जीवः प्रकृ
कर्तृत्वमात्मन्यध्यस्यन् कर्त्तेति व्यपदिश्यते शास्त्रमपि त
कर्तृत्वमपेक्ष्य प्रवर्त्तते। एवं प्राप्ते सिद्धान्तः। बुद्धेः प्रकृतेर्वा क
यजेत स्वर्गकामः। "मुमुक्षुर्ब्रह्मोपासिते" त्येवमादिशास्त्रं स
ग्गादिफलकामं भोक्तारमेव नियुङ्क्ते शास्त्रफलं प्रयोक्तरीतिन्या
अस्यार्थः विधिनिषेधात्मकं फलं प्रयोक्तरि, कर्मप्रयोक्तरि, त
कर्म कृतिमति यजमान एव तस्मात्स्वयमेव यजमानोऽङ्गप्रधानेषु
स्यादिति। किञ्च शास्त्रेण कर्ता बोधजननद्वारा नियुज्यते नचाचे
बुद्धिप्रकृत्योः बोधनीयत्वमस्ति। अतोभोक्तृत्वात् बोधनीयत्वा
विधिनिषेधशास्त्रनियोज्यइति युक्तम्।

नच कूटस्थआत्माऽहङ्कर्तेति परकीयकर्तृत्वमात्मन्य
प्रभवति हन्ताचेन्मन्यते हन्तु मिति मन्त्रस्तु। न जायते म्रिय
विपश्चिदितिमन्त्रे नहन्यते हन्यमाने देह इति देहातिरिक्तस्यात्मन
नायोग्यत्वेन प्रकृतत्वात्तद्विषयतयोपपद्यते कर्तृत्वप्रतिषेधिकानि भग
नानि तु प्रकृतिगुणादिकमनपेक्ष्य केवलस्य जीवस्य कर्तृत्वप्रतिषे
"तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः पश्यत्यकृतबुद्धित्वान्न
श्यति दुर्मतिरिति" तदीयवचनान्तरेणैकार्थ्यात्, तत्र केवल
स्वातन्त्र्यपरः। उक्तार्थे मानम्। सांसारिकप्रवृत्तावधिष्ठानादिप
हेतुत्वात् केवलं स्वातन्त्र्येण स्वात्मानं कर्त्तारं मन्यमानोदुर्मति
सर्वथा कर्तृत्वप्रतिषेधे तु केवलपदस्य वैयर्थ्यं प्रसज्येत अन्यथा
दीनां कर्तृत्वे तेषामेव भोक्तृत्वापत्तिस्तयोस्सामानाधिकरण्यनि
नह्यन्यकर्तृककर्मणा अन्येषां भोक्तृत्वं कुत्रापि प्रसिद्धम्। अपिच
कर्तृकप्रवाहस्य नित्यत्वेनानिर्मोक्षप्रसङ्गोमुक्तानामपि भोक्तृत्व
श्चदुर्वार इतरकर्तृकत्वप्रसङ्गात्। किञ्च भोक्तृत्वमात्रस्वीकारे भुजि
व्यापाराश्रयत्वेनावश्यम्भावात् कथं कर्तृत्वमात्मनइति पण्डितम्म
चारणीयम्। दैवञ्चैवात्रपञ्चममित्यत्र दैवशब्दः परमात्मपरः

परमात्माधीनमेव प्रत्यगात्मनः कर्तृत्वम्। "सकारयेत् पुण्यमथापि पापं न तावता दोषवानीशितापि" इत्यादिश्रुतेः। बद्धावस्थायां प्रत्यगात्मनां सङ्कुचितज्ञानक्रियाशक्तिकतया ज्ञानक्रियादिजनने मनआदीनां सहकारित्वं मुक्तावस्थायान्तु स्वपरस्वरूपाविर्भावेन बुद्धीन्द्रियादिनिपेक्षत्वमिति विवेकः। सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशइतिश्रुतेः। एवं भोक्तृत्वादयोऽप्यूहनीयाः, तथाहि सुषुप्त्यादौ सुखादिभोक्तृत्वे प्रत्यभिज्ञाया भोक्तापत्तौ "जक्षन् क्रीडन्नित्या" दिश्रुते श्च मानत्वत् कर्तृत्वभोक्तृत्वयोरेकाधिकरणत्वनियमात्। तस्मात्स्वाभाविककर्तृत्वाद्याश्रयत्वं प्रत्यगात्मनां सिद्धम्। उक्तलक्षणस्य परब्रह्मणि पुरुषोत्तमाख्येऽपि समन्वयात्तदतिव्याप्तिस्तद्वारणाय परमेश्वरायत्तस्वरूपस्थितिप्रवृत्तिकइति। अस्मदर्थाभिन्नसर्वनियामकविश्वात्मनोवासुदेवस्यायत्तांतन्त्रंस्वरूपस्थितिप्रवृत्तियस्यसः स्वरूपञ्च स्थितिश्चप्रवृत्तिश्चेतिसमाहारः स्वरूपसम्बन्धिन्यौ स्थितिवृत्ती, इति वा सर्वदेश कालीनवस्तुविषयकज्ञानादौ क्रियाप्रवृत्यादौ च स्वातन्त्र्यशून्यइत्यर्थः। तथा च देहादिविलक्षणज्ञानात्मत्वेऽस्मदर्थाभिन्नज्ञानाश्रयत्वे च सति परमेश्वराधीनस्वरूपस्थितिप्रवृत्तिकत्वमिति त्रिविधानामपि प्रत्यगात्मनां साधारणं लक्षणम् तथात्वे च पूर्वदलयोः परमेश्वरसाधारणत्वेऽपि उत्तरदलस्यासाधरणस्य तत्रासत्वान्नोक्तदोषा-वकाशः। नन्वेवं परमेश्वरे वैषम्यनैर्घृण्यप्रसक्तिस्तस्यैवप्रयोजककर्तृत्वाभ्युपगमात् पुण्यापुण्ययोगस्यापि तत्रैवप्रसङ्गापत्तेरितिचेन्नवैषम्यादीनां कर्मसापेक्षत्वान्नतत्र प्रसङ्गः। भगवता सूत्रकारेणाप्येतत्समाहितम्। वैषम्य नैर्घृण्ये न सापेक्षत्वादिति नच तर्हि कर्मणएवप्रयोजकत्वात् किमीश्वरेण गौरवमात्रफलत्तद्ग्रहस्येति वाच्यम्। कर्मणि जडत्वे-न चेतननियन्तृत्वाद्यसम्भवात्प्रयोजकत्वासम्भवः। अन्यथा घटादावपि तत्प्रसङ्गस्य व्याप्तिसम्भवात् कर्मणश्चै तन्ययोगाभ्युपगमे संज्ञा भेदोऽवशिष्यते न वस्तुभेदस्तस्यैवेश्वरत्वसम्भवात्। प्रागुदाहृतार्थे श्रुतय स्सन्ति। "तमेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभाति" एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते। आत्माहि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः अचिन्त्यशक्तिः पुरुषः पुराणः नचान्येषां शक्तय स्तादृशः स्युः स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशिताऽपि इत्याद्याः। बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः सुखं दुःखं भवो

भावो भयञ्चा भयमेवच । अहिंसा समता तुष्टि स्तपो दानं यशो भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ” इति श्रीमुख वचना सन्धेयानि । यदि प्रत्यगात्मनां मध्यमपरिमाणवत्वं स्यात्तदा वत्सावयवत्वेनानित्यत्वं स्यात्तथासति शारीराणां नित्यत्वप्रतिप श्श्रुतयो वाध्येरन् यदि जीवानां विभुपरिमाणकत्वमिष्यते तदो गत्यागतिभि श्चलनमेव न घटेत तथात्वे उत्क्रान्त्यादिबोधक व्याकुप्येरन्नित्यतः अणुपरिमाणकत्वं प्रत्यगात्मनां प्राङ्नि "अणु ह्येष आत्मा चेतसा वेदतव्यो यस्मिन् प्राणः पञ्चधा सं अणुर्वा ह्येष आत्मा यंवाएते सिनीतः पुण्यं पापम् " वालाग्र शत शतधा कल्पितस्यच भागोजीवः स विज्ञेयः सचानत्याय कल्प्यते श्रुतिभ्यः । उत्क्रान्ति गत्यागतीनां नाणु रतच्छ्रुतेरितिचेन्नेतराधिक तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदित्यादि न्यायाच्च । योयं मयः प्राणेष्विति प्राणसम्बन्धिनं जीवात्मानं प्रस्तुत्य स वाएष आत्मेति महत्वाम्नानान्नाणुरितिचेन्न तत्र जीवादितरस्य ब्रह्मणोऽधि उपक्रमे जीवप्रस्तावे मध्ये यस्यानुवित्तः प्रतिबुद्ध आत्मेति प प्रतिपादनात् ” तदनुवन्धित्वाच्च महत्वाम्नानस्येतिसूत्रार्थः । कृतमेवेदमणुपरिमाणकत्वमात्मनो न स्वरूपतः बुद्धे र्गुणेन नचैवह्यारायमात्रो ह्यवरोऽपिदृष्ट ” इति श्रवणात् । विभुत्वमे तिचेन्न । अहोविवेककौशल्यं भवतो देवानां हितकारिणः स्व स्वभवनं दह्यते ” उक्त वाक्यस्याणुत्वपरत्वेनास्मत्पक्षपातित्वत् । बुद्धेरुपाधेः परिमाणात्मकगुणेन तथात्मनः स्वरूपवृत्तिपरिमाण गुणेन चोभयथापि, अवरो जीवात्मा, आराग्रमात्रोदृष्टः योगभिरनुभूतो वेति । दृश्यते त्वग्रया बुद्ध्या सूक्ष्मैः सूक्ष्मात्म रिति ” श्रुत्यन्तरात् आराग्रमात्रोऽतिसूक्ष्मोऽणुरित्यर्थः ।

अथ प्रत्यगात्मनोऽणुपरिमाणकत्वे तस्य शरीरैकदेशस्य कदा सर्वशरीरावच्छेदेन सुखदुःखाद्युपलब्धिरिति चेन्नैकदे नोऽपि प्रत्यगात्मनोऽणुत्वेऽपि तदाश्रितधर्मभूतज्ञानस्य विभुत्व दोषावकाशः । सूत्रितं भगवता श्रीवादरायेण ( गुणवद्वा लोकव २ । ३ । २५ ) प्रत्यगात्मा हृदिस्थितोऽपि स्वगुणेन ज्ञानेन स व्याप्नोति । यथामणि द्यु मणि र्वा एकदेशवर्त्तिभिः स्वालोकै रने

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः क्षेत्रं क्षेत्री तथाकृत्स्नं प्रकाशयति भारतेति दृष्टान्तोपपत्तिसहकृतश्रीभगवद्वचनश्लोक्तार्थे साधकम्। ननु प्रत्यगात्मनो ऽणुत्वे निरवयवत्वमवश्यम्भाव्यं तथात्वे चेश्वरस्य तत्राव्यापनात्तदन्तर्यामित्वभङ्गइति चेन्न तुच्छत्वाच्छङ्कायाः प्रत्यगात्मनो ऽणुत्वनिरवयत्वयोः सतो रपि परमेश्वरस्य व्यापनशीलत्वेन सर्वत्र व्यापकत्वात्।

अथ कस्मादुच्यते महाविष्णुरिति यस्मात्सर्वाँल्लोकान्सर्वान् देवान्सर्वात्मनः सर्वभूतानि व्याप्नोति। स्नेहो यथा पललपिण्ड ओत प्रोत मनुव्याप्तमिति प्रश्नोत्तराभ्यां निर्णीतत्वाच्छ्रुतिभिः, नहि नियम्यनियन्तृत्वयो र्व्याप्यव्यापकत्वयोश्च भावे सावयवत्वं निरवयवत्वञ्च प्रयोजकं तथात्वे सति कालशब्दस्पर्शादीनां निरवयवाणां भगवन्नियम्यत्वाभावप्रसङ्गात् किन्तु वस्तुवृत्तिव्याप्यत्वव्यापकत्व निमित्तभूता शक्तिरेव तत्र प्रयोजिका एवञ्च सर्वगतस्य परमात्मनः सर्वव्यापकताशक्तियोगश्रवणा त्सर्वमनवद्यम्। तस्मा त्सिद्धं प्रत्यागात्मनामणुत्वम्। इत्थं प्रत्यगात्मनां परिमाणविवादं निराकृतं भवति सम्प्रतितेषां सङ्ख्याविवादं निराकर्त्तुं प्रतिशरीरंभिन्न इति विशेषणमभिहितम्। ब्रह्मादिस्थावरान्तेषु प्रत्येकमेकैको विलक्षणस्वरूपस्यर्थः। एतेन परमात्मनः प्रत्यगात्मनां महद्वैलक्षण्यमुक्तं सर्वगतस्य ब्रह्मणस्सर्वत्रैकत्वात। तथाच तयोरन्यः पिप्पलं स्वाद्वत्त्य नश्नन्नन्योऽभिचाकशीति, श्रुतिमुखेन प्रत्यगात्मपरमात्मनो र्विभागश्रवणात्। अनेनैव जीवानामितरेतरस्वरूपभेदश्च स्पष्ट एवदर्शितः अजो ह्येको-जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति श्रुतेः। नत्वेवाहं जातुनासं नत्वं नेमे जनाधिपाः। नचैव नभविष्यामः सर्वे वयमतः परमिति श्रीमुखवचनाच्च एतेनैकजीववाद पक्षोनिरस्तो भवति।

यद्ये कएव जीव उररी क्रियते तदा सर्वेषां प्राणिनां भोगसाकर्यं प्रसज्येत। नचो पाधिक भेदस्य तन्नियामकत्वमङ्गीकृत्य व्यवस्थोपपद्यत इति वाच्यम्। हस्तपाद्याद्युपाधिभेदेऽप्यनुसन्धानदर्शनात्। नचान्तः करणभेदो ऽविद्याभेदो वा तन्नियामक इति वाच्यम्। तन्यैक्ये चक्षुरादिभेदवदन्तः करणभेदस्यानुसन्धानप्रयोजकत्वासम्भवात्। नन्वन्यकरणभेदस्याप्रयोजकत्वेऽपि तदैक्याध्यासापन्नान्तः

करणभेदस्यानुसन्धानप्रयोजकत्वमभ्युपगन्तुं शक्यत इति
निर्विशेषस्वप्रकाशे ज्ञाताज्ञात विभागहीने चेतनेऽन्तः करणादे
त्म्यारोपासम्भवात् । किञ्च प्रतिदिनमन्तःकरणमुत्पद्यते
चेत्यन्तः करणभेदात् पूर्वदिनानुभूतस्य परेद्यु स्मरणं नस्याद
स्मरणयोः सामानाधिकरण्येन कार्यकारणभावात् । ननु संस्कारा
वस्थितस्यैव पुनरुद्बोधेन तत्रान्तःकरणस्य भेदाभावान्नोक्तदोष
चेन्न संस्कारात्मनावस्थितस्य स्मृत्याद्यनुपयोगात् । अन्यथा सुषुम
तदुत्पत्तिस्स्यात् । अथाविद्याया अनर्थस्यच सम्बन्धः शुद्धे
अन्तःकरणविशिष्टे वा वर्त्तते नाद्यःबन्धमोक्षयोर्वैयधिकरण
नान्त्यः चैत्रे भुक्ते मैत्रस्यापि तृप्तिः स्यात् चैत्रस्य दुख निवृत्तौ मैत्र
तत्प्रसङ्गात् । चैत्रमैत्रात्मनो रैक्यादिति साङ्कर्यस्य तादवस्थ
नचाविद्यानिवृत्तिरूपमोक्षस्य शुद्धब्रह्मवृत्तित्वात् सुखदुःखानुस
त्वस्योपहितचैतन्यगतत्वान्नोक्तसाङ्कर्यावकाश इतिवाच्यम् ।
मोक्षयोस्सामानाधिकरणस्यानुपपन्नत्वात् । बद्धस्य निवृत्तिरेव
मोक्ष इत्यापतेश्च ननु यत्कल्पितं तन्निवर्त्तते यच्चाकल्पितं तन्न नि
इतिनियमादुपाधेःकल्पितत्वान्निवृत्तावप्युपधेयस्याकल्पितत्वेन
रयोगान्मोक्षान्वयित्वमित्यपि न यतः विशिष्टचैतन्यशुद्धचै
भेद इति भवतां राद्धान्तस्तत्र विशिष्टस्य मिथ्यात्वं सत्यत्वं वा
विशिष्टस्य मृषात्वेन मोक्षान्वयासम्भात् । नान्त्यः विशिष्टस्य
तत्र दृश्यत्वादे र्व्यभिचारितापत्तेः नापि दुःखानुसन्धातृत्वमुप
न्यगतम् । अविद्यारूपबन्धस्य शुद्धचैतन्यवृत्तित्वात्तत्रैवमोक्ष इति
मोक्षयो स्सामानाधिकरण्यमुपपद्यत इति वक्तुं शक्यते दुःखानुभव
णैवाविद्याया अनर्थहेतुत्वात् । यत्र दुःखानुसन्धानं स एव बद्ध
मोक्षौचित्यात् नाप्यविद्यावच्छिन्नत्वेन शुद्धे ऽपि चैतन्ये दुःखानु
नमिति तयोः सामानाधिकरण्यमुपपन्नमिति वाच्यं दुःखानुसन्धा
त्रयातीतत्वा सम्भवात् यदि शुद्धे चैतन्येऽपि दुःखानुसन्धातृत्वम
तदाऽवस्थात्रयातीत्वरूपं शुद्धत्वं व्याहन्येत, अथचोपहितस्योपा
त्वेनोपाधेः शुद्धवृतित्वमेव वाच्यं तथासति उपाधीनां नानात्वात्
कोपाधि निवृत्तौ मोक्षः सर्वेषामुपाधि निवृत्तौ वा नाद्यः प्रतिदिन
स्योपाधे रुपरमात्सदामुक्तिरेव नतु बन्ध इत्यापातात् नान्त्यः स
पाधीनामुपरमाभावान्न कस्याप्यधुना मुक्ति रित्यङ्गीकारापतेः ।

पाधीनामुपरमाभावान्न कस्याप्यधुना मुक्तिरित्यङ्गीकारापत्तेः। सर्वेषा-
पाधीनामुपरमे तु संसारोच्छेदापत्तेः। अपि चैकजीववादे अविद्याया
कत्वेनैकस्य मुक्तत्वे इदानीं प्रपञ्चानुपलम्भापत्तेः पूर्वं मुक्त्यभावे वाम-
ादिमुक्तिप्रतिपादकबहुवाक्यविरोधः प्रसज्जेत। वामदेवादीना
पन्नसाक्षात्काराणामप्यमुक्तावर्वाचीनानामाषाढवाते चलति द्विपेन्द्रे
जीवतो वारिधिरेव काष्ठा इति नियमेन मुक्तिर्दूरोत्सारिता स्यात्।
ञ्चैकजीववादे अहं त्वमयमिति प्रत्यक्त्व पराक्त्व प्रत्ययानामुच्छेदः
सज्जेत। नहि देवदत्तं प्रति त्वमिति धीविषयस्य तमेव प्रत्यहमिति
विषयत्वं युक्तम्। ननु नायं दोषः भिन्नभिन्नान्तःकरणमादायाहं त्व-
दिप्रत्ययानां सविषयत्वव्यवस्थोपपत्तेरिति चेन्न योगिनः कायव्यूहे
नान्तःकरणतादात्म्यारोपेऽप्यहमित्येव प्रतीतेः। नच तत्रान्तः करणमे-
मेवेति वाच्यम्। बाह्यकरणानामप्यैक्यापत्त्या कायव्यूहस्यैवासम्भवात्
ञ्च। त्वन्मते एकस्या एव चितः सर्वान्तः करणैरभेदाध्यासेन चैत्रस्य
किसाक्षात्कारेण रूप्यभ्रमनिवृत्तावप्यन्येषामपि निवृत्त्यापत्तेः। अन्तः
रणस्य भेदाद्यव्यवस्थापकत्वात्। अन्यथा योगिकायव्यूहे देहोऽपि
क्तृभेदकः स्यात्। अथ चैकजीवः सर्वकल्पकस्तेनैव सर्वमिदंकल्पितमिति
न्न जीवस्य कारणतां निषिद्ध्य परमेश्वरकारणत्वबोधकानां श्रुतीनां
धापत्तेः सार्वज्ञ्यबोधकश्रुतीनां निर्विषयत्वापत्तेश्च। नच समष्ट्यभि-
निनो जीवस्यैव सार्वज्ञ्यादियोगोऽभ्युपगम्यत इति वाच्यम्। लोके
वित्वेन प्रसिद्धेषु सार्वज्ञ्यादेः प्रत्यक्षादिना बाधितत्वात्। प्रसिद्धभिन्नस्य
र्वज्ञ्यस्वीकारे तस्येश्वरत्वेनेष्टापत्तेः। नचान्तःकरणभेदाध्यासात्तदनु-
वविपरीतानुभवयोरुपपत्तिरिति वाच्यम्। सर्वज्ञस्याधिष्ठानत्वं जान-
स्तदध्यासासम्भवात् भ्रान्तिसर्वज्ञयोरेकत्र व्याहतत्वाच्च। "तान्यहं
द सर्वाणि नत्वं वेत्थ परन्तपे"ति स्मृत्या जीवानभिमानिनः सर्वज्ञता-
धानाच्च। तस्मादेकजीवपक्षो हेयः।

इत्येकजीववादस्य निराकरणम्।

निरस्ता, एकजीवात्मवादिनः। अवच्छेदवादिनो निरस्यन्ते। ते
ल मन्यन्ते, एक एवात्मा विभुस्तत्तदुपाध्यवच्छिन्नो, भिन्नतया प्रतीयते
टावच्छिन्नाकाशवत्, स्वस्वोपाधिभिरवच्छिन्नात्मानः स्वीयस्वीयसुख-
:खादिकं साक्षात्कुर्वन्ति अतो न सुखदुःखसाङ्कर्यम्। अवच्छेदको हि

तत्तदन्तः करणरूपोपाधिः। अविद्या वा इति नैतद्युक्तं विचारा
तत्र न तावत्तत्तदुपाध्यवच्छिन्न आत्मेति पक्षो युक्तिसहस्तथाहि
द्वितीयात्मवादे यदि तत्तदुपाधीनां विभुत्वमुररीक्रियते तदा सर्व
त्वेन प्रपञ्चस्यान्ध्यं प्रसज्जेत प्रकाशकाभावात्। नोपपद्येरन्
गत्या गत्यादयः। स्याच्च मुक्तोपसृप्यस्य ब्रह्मणोऽभावः। (ब्रह्मविदा
मुक्तोपसृप्यव्यपदेशात्) मामेवैष्यसि सत्यन्ते प्रतिजाने प्रियोसि
ज्ञानतपसा पूता मद्भावमागता" इति श्रुतिसूत्रस्मृतयो बाध्येरन्
पाधीनामणुत्वपक्षः साधीयान्। उपाधिगमनवेलायां तदवच्छि
तीयस्य ब्रह्मणस्सर्वगतत्वात्तेन सह गत्याद्यनुपपत्त्या घटे गच्छ
च्छिन्नाकाशस्य गत्यनुपपत्तिवत् गमनानुपपत्तेः। पदे पदे बन्ध
स्याताम्। अनाद्युपाध्यवच्छिन्नस्याकस्माच्छास्त्रोक्तज्ञानासाधार
कदम्बं विनैव मुक्तिः स्यात् (तमेव विदित्वाऽतिमृत्युमेति ना
विद्यतेऽयनाय) यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा
ज्ञाय दुःखस्यान्तं निगच्छतीत्यादिश्रुतीनाञ्च बाधस्स्यात् नि
शुद्धबुद्धाद्वितीयनिर्विशेषचिन्मात्रस्याकस्माद्बन्धः प्रसज्जेत
जिज्ञासाबोधकशास्त्रस्य च वैयर्थ्यञ्च। उपाधीनां मध्यमप
पक्षोऽपि न सम्भवदुक्तिकः। उपाध्यणुत्व निरूपित जीवात्मनो
सिद्धान्तविरुद्धत्वात्, चाक्षुषत्वापत्तेश्च। किञ्चात्र पक्षे प्रागुदा
ऽपि दोषा दुर्वाराः। एकस्यैवात्मनस्सर्वोपाधिप्रयुक्तानां सुख
सर्वैरनुभवितुं शक्यत्वेन विशेषनियामकाभावात् सुखदुःखा
कर्य्यस्यावश्यम्भावात्। सर्वकर्मार्जितपुण्यपापैरेकस्य योगात्
तेनैवैकेन भोक्तव्यमिति। अपिच भवत्सिद्धान्तेऽवच्छेदकस्यो
त्वां वा मिथ्यात्वं वेति वक्तव्यं नाद्यः द्वैतापत्त्या सिद्धान्तभङ्ग
सत्यस्य ज्ञाननाश्यत्वाभावेनानिर्मोक्षप्रसङ्गाच्च परमते प्रवेशाप
द्वितीयो ऽनुपपन्नत्वात्। अन्यथा स्वप्नरज्ञ्वा जाग्रदवस्थायां रा
वृत्तिचौरादेर्बन्धनापत्तिदुर्वारा तस्य दृष्टश्रुतागोचरत्वात् श्रु
रुद्धत्वात् तस्मादनादरणीयो ऽवच्छेदवादो विद्वद्भिः।

॥ इत्यवच्छेदवादनिरसनम् ॥

# अथ प्रतिविम्ववादस्य विचारः ।

ननु स्यादेतदुपाध्यवच्छिन्नजीवात्मवादे प्रागुदाहृतदोषाणां वि-
ानत्वात्तद्वादो मा भवतु प्रतिविम्ववाद एवाङ्गीक्रियते । तथाहि विम्व-
थानीयं ब्रह्म जलस्थानीयेऽन्तःकरणाद्युपाधौ प्रतिविम्वितं सञ्जीवभा-
मापद्यते । उपाधेश्चाविद्याकल्पितत्वात् तत्प्रयुक्तो भेदः । यथा सूर्यस्य
लपूरितेषु घटेषु तत्र तत्र प्रतिविम्बादभेदो घटोपाधिकृतो भेदश्च । तत्रै
स्मिन् चाल्यमाने घटजले तद्गतस्यैकस्यैव प्रतिविम्बस्य कम्पादियोगो
ान्येषां प्रतिविम्बानाम् । एकस्मिंश्च घटनाशे तद्गतस्यैकस्यैव प्रतिविम्ब
य विम्वभावापत्तिर्नान्येषां, तथैकस्मिन्नान्तःकरणे सुखदुःखाद्यात्मना
रिणामे सति तद्गतस्यैकस्यैव चेतनप्रतिविम्बस्य तत्तत्सुखदुःखाद्यनुभवो
ान्येषां प्रतिविम्बानाम् । तथा चैकस्मिन्नुपाधौ तत्वमस्यादिवाक्यजन्य
ीवब्रह्मैक्यज्ञानान्नाशापन्ने तस्यैव ब्रह्मभावापत्तिलक्षणो मोक्षो नान्येषा-
मिति, सुखदुःखभोगसाङ्कर्य्याभावव्यवस्थोपपत्तिर्बन्धमोक्षोपपत्तिश्च सुव-
ेति चेन्न । दृष्टान्तवैषम्येणानुपपन्नत्वात्, यथा सूर्यरूपस्य विम्बस्य
लादिरूपोपाधेश्च रूपवत्त्वात् सावयवत्त्वात् परिच्छिन्नदेशवृत्तित्वेनं
देशत्वाच्च प्रतिविम्वभावोयुक्तो वक्तुम् । प्रकृते बिम्बस्य ब्रह्मणो नीरू-
त्वान्निरवयवत्वाच्च सर्वगतत्वाच्च उपाधेरपि नीरूपत्वनिरवयवत्वाभ्यां
तिविम्वभावस्य सर्वथैवासामञ्जस्यं विचारणीयं मनीषिभिर्देवानां हित-
ारिभिः । न च नीरूपनिरवयवयोरपि रूपाकाशयोः प्रतिविम्बदर्शना
ानुपपत्तिप्रसङ्ग इति वाच्यम् । सावयवद्रव्याश्रितस्यैव रूपस्य सूर्यच-
द्रादिप्रभामण्डलयुक्तस्यैवाकाशस्य रूपावयवसम्पन्न एव जलादौ द्रव्यवि-
शेषे स्वसजातीये प्रतिविम्बोपलब्धेरतो नोक्तदोषस्योद्धारः ।
क्तयुक्ते राभासमात्रत्वेनाप्रयोजकत्वात् । वस्तुतस्तु रूपस्य स्वाश्रयद्रव्यता-
त्म्येनापृथक्सिद्धत्वात् तथैवाकाशस्यापि पञ्चीकरणाद्रव्यत्वेन रूपावय-
त्वात् केवलयोस्तयोः प्रतिविम्बभावो नास्त्येव गुणिपृथग्भूतरूपस्याव्या-
ताकाशस्य च दृष्टिगोचरत्वाभावात् । तत्प्रतिविम्बः सर्वथाऽनुपपन्नः ।
तथा निरवयवनीरूपस्यापि शब्दादे रसादौ, रसादेः कालादौ च प्रति-
म्बभावो दृश्येत न तु तदस्ति । तथा प्रकृतेऽप्यनुसन्धेयम् । ननु नीरूप-
रवयवशब्दस्यापि प्रतिध्वनिरूपप्रतिविम्बदर्शनात् तथा प्रकृतेऽपि स-
ावनीयमिति चेन्न । अनुपपत्तिसाम्यात् । व्यञ्जकतया सन्निधानमात्रेण

ध्वनिधर्माणामुदात्तादिस्वराणां वर्णेष्वारोपोपपत्तेर्ध्वनेर्वर्णप्रति
पाधित्वकल्पनाया निष्प्रमाणकत्वात्। प्रतिध्वनिरपि न पूर्वशब्दप्र
म्बः पञ्चीकरणप्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षितिसलि
शब्दत्वेन प्रतिध्वनेरेवाकाशशब्दत्वेन तस्यान्यशब्दत्वायोगात्।
प्रतिशब्दोऽपि न पूर्ववर्णप्रतिविम्बः, वर्णाभिव्यञ्जकध्वनिनि
प्रतिध्वनेर्मूलध्वनिवदेव वर्णाभिव्यञ्जकत्वेनोपपत्तेः। किञ्चास्मिन्
स्वानन्तर्गतस्य स्वसन्निहितस्य चैतन्यप्रदेशस्यान्तःकरणे प्रतिविम्ब
वक्तव्यतया तत्र तत्रान्तः करणस्य गमने विम्बभेदात्। प्रतिविम्
भेदावश्यम्भावेनावच्छेदवादे इव क्षणे क्षणे बन्धमोक्षाववश्यम्
कृतनाशाकृताभ्यागमप्रसङ्गश्च।

ननु सिद्धान्ते उपाधेरणुत्वानङ्गीकारात् तथात्वे च तस्य
वत्वसिद्धे र्नोक्तदोषावकाश इति चेन्न। स्वोक्तिविरोधात्। तथाहि
गुणसारत्वात्तद्व्यपदेश" इत्यस्य सूत्रस्य व्याख्याने अणुविष
श्रुतीनामुपाधिपरिमाणपरत्वेन व्याख्याय जीवगताणुत्वपरिमाणं
कृतम्। तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यप
तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वत इति भाष्यात्
तासां जीवपरिमाणपरत्वमभ्युपेयते तर्हि विभ्वैकात्मवादो दत्ततिल
स्यात्। अथवाऽणुत्वविषयकाः श्रुतयः स्वाभ्युपगतसिद्धान्तयोग
तदुपाधिबुद्धिपरिमाणपरा विवक्षिताश्चेत्तर्हि उपाधेरणुत्वं तव
नैव सिद्धम्। अन्यथोक्तभाष्यस्योन्मत्तप्रलापत्वापत्तेः, श्रुतीनां बाध
यद्यज्जन्यं तत्तत्सावयवम्। यन्नैवं तन्नैवं ब्रह्मवदित्यन्वयव्यतिरे
मुपाधेः सावयवत्वमेवेति चेन्न। तस्या अनादित्वस्य त्वयैव स्वी
जन्यत्वासिद्धेः। जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
तच्चितोर्योगः षडस्माकमनादय इति वचनात् अन्यथोक्तबाधात्।
पाधेर्जन्यत्वाङ्गीकारे तदवच्छिन्नानां जीवानामपि जन्यत्वेन कृत
ताभ्यागमप्रसङ्गस्य दुर्वारत्वात्। किञ्च जीवस्य सादित्वे निर्हेतु
ङ्गीकारे मुक्तस्यापि भूयःसंसारित्वापत्तिः। निर्हेतुकत्वाविशेषात्, प्रल
निर्हेतुकमुक्तिप्रसङ्गाच्चेति संक्षेपः। किञ्चान्तःकरणादिरूपोपाधिः
म्वासाधारणीभूतो हेतुः सत्यो वा मिथ्या वेति विवेचनीयम्। नाद्य
पत्तिप्रसङ्गात्; अद्वैतसिद्धान्तभङ्गात्, अनिर्मोक्षप्रसङ्गात्, अपसि

परमतप्रवेशाच्च । नापि द्वितीयः, असम्भवात् । अन्यथा मृगमरीचिका-
लेऽपि सूर्यादिप्रतिविम्बभावो दृष्टिगोचरः स्यात् , न तु तदस्ति । प्रकृते
ऽपि सर्वथाऽनुपपत्तिरेव । ननु " एक एव हि भूतात्मा भूते भूते व्यव-
स्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ आकाशमेकं हि यथा
घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥ "
"उपमा सूर्यकादिवदि" त्यादिश्रुतिसूत्रसिद्धत्वात् प्रतिविम्बवादस्य । तद-
नङ्गीकारे चोक्तशास्त्रबाधापत्तिस्तवाप्यनिष्टतमेति चेन्न । " उपमा सूर्यका
दिवत् " इत्यादिसूत्रेण प्रतिविम्बवादं पूर्वपक्षीकृत्य " अम्बुवदग्रहणान्न
तथात्वम् " इतिसूत्रेण सूत्रकृद्भिरेव निजमुखेन निषेधादिति । तदेवा-
स्माकं समाधानम् । वस्तुतस्तु पूर्वोक्तश्रुतिसूत्रयोरन्तर्यामिदोषासंस्पर्शप्र-
तिपादनपरत्वान्नोक्तदोषयोगसम्भावनावकाशः । श्रुत्यर्थस्तु—भूतात्मा
भगवान् वासुदेव एक एव भूते भूते व्यवस्थितः । पूर्वभूतशब्दो देवतिर्यङ्
मनुष्यादिचेतनवर्गपरः, द्वितीयो भूतशब्दश्चाचेतनपरः । तथाचोत्तममध्य-
मादिचेतनेषु प्रधानादिजड़वर्गेषु च व्यवस्थितोऽपि अप्रच्युतस्वरूपोऽज-
द्गुणशक्त्यादिभिश्च महात्मभिर्दृश्यते ।

नन्वेवं कथं तद्गुणदोषैर्न लिप्यते इत्याशङ्कां दृष्टान्तमुखेन
निराकरोति—जलचन्द्रवदिति । यथा चन्द्रः श्रीगङ्गादिपुण्यतीर्थजलेषु
शूकरादिविलोडितगर्त्तादिजलेषु च स्वकरनिकरव्याप्त्या तत्र तत्र
वर्त्तमानोऽपि न तद्गुणैर्दोषैर्वा युज्यते । एवं ब्रह्मादिश्वपाकान्तेषु सर्वत्र
साम्येन स्वरूपव्याप्त्या तिष्ठन्नपि न तद्गतगुणदोषैर्युज्यते; अस्पृष्टस्वभा-
वत्वात् । " सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः " इत्येकार्थ
श्रुत्यन्तराच्चेति । किञ्च तवाभिप्रेतं विम्बभूतं ब्रह्म उपाध्यन्तर्गतं तदन्तः-
स्थं वा । नान्त्यः अन्तःस्थस्य मत्स्यकूर्मादेरिवप्रतिविम्बादर्शनात् । नाद्यः
एव पक्षे ब्रह्मणोऽविद्यादिबहिःस्थत्वासम्भवात् । तदभ्युपगमे च सदेश-
त्वापत्तेः, परिच्छिन्नत्वप्रसक्तेश्च । तथात्वे च मिथ्यात्वं दुर्वारम् । ब्रह्म
मिथ्या सदेशत्वात् आकाशादिवत् । परिच्छिन्नत्वाच्च घटादिवत् इति
प्रयोगात् । अवच्छेदपक्षेऽपि कृत्स्नस्यावरणे जगदान्ध्यापत्तिः । एकदेशा-
वरणे सदेशत्वाद्युक्तदूषणयोगेन मिथ्यात्वञ्च पूर्ववत्साम्यम् । जीवाना-
मितरेतरभोगसाङ्कर्यञ्चेति प्रतिविम्बवादनिराकरणम् ।

# अथाभासवादस्य निराकरणम् ।

इतरे तु " जीवेशावाभासेन करोति माया चाविद्या च स्वयं भवती"ति श्रुत्यर्थमजानन्तः स्वकपोलकल्पनया तामाभासपरतया व्यन्त आभासवादं कल्पयन्ति । मायाभास ईश्वरः, अविद्याऽभासो इति । तत्तुच्छम् । प्रतिविम्बानुपपत्तिवदस्यापि तथात्वात् । उक्तदोष मत्रापि तुल्यत्वात् । " अच्छायमि "तिश्रुतेः । श्रुत्यर्थस्तु सर्वेषामपि ज्ञानां ब्रह्मणश्चिच्छक्तिरूपत्वेन तदात्मीयत्वसामान्यात् तारतम्ये ऽपि कश्चित्सुकृतप्रधानं चेतनविशेषं, माया भगवदीयाज्ञानरूपा शक्ति " माया वयुनं ज्ञानमिति " कोशात् । यद्वा मायापरिणामभूतशमद वेकादियुक्तत्वात कार्यकारणाभेदविवक्षया ज्ञाने मायाशब्दप्रयो भगवत्स्वरूपगुणादिविषयकोपासनारूपा विद्ये ति यावत् । " विद्य तमश्नुत " इति श्रुतेः । तस्या मोक्षकारणभूताया अपि सकामाधि नुष्ठिताया आभासः फलं, तत्प्रसादजन्यपरिच्छिन्नैश्वर्यं, तेनाभास भिधेयेनैश्वर्येण ईशं ब्रह्मरुद्रेन्द्रादिपदरोहणार्हं करोति " यो ब्र विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै अस्य देवस्य मीढुषो विष्णो रेव प्रववृधे हविर्भिर्दिदहो रुद्रो रुद्रीयप्रहित्वमिति बह्वृचः । ब्रवीत् वरं वृणीष्व, अहमेव पशूनामधिपतिरसानी " ति श्रुतेः । " विबुधाः सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमार प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् । " तत्प्रार्थनाप्रसन्नो वरेषु छन्दयन् श्रीभगवानात्मानं दर्शयित्वा ह्युवाच । " येन यः कल्पितो स तथा मामुपागतः । प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ।। कोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवा शुश्रुम ।। मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् । मतस्तस्य वरा ददावहमनुत्तमान् ।। मत्पुत्रत्वञ्च कल्पादौ लोकाध्यक्षत्वमेव च ", मोक्षधर्मे राजधर्मे च । " विश्वरूपो महादेवः सर्वमेधे महाक्रतौ । सर्वभूतानि स्वयमात्मानमात्मना ।। महादेवः सर्वयज्ञे महात्मा हुत्वा त्मानं देवदेवो बभूव । विश्वाँल्लोकान् व्याप्य विष्टभ्य कीर्त्या वि द्युतिमान्कृत्तिवासा " इति नारसिंहे च । " ब्रह्मादयः सुराः सर्वे वि माराध्य ते पुरा । स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादत " इति वै च । " ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् । प्राप यज्ञपतिं

ासधय सुव्रते " ति स्मृतिभ्यश्च । एतेनैव " हिरण्यगर्भः समवर्त्तताग्रे, दिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत, एको हि रुद्रो न द्वितीयाय तस्थुः, देवानां प्रभवश्चोद्भवश्च, शिव एव केवलः, इन्द्रो मायाभिः पुरुरूप ते " इत्यादयः श्रुतयोऽपि व्याख्याताः । तासां भगवदाराधनजन्य ादोन्मुख तत्सङ्कल्पलभ्यपरिच्छिन्नैश्वर्ययोगविधानपरत्वात् । तथाभू- वर्य्यस्य मायाजन्यत्वात्तद्योगेन ईशशब्दाभिधेयं करोतीत्यर्थः । सर्वेष्वपि कपालेषु ब्रह्मरुद्रादिष्वीशशब्दप्रयोगस्य तत्र तत्र दर्शनात् । कश्चि- तनविशेषं जीवं करोति अविद्या चेति । अत्राविद्या नाम अनादिपुण्या- कं कर्म । " विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा यथाऽमृतमश्नुत" इति श्रुतेः । "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्ति- यते " इतिस्मृतेश्च । तस्या आभासः फलं देवतिर्य्यङ्मनुष्यादिदेहः नरकादिवृत्तिसुखादिप्राप्तिस्तेन जीवं करोति, तद्भोगार्हदेवादिशरी- कं करोति । माया चाविद्या च स्वयमेव भवतीति तयोर्भगवद्विभूति- ानादित्वात् ।

ननु यदि मायाशब्दो भगवदुपासनावाचकस्तर्हि तस्या अनादित्वं मिति चेन्न । कार्यकारणयोरभेदविवक्षया न विरोध इति ज्ञेयम् । तत्र रूपेण जन्यत्वेऽपि कारणात्मना चानादित्वान्नोक्तदोषावकाश इति : । तथा चोक्तं श्रीकाश्मीरिचरणैः, " क्षेत्रज्ञानां सर्वेषामपि भगवतो ाश्चिच्छक्तित्वेनाविशेषात् ज्ञानादितारतम्यप्रकाशनात्मकेन माया- न पुण्यादिकर्मरूपाविद्याभासेन च स्वाभासेन जीवेशौ जीवं मनुष्या- ईशं ब्रह्मरुद्रेन्द्रादिं करोति भासयति ज्ञानशक्त्यैश्वर्य्योपचारेणेति वेव ज्ञानादितारतम्येनोभयविधसंज्ञेति " । अन्यथा परमेश्वरः श्रीपुरुषोत्तमस्य मायाकार्यत्वाभ्युपगमे सर्वो वेदान्तो दत्त- ाञ्जलिः स्यात् । "यः सर्वज्ञः स सर्ववित्, तदुनात्येति कश्चन, तमीश्व- ं परमं महेश्वरं तं देवतानां परमञ्च दैवतं, न तस्य कार्य्यं करणञ्च े, न तत्समश्चाभ्यधिकश्च दृश्यते, पराऽस्य शक्तिर्विविधैव श्रूयते ाविकी ज्ञानबलक्रिया च" त्यादिश्रुतिकदम्बबाधात् ।

किञ्च जीवस्वरूपस्यापि जन्यत्वाभ्युपगमे " न जायते म्रियते वा श्चित्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" ति श्रुतिव्याकोपः । कृतनाशाकृताभ्यागमप्रसङ्गः सृष्ट्यादिव्यवस्थाऽ-

भावप्रसङ्गश्च, तस्मादुक्तसिद्धान्त एव वरीयान् । "तमीश्वराणामि" श्रुत्यैव परमेश्वरव्यतिरिक्तानां परिच्छिन्नैश्वर्यवत्वं सादित्वञ्च परतन्त्वञ्च बहुवचनप्रयोगेनैव सिद्धम् । स्पष्टं श्रूयते चान्यत्र "एको ह नारायण आसीन्न ब्रह्मा नेशान" इत्यादिना प्रागभावप्रतियोगित "नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यादिना जन्यभ श्चेति नारायणादिशब्दाभिधेयस्य श्रीपुरुषोत्तमस्य तु कुत्रापि प्रागभाव प्रतियोगित्वाश्रवणान्न तत्र परकार्यत्वादिशङ्कावकाशः । तस्मात्सि जीवानां बहुत्वम् । ननु स्यादेतत् क्षेत्रज्ञानां प्रतिशरीरं स्वरूपभेदस्तथ तत्रैकैकस्य साधनसम्पत्या क्रमेण मोक्षापत्तौ सत्यां कदाचित्सर्वेष मुक्तेषु सृष्ट्यत्यन्ताभावोऽपि सम्भाव्य इति शङ्कां परिहर्त्तुं म व्यक्तिरिति विशेषणं प्रत्यगात्मलक्षणे प्राङ्निर्दिष्टम् । सङ्ख्यानिरूपि सानशून्य इति तदर्थः । तथाचाह भगवान् पाराशरः । स्थूलैस्सूक्ष्मै सूक्ष्म सूक्ष्मैः सूक्ष्मतरैस्तथा । स्थूलैः स्थूलतरैश्चैव तत्सर्वं प्राणिभिर्वृतम् अङ्गुलस्याष्टमो भागो नसोऽस्ति मुनिसत्तम ! न सन्ति प्राणिनो यत्र निज निबन्धनाः । "सर्वे चैते वशं यान्ति यमस्य भगवान् किल । आयुषो ततो यान्ति यातनास्तत्प्रचोदिताः ॥ यातनाभ्यः परिभ्रष्टा देवाद्यास्व योनिषु । जन्तवः परिवर्त्तन्ते शास्त्राणामेष निर्णयः ॥ इत्यादिना बद्ध जीवानामसङ्ख्यातत्वं निरूपितं शास्त्राणामेष निर्णय इति । निर्णय प्रयोगाच्छङ्कावकाशो दूरतोऽपास्तो भवतीति । बद्धो नामानादिकर्म सनाकार्यादेव तिर्यगाद्यनेकविधशरीरेषु तत्सम्बन्धिषु चात्मीयाभिमान सोऽपि द्विविधो मुमुक्षुममुक्षुभेदात् । आद्यः आध्यात्मिकादिवि दुःखानुभवजातनिर्वेदो निश्शेषदुःखनिवृत्यात्मकमोक्षमिच्छुः । सोऽ द्विविधो भगवद्भावापत्तिकामो निजस्वरूपोपलब्धिकामश्चेति तस्य संख्यातत्वमाह भगवान् यमः । "परिहर मधुसूदन प्रपन्नान् प्रभुर न्यनृणां न वैष्णवानामिति" द्वितीयस्यानुसन्धेयं भगवद्वाक्यम् । क्ले ऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति । अमुमुक्षुश्च वैषयिकभोगका सोऽपि द्विविधः, भाविश्रेयस्को नित्यसंसारी च तेषामनन्तत्वं पराशरवा द्बोध्यम् नित्यसंसारिणां विशेषश्च श्रीमुखेन गीतः । "क्षिपाम्यजस्र भानासुरीष्वेव योनिष्वित्यादिना" किञ्च मुक्तो द्विविधः, नित्यमु बद्धमुक्तश्च तत्र नित्यमुक्तो गर्भजन्मजरामरणादिप्रकृतिसम्ब तत्कार्यदुःखविषयकानुभवशून्यत्वे सति नित्यनिरतिशयभगव

दर्शनादिभजनानन्दैकरसो विष्वक्सेनगरुड़ादिगण स्तस्याप्यसङ्ख्यातत्वम् । "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इत्यादिश्रुतिनिर्णीतं वोध्यम् । वद्धमुक्तश्चानादिकर्मात्मकाविद्यानिरूपितप्रकृतितत्कार्यसम्बन्धविनिर्मुक्तः । "वहवो ज्ञानतपसा पूतामद्भावमागताः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्तिचे" ति भगवदुक्तेः । भगवद्भावापन्नस्य च तदिच्छाऽनुरूपया निजेच्छयाऽनन्तविग्रहयोगश्च भगवदवतारवच्छ्रुतिनिर्णीत एव, "स एकधा भवति त्रिधा भवति पञ्चधा भवति सहस्रधा भवत्यपरिमितो भवती"त्यादिश्रवणात् तत्सिद्धं बद्धमुक्तबहुलकानामपि सर्वेषामनन्तव्यक्तिकत्वमिति । एवमेतावता विशेषसन्दर्भेण नित्यमुक्तानां जीवात्मनां स्वरूपगुणपरिमाणसङ्ख्यादिभिः साधारणत्वं निरूपितम् । इदानीं बद्धानां विशेषं विवेक्तुं बन्धमोक्षार्ह इत्युक्तम् । अनादिकर्मात्मकाविद्यावच्छिन्नो देवतिर्यङ्मनुष्यादिदेहरूपसंसारचक्रमनुभवन् श्रीभगवन्निर्हेतुककृपाकटाक्षावलोकित आचार्य्यैकदेवो भूत्वा तन्मुखनिर्भरितशास्त्रार्थसुधासंप्लावितो निरस्तसंशयादिरोगो भगवत्स्वरूपगुणवैभवादिविषयकध्यानसन्तति परिपाकजन्यसाक्षात्कारनिरस्तकर्मवन्धो भगवद्भावापत्तिरूपमोक्ष योग्य इत्यर्थः । "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् तमक्रतुं पश्यति वीतशोको धातुःप्रसादान्महिमानमात्मनः । भिद्यते हृदय ग्रंथि श्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"। इत्यादि श्रुतिभ्यः परमेश्वरानुग्रहोऽयं विभुरपि श्रवणादिसाधनसम्पन्नो भगवदाचार्य्यभक्ति सम्पृक्त एवाविर्भवति नान्यत्र ततो न साधनविषयकशास्त्रवाधस्तदुक्त साधनवैयर्थ्यञ्च । एतेन भगवदनुग्रहस्य सर्वगतत्वे सर्वमोक्षप्रसङ्गः । परिच्छिन्नत्वे च तुच्छत्वमित्यादिशङ्का दूरतो निरस्ता, यथा तार्किकाणां मतेव्यापकस्यापि गोत्वादेः सास्नादिमत्येव सम्बन्धः । यथौपनिषदानां पक्षे ब्रह्मस्वरूस्य सर्वगतत्वेऽपि क्वचित्तदधिकारिविशेष आसन्नमोक्षक एव साक्षात्कारो नान्यत्र तद्वत् । एतेनैव सर्वेषां भगवद्गुणानां वात्सल्यसौशील्यकारुण्यतितिक्षाज्ञानशक्तिवलैश्वर्य्यतेजोवीर्य्याणां स्वरूपवद्व्यापकत्वं मुमुक्षूपास्यत्वञ्चोक्तंभवति । ननु भगवदीयानुग्रहः साधनान्तर सापेक्षः स्वतन्त्रो वा । नाद्यः, अन्योन्याश्रयप्रसङ्गात् । नान्त्यः, सर्वत्र व्याप्ति

प्रसङ्गात्, सुखदुःखाद्युच्छेदापत्तेश्चेतिचेन्न । तस्य निरपेक्षत्वेऽपि नैर्घृ
ण्यादिदोषनिवृत्तये उपायान्तरस्य तत्प्रतिपादकशास्त्रस्य च बाधानिवृत्त
चान्येषां व्याजमात्रत्वेनाभ्युपगमान्नोक्तविकल्पावकाशः । एतदुक्तं भव
यद्यपि "( न तत्समश्चाभ्यधिकश्च दृश्यते )" इत्यादिश्रुते र्निरतिसाम्य
विश्वात्मनः पुरुषोत्तमस्यानुग्रहादीनां स्वातन्त्र्यमेव तथापि साधनान्त
प्रतिपादकशास्त्रस्यापि स्वप्रतिज्ञारूपत्वात्स्वसत्यप्रतिज्ञात्वख्यापकत्व
तस्मिन् बाधे स्वप्रतिज्ञाहानिप्रसङ्गात्, साधनान्तरमपि व्याजीभाव
वश्यं सङ्गृह्यते । सर्वथा निर्व्याजत्वाभ्युपगमे नैर्घृण्यादिप्रसक्तेः
तस्मात् साधनान्तरं व्याजीकृत्य स्वतन्त्रमेव फलदातृत्वं भगवदनुग्रह
नहि व्याजमात्रस्य वस्तुस्वातन्त्र्यहननशक्तिः, अतिप्रसङ्गात् । तथात्वे
कश्चिद्विरोधः,अन्यथा "यमेवैष वृणुते" इत्यादिसाधारणशास्त्रबाधाप

॥ इत्यात्मस्वरूपनिरूपणम् ॥

## अथ परमात्मस्वरूपनिरूपणमारभ्यते ।

(आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्
ष्टव्यः स विजिज्ञासितव्यः) इत्याद्याः श्रुतयस्सन्ति ताभिराध्यात्मिकाधि
तिकाधिदैविकतापत्रयोपतप्यमानसकलप्राणिनामपवर्गाय श्रवणमन
निदिध्यासनानि प्रतिपाद्यन्ते । तेषां विषयः परमात्मा, स चौपाधिकभे
श्रयो वा जगदत्यन्ताभिन्नो वा तदत्यन्तभिन्नो वा स्वाभाविकभिन्नाभि
वेति संक्षेपतः चतस्रो विप्रतिपत्तयो भवन्ति जिज्ञासूनाम् । किमत्र युक्तम्
स्वरूपत एकमेव ब्रह्माभेदाश्रयीभूतं स्वाभाविकानन्तसार्वज्ञ्यादिधर्म
योऽनाद्युपाधिना जीवभावमापद्यते "तत्त्वमस्यादिवाक्यजन्याभेद
नाच्च मुच्यते । तथा चौपाधिकभेदनिवृत्तिफलकमभेदविषयकं ज्ञानं
भिरुपदिष्टम् । तथा चौपाधिको भेदो वस्तुतोऽभेद इति वेदान्तशास्त्रार्थ
"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्", "आत्मा वा इदमेक एव
आसीत्", "एको ह वै नारायण आसीदि"त्यादिश्रुतिभ्य इति वदन्ति
विचारचारु, विकल्पासहत्वात् । तथाहि-न तावदुपाधिना छिन्नो ब्रह्मख
जीवात्मा, ब्रह्मणश्छेदनानर्हत्वात् । "निष्कलं निष्क्रियं शान्तमि"
श्रुतिवाक्यात् । प्रत्यगात्मनस्साद्यत्वापत्तेश्च । तथात्वे तु "अजो ह्येक
जुषमाणोऽनशेते, प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपी" ति प्रत्य

त्मनोऽजत्वानादित्वप्रतिपादिकाःश्रुतयो बाध्येरन्। नाप्यवच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषो जीवः। ब्रह्मैकप्रदेश उपाधिसम्बन्धापत्त्या सर्वे दोषास्तथैव स्युः। तथा सति, " अपहतपाप्मत्वाद्यदोषत्वव्युत्पादिकाः श्रुतयः सर्वा विहन्यन्ते

ननु घटाद्याकाशमहाकाशयोरवच्छिन्नत्वानवच्छिन्नत्वाभ्यां वैलक्षण्यं परस्परञ्च। तत्रत्या गुणदोषाश्च यथा महाकाशे न प्रसज्जेरन् तथोपाधिकृतपरस्परभेदेन गुणदोषव्यवस्थान्विता जीवास्तद्गतगुणदोषाश्च न परब्रह्मणि सम्बध्यन्त इति निर्दोषश्रुतीनां सावकाशत्वान्न तत्र बाध इति चेन्न। यथा निरवयवस्याकाशस्य घटादिभिरनवच्छेदात्। तथा ब्रह्मणो-निरवयवत्वेनाच्छेद्यत्वात् ब्रह्मण्येवोपाधिसंसर्गः स्यादिति निर्दोषत्वश्रुतेर्बाधस्यावश्यकत्वात्। किञ्चोपाधिना स्वगमानादौ स्वावच्छिन्नं ब्रह्माकृष्यते न वेति? नान्त्यः, उपाधौ गच्छति सति स्वावच्छिन्नब्रह्मप्रदेशकर्षणायोगात् अनुक्षणमुपाधिसंयुक्तप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ भवेतां, नित्यमुक्तप्रदेशोऽकस्माद्बध्येत, अनादिबद्धश्च स्वयमेवाकस्मान्मुच्येत इति। नाद्यः, आकर्षणे चावच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्। तथा सति मुक्तप्राप्यब्रह्माभावप्रसङ्गात्।

ननु ब्रह्मण आकर्षणानर्हत्वादेव तदभाव इति चेन्न। अवच्छिन्न ब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गेण सर्वजीवानां ब्रह्मण एव प्रदेशत्वेन सर्वेषां प्रत्यगात्मनां परस्परैकत्वज्ञानापत्तेः। प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति प्रतिसन्धानं न स्यात्। नाप्युपाधिसंयुक्तं ब्रह्मस्वरूपमेव जीवः। ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापत्तेः। तदतिरिक्तानुपहितब्रह्मासिद्धेः। न चात उपाधिसम्वलितश्चेतनान्तरमेव जीव इति चेतनान्तराभ्युपगमात् परपक्षपातित्वापत्तेश्च। नाप्युपाधिरेव जीवो ब्रह्ममतप्रसङ्गात्। किञ्च ब्रह्मस्वरूपस्योपाधिसम्बन्धः सहेतुको निर्हेतुको वा? नाद्यो वक्तुं शक्यः, अप्रसिद्धत्वात्। अन्यथा कल्पनायामनवस्थापत्तेः, उपाधेः सहेतुकत्वे तस्यापि हेतुर्वक्तव्यः पुनस्तस्याप्येवमनवस्थेत्यर्थः। नाप्यन्त्यः, मुक्तस्यापि पुनराकस्मिकबन्धापत्तिप्रसङ्गात्। आकस्मिकत्वाविशेषात्। न चानादिकर्मसम्बन्ध एव कारणमिति वाच्यम्। ब्रह्मणः कर्मसम्बन्धाभ्युपगतौ कदाचिदपि निवृत्तिर्न स्यात्, तन्निवर्त्तकान्तराभावात्।

अथोपाधिना ब्रह्म जीवभावमापद्यत इति वदन्तो वादिनः प्रष्टव्याः ब्रह्मणि विद्यमानाः सार्वज्ञ्यादयो धर्मा उपाधिनाऽऽच्छादितास्तत्स्वरू वा ? नाद्यः पक्षः घटयितुं शक्यतेऽसम्भवात् । तथाहि सार्वज्ञ्याद स्वाभाविका धर्मा औपाधिका वा ? नान्त्यः, औपाधिकत्वे उपाधे सत्वमसत्वं वा?सत्वेऽपि ब्रह्मभिन्नत्वमभिन्नत्वं वा?भिन्नत्वेऽपि स्वप्रयुक्त त्वमन्यप्रयुक्तत्वं ब्रह्मप्रयुक्तत्वं वा ? नाद्यः,आत्माश्रयात्, ब्रह्मण उपाधिस म्बन्धे उपाधेरपेक्षणादात्माश्रयः । न द्वितीयः, अनवस्थानात् । न तृतीय अन्योऽन्याश्रयात् । उपाधिसिद्धौ सत्यां ब्रह्मणः सार्वज्ञ्यसिद्धिस्तत्सिद्धौ तत्सिद्धिरित्यन्योऽन्याश्रय इत्यर्थः । प्रयोजकस्य नित्यत्वेनानिवृत्तिप्रसङ्गा उपाधेर्ब्रह्माभिन्नत्वे चोपाधिकभेदासिद्धेः उपाधिर्ब्रह्मेति सामानाधिक ण्यघटितप्रतीत्यापत्तेश्च। नाप्यसत्यः,परमतप्रवेशापत्तेः,अनङ्गीकाराच्च।अ स्वाभाविकत्वपक्षे सार्वज्ञ्यादीनां स्वरूपभिन्नत्वमभिन्नत्वं भिन्नाभिन्नत्वं वा अत्यन्तभेदे शास्त्रविरोधः । "एवं गुणान्पृथक् पश्यन्नि"त्यादिनिषेधश्रव णात् । नाभिन्नत्वं, ब्रह्मणा तेषां सामानाधिकरण्यापत्तेः । तथात्वे " आनन्दं ब्रह्मणो विद्वान्, परास्य शक्तिरि " ति वदधिकरणबोधिक श्रुतयो व्याकुप्येरन् । नापि चरमः, स्वाभाविकभिन्नानां ह्यावरणासम्भ वात् । अस्मत्पक्षप्रवेशाच्च । अन्यथा स्वरूपस्यावरणापत्तेः, स्वरूपाव रणाङ्गीकारपक्षे सार्वज्ञ्यादिहानेः । किञ्चोपाधेरपि सत्वनित्यत्वाभ्य मनिवृत्तिप्रसङ्गात् ।

अपि च ब्रह्मणः सार्वज्ञ्यादयो धर्मा व्याप्यवृत्तयः,उत,संयोगवदे देशवृत्तयः ? आद्ये, सर्वज्ञस्य सर्वस्यापि बन्धयोगेऽनिर्मोक्षप्रसङ्गो ज दान्ध्यापत्तिश्च । द्वितीये, तद्गुणानां परिच्छिन्नत्वेनाकिञ्चित्करत्वापत्ते मायावादपक्षप्रवेशापत्तेश्च । किञ्च मोक्षावस्थायां जीवः स्वरूपेण तिष्ठ न वा ? नाद्यः, उपाधितिरोधानकालेऽपि जीवस्स्वरूपेण तिष्ठति चेत्तौ पाधिकभेदवादस्यासिद्ध्यापत्तेः । न द्वितीयः, स्वरूपनाशस्य मोक्षस्वरू त्वापत्तेः । तथा सति प्रच्छन्नबाह्यात् मायावादिनः को वा विशेष इ त्वयैव चिन्तनीयः । तैर्जीवेशयोरुभयोरपि स्वरूपनाशोऽभ्युपगम्य भवद्भिस्तु जीवस्वरूपनाश इत्येतावति भेदेऽपि जीवस्वरूपनाशः समा एवेत्यर्थः । अथ परैरपि विवरणे न तावद् ब्रह्मणो जातिव्यक्तिभा गुणगुणिभावः कार्यकारणभावो विशिष्टस्वरूपत्वमंशांशिभावो

विद्यते मानाभावात्, न च तदभावे भेदाभेदौ दृश्येते। न च "ममैवांशो जीवलोक" इति स्मृतेरंशांशितेति वाच्यम्। "निष्कलं निष्क्रियमि" ति निरंशत्वप्रतिपादकश्रुतिविरोधात्। "पादोऽस्य विश्वा भूतानी" ति श्रुतिर्नांशांशिभावं ब्रूते, किन्तु ब्रह्मानन्त्यप्रतिपादनाय जीवस्याल्पमात्रत्व माह। अन्यथा सांशस्य ब्रह्मणो घटादिवदवयवारभ्यत्वप्रसङ्गात्। ननु स्वाभाविकी निरवयवता बुद्ध्याद्युपाधिनिमित्तं सांशत्वमिति नोक्तदोष इति चेन्न। एवमपि वास्तवभेदो न सिद्ध्येत, नहि निरवयवमाकाशं खड्गधारादिभिर्वस्तुतो भेत्तुं शक्यम्। अथान्तःकरणोपाधीनां वस्तु ब्रह्म-दारणसामर्थ्यमस्ति तर्हि ब्रह्म स्वस्यानर्थाय कथमुपाधीन्सृजेत्। न च जीवार्था तत्सृष्टिः, तत्सृष्टेः प्राग्जीवविभागासिद्धेः। न च कर्माविद्या-संस्कारा अन्तःकरणोत्पत्तेः प्राग्विद्यमाना अपि जीवं विभजन्ते। तस्मा-द्दुरुपपादोऽयं ह्यौपाधिकभेदाभेदवादः।

॥ इति भट्टभास्करमतनिरासः ॥

## द्वितीयां विप्रतिपत्तिमुत्थापयितुं भूमिकामारचयति।

चिदचिद्भ्यामत्यन्ताभिन्नं सजातीयविजातीयस्वगतभेदत्रयशून्यं निर्विशेषं चिन्मात्रं ब्रह्म सर्ववेदान्तप्रतिपाद्यम्। "सदेव सोम्येदमग्रआ-सीदेकमेवाद्वितीयम्, आत्मा वा इदमेक एवाग्र आसीत्, तत्त्वमसि, अयमात्मा ब्रह्म, सोऽहं ब्रह्मास्मि, आत्मैवेदं सर्वं, सर्वमिदं ब्रह्म, त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि देवते। यदेवेह तदमुत्र यदमुत्र तदन्विह, यश्चेह पुरुषे यश्चासावादित्ये स एकः, तदात्मानमेव वेदाहं ब्रह्मास्मीति, सर्वं खल्विदं ब्रह्म, तज्जलान्, अथात आदेशो नेति नेति, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः, सहोवाचैतद्वै-तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्ने-हमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्र-मवागमनोऽतेजस्कमप्राणममुखमनामागोत्रमजरममरमभयममृतमरजोऽ-शब्दमविवृतमसंवृतमपूर्वमपरमनन्तरमबाह्यम्। न तदश्नोति कश्चन, यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव। दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अशरीरं शरीरेष्वनवस्थेष्ववस्थितं महान्तं विभुमात्मानं मत्वा धीरो न

शोचति । अप्राणो ह्यमनाः भ्रः, असङ्गो ह्ययं पुरुष " इत्याद्याः शतशः श्रुतयः सन्ति । ताभिः क्षराक्षरात्यन्ताभिन्नं सजातीयादिभेदत्रयशून्यं निर्विशेषं ब्रह्म प्रतिपाद्यते । " सदेव सोम्येदमित्युपक्रमवाक्यं सजातीयविजातीयस्वगतभेदशून्यार्थपरम् । ऐतदात्म्यमिदं सर्वमित्युपसंहारोऽपि तत्पर एव, इदमुपक्रमोपसंहारैकवाक्यं तात्पर्यनिर्णये लिङ्गम् । १ । तथा " तत्वमसी " ति नवकृत्वोऽभ्यासः ॥ २ ॥ "

अथात आदेश इति वाक्यं वृहदारण्यके पठितं, तत्र नेति नेतीत्यनेन प्रपञ्चे मूर्त्तामूर्त्तत्वमिति रूपद्वयं, यस्य निषेधमुखेन निर्विशेषं ब्रह्म प्रतिपाद्यते श्वेताश्वतरे निर्विशेषब्रह्मप्रतिपादकानि "अपाणिपादो जवनो ग्रहीता" इत्यादीनि सन्ति । ताभिः निःशेषविशेषशून्यस्य ब्रह्मणो मानान्तराविषयत्वात् अपूर्वता वोध्यते ॥ ३ ॥ "अत्र वाव किल सोम्य न निभालयसे" इति श्रुतेः, देहादिसङ्घातगमपि प्रत्यग्ब्रह्म तवाज्ञातमित्यर्थः। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये " इति फलम् ॥ ४ ॥ अनेन जीवात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इत्यद्वितीयज्ञानार्थोऽर्थवादः ॥ ५ ॥ मृदादिदृष्टान्तैः स्वोपादानातिरिक्तं कार्यं नास्तीत्युपपत्तिः ॥ ६ ॥ एवं षड्भिरुपक्रमादिलिङ्गैर्लक्षणया वेदान्तानामुक्तार्थे तात्पर्यमवगम्यते इति मायावादिनो वदन्ति ।

अयुक्तञ्चैतत् ,भेदविषयकवाक्यसहस्रविरोधात् । वाक्यानि तु "भोक्ता भोग्यं प्रेरितारञ्च मत्वा, पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टं यदा पश्यत्यन्यमीशं, सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत् , प्रधानक्षेत्रज्ञपतिर्गुणेशः, संसारबन्धस्थितिमोक्षहेतुः, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । ज्ञाज्ञौ द्वावजावीशानीशौ, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, ऋतं पिवन्तौ सुकृतस्य लोके, गौरनाद्यन्तवती, अजामेकां लोहितशुक्लकृष्णा मि" ति । "भेदव्यपदेशाच्च । अधिकन्तु भेदव्यपदेशात् शारीरश्चोभयथाऽपि हि भेदेनैनमधीयते । भेदव्यपदेशाच्चान्य" इति "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ " उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इत्यादीनि बहुशोऽनुसन्धेयानि

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, स ईक्षाञ्चक्रे स आत्मानमेवावैदहं ब्रह्मास्मीति । सर्वस्य वशी सर्वस्येशानः, यः सर्वज्ञः सर्वशक्तिः "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात्, संबाहुभ्यां धमति संपतत्रैः, द्यावाभूमी जनयन्देव एकः, सर्वकामः सर्वगन्धः सर्वरस" इत्याद्याः श्रुतयः । "सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति । निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादि सर्वत्र च स्वगतभेदविवर्जितात्मा" इत्याद्याः स्मृतयश्च सविशेषब्रह्मप्रतिपादिकाः सन्ति । ब्रह्मणो निर्विशेषत्वे तासां बाधः प्रसज्येत । न च भेदवाक्यानां निर्बलत्वात् कल्पितभेदविषयकत्वेन नैराकाङ्क्षयाच्च तद्बाधो न दोषावहः । भेदविषयकाणि वाक्यानि न स्वार्थवन्ति, तद्विषयस्य जीवेश्वरभेदरूपस्य प्रत्यक्षसिद्धत्वात् । यद्वाक्यं प्रत्यक्षान्तरसिद्धविषयकं तन्न स्वार्थपरम् । अग्निर्हिमस्य भेषजमित्यादिवदित्यनुमानस्य जागरूकत्वात् । अभेदपरवाक्यानामन्यविषयाभावेन स्वार्थे एव प्रामाण्यात्प्राबल्यम् । उपक्रमादिषड्लिङ्गोपेतत्वाच्च । अत्र प्रयोगः अभेदविषयकाणि वाक्यानि स्वार्थपराणि, अनन्यविषयकत्वात् । विधिवाक्यवदिति यद्वाक्यमनन्यविषयकं तत्तत्स्वार्थपरमितिवाच्यम् ।

भेदप्रतिपादकवाक्यानामभेदप्रतिपादकवाक्यानामपि तुल्ययोगक्षेमत्वात् । जीवेश्वरविषयको भेदो न तावत्प्रत्यक्षप्रमाणगोचरः । नेन्द्रियाणि नानुमानमिति श्रुतिसिद्धप्रत्यक्षाद्यविषयत्वात् । जीवेश्वरयोः अन्योऽन्याभावप्रत्यक्षस्यानुयोगिप्रत्यक्षाधीनत्वात् । तथा च भेदस्य प्रत्यक्षविषयतासिद्धौ सत्यां तद्विषयकवाक्यानाञ्च सुतरां निर्विषयकत्वापत्तौ सुतमां च तेषां स्वार्थपरत्वम्, तथा च प्रागुक्तहेतोः स्वरूपासिद्धत्वादुक्तानुमानस्य दुष्टत्वम् । एतेनैव भेदवाक्यानां स्वार्थपरत्वप्रतिपादनेन द्वितीयस्याभेदपराणां स्वार्थ एव प्रामाण्यादित्यस्यापि हेतोरनैकान्तिकत्वेन हेत्वाभासत्वं समागत, मस्वार्थे प्रमाणत्वस्योभयत्राविशेषात् । अपि च सजातीयादिभेदशून्यं सर्वविशेषरहितं तत्वं षड्लिङ्गोपेतवाक्यानां वाच्यतयाऽभ्युपगतं न वेति विवेचनीयम् । नाद्यः, सर्वधर्मराहित्यस्य निर्विशेषस्य ब्रह्मणो वाच्यत्वानभ्युपगमात् । तथात्वे द्वैतापत्तिः । नाप्यन्त्यः, सर्वप्रमाणाविषय-

त्वेन गगनकुसुमायमानत्वप्रसङ्गाच्च,वाच्यत्वे द्वैतापत्तिरवाच्यत्वेऽप्रमा
त्वमित्युभयतः पाशारज्जुरिति । षड्लिङ्गोपेतत्वेनाभेदवाक्यानां प्राब
यदाशङ्कितं तदपि न भेदवाक्यानामपि तथात्वश्रवणात् । तथा ह्याम्नाये
ऽन्तर्यामिब्राह्मणे, भेदस्य षड्लिङ्गोपेतवाक्यवाच्यत्वं, बृहदारण्यके "
त्थ त्वं काप्यन्तर्यामिणमित्युपक्रमः ॥ १ ॥ एष ते आत्माऽन्तर्यामीत्यु
संहारः ॥ २ ॥ एष ते आत्मेत्येकविंशतिकृत्वोऽभ्यासः ॥ ३ ॥ अन्त
मिताया अप्राप्तत्वादपूर्वता ॥ ४ ॥ स वै ब्रह्मविदित्यादिफलम् , तच्च
याज्ञवल्क्यसूत्रमविद्वांस्तवान्तर्यामिणं ब्रह्म गवीरुद्रजसे मूर्द्धा ते पति
तीति निन्दारूपोऽर्थवादः ॥ ५ ॥ यस्य पृथिवी शरीरं यं पृथिवी न वे
त्याद्युपपत्तिः ॥ ६ ॥

यद्यप्यभेदवाक्यवाच्यत्वं ब्रह्मणो न घटते द्वैतापत्तिदोषस्य वि
मानत्वात्,तथाऽपि तन्निरासाय ब्रह्मणो लक्षणाविषयत्वमभ्युपगच्छा
तथा चैष वाक्यार्थः, सर्वज्ञसर्वशक्त्याद्याश्रयविश्वनियन्तृजगज्जन्मा
कारणं ब्रह्म तत्पदार्थः । बुद्ध्याद्यवच्छिन्नश्चेतनांशोऽल्पशक्त्याद्या
जीवक्षेत्रज्ञादिशब्दाभिधेयस्त्वं पदार्थः । एतत्तत्त्वं पदार्थयोः परस्परवि
द्धधर्मावच्छिन्नतयाऽभेदान्वयोऽनुपपन्नो;यथा सोऽयं देवदत्त इत्यत्र त
शकालवैशिष्ट्यैतद्देशकालवैशिष्ट्ययोरितरेतरात्यन्तविरोधात्तत्पिण्डम
शक्यैकदेशभूतं भागलक्षणया पदाभ्यामुपस्थाप्यते । उभयपदार्थाश्रित
परस्परविरोधहेतूनां शक्यैकदेशानां सार्वज्ञ्यादीनामल्पशक्त्यादीन
त्यागेनोभयत्रानुगताखण्डत्वेनोभयपदार्थान्वय इति चेन्मैवम् । "
सर्वज्ञःस सर्ववित्,सत्यकामः सत्यसङ्कल्पः,स्वाभाविकी ज्ञानबलक्रिया
सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वकामः सर्वधर्मः सर्वरूप इति अवि
शी वाऽरेऽयमात्माऽनुच्छित्तिधर्मा, नहि द्रष्टुर्दृष्टेर्विपरिलोपो वि
ऽविनाशित्वाद्, नहि श्रोतुः श्रुतेः,नहि मन्तुर्मतेः, नहि विज्ञातुर्विज्ञाते
परिलोपो विद्यतेऽविनाशित्वादि" त्यादि श्रुतिभिः स्वाभाविकत्वेनो
षितानां यावदात्मवृत्तीनामुभयपदार्थनिष्ठधर्माणां त्यक्तुमशक्यत्वात् ।
प्रमाणाभावाच्च । नच " नेह नानाऽस्ति किञ्चन मृत्योः स मृत्युमा
य इह नानैव पश्यतीत्यादीनां सत्वान्नाप्रामाण्यमिति वाच्यम् ,तेषां
तिशयबृहत्स्वरूपगुणशक्त्याद्याश्रयस्य ब्रह्मपदार्थस्य भगवत ए
प्रतिपादनपरत्वात् ,तस्य चास्मदभीष्टलभत्वात् । न च ब्रह्मवृत्तिधर्म नि

विषयिकेयं श्रुतिः। "केवलो निर्गुणश्चे ति" श्रुत्यैकार्थ्यादिति वाच्यम्। अनुपपत्तेः। न हि महादरेण स्वाभाविकयावदात्मवृत्तिधर्मान्स्वयमेव प्रतिपाद्य भूयस्तन्निषेधे प्रवर्त्तते सर्वज्ञा भगवती श्रुतिः। तथात्वे चोन्मत्तप्रजल्पितमिव श्रुतिवचनस्यानाप्तत्वप्रसङ्गात्। न चैवं निर्गुणवाक्यविरोधापत्तिरिति वाच्यम्। तस्य प्राकृतगुणनिषेधेन कृतार्थत्वात्।

किञ्चैषाऽऽनन्दस्य मीमांसेत्युपक्रम्य मनुष्यानन्दप्रभृतिचतुर्मुखानन्दावसानमुत्तरोत्तरशतगुणानन्दान्प्रपञ्च्य सर्वेषां परिच्छिन्नानन्दाश्रयत्वं च निर्णीय " यतोवाचो निवर्त्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने " ति मन्त्रेण ब्रह्मण आनन्दलक्षणगुणस्यापरिच्छिन्नत्वेन तस्य सर्वभयनिवृत्तिरूपमोक्षप्रदानशक्तियोग उक्तस्तैत्तिरीये तथाभूतगुणस्य तुच्छत्वे मोक्षविधायकश्रुतेः बाधो नालोच्यते देवानां प्रियैः पण्डितमानिभिः। तत्सिद्धं ब्रह्मणः स्वाभाविकगुणनिषेधे शब्दस्यामानत्वमिति। नापि तर्कः " नैषा मतिस्तर्केणापनेये " तिश्रुतेः। " अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि " ति मनुस्मृतेः, तर्काप्रतिष्ठानादिति न्यायाच्चेति। अश्रुतिमूलतर्कस्याप्रामाण्यकथनात्। नहि वायोः स्पर्शोऽग्नेरौष्ण्यं जलस्य शैत्यमिति केनाप्यनुमत्तेन तर्ककुशलेन पुरुषेण निषेद्धुं शक्यते स्वाभाविकत्वात्। तथैव ब्रह्मधर्मा अपि निषेधसम्बन्धानर्हा इति। किञ्च तत्त्वमस्यादिपदलक्ष्यं वस्तु पदान्तरवाच्यं न वेति विवेचनीयम्। नाद्यः,पूर्वोक्तद्वैतापत्तिदोषस्य तादवस्थ्यात्। नान्त्यः,अप्रामाणिकत्वेन तुच्छत्वात्। न च तस्यापि लक्ष्यत्वान्नोक्तदोष इति वाच्यम्। लक्ष्यस्य लक्ष्यत्वेऽनवस्थापत्तिप्रसङ्गात्। किञ्च सोऽयं देवदत्त इति दृष्टान्ते देशकालयोरनित्यसम्बन्धत्वाद्धेयत्वम् पिण्डस्य च शक्यैकभागस्य रूपाद्यनेकविशेषवत्वात् पिण्डशब्दवाच्यत्वाच्चोपादेयत्वम्। एवं हेयत्वोपादेयत्वयोः सम्भवात् भागत्यागलक्षणा कल्प्यते।ब्रह्मणि प्रकृते तु धर्मधर्मिणोः स्वाभाविकसम्बन्धाश्रवणान्न हेयता लक्ष्यभागस्य च निर्विशेषत्वादवाच्यत्वाच्च नोपादेयत्वम्। एवं हेयोपादेययोरभावान्न भागत्यागलक्षणासम्भवः,विषमदृष्टान्तत्वात्।वाच्यत्वलक्ष्यत्वयोः सामानाधिकरण्यनियमाच्च। अपि चोक्तन्यायः सत्यादिवाक्ये तुल्यो द्रष्टव्यः।तथाहि सत्यादिवाक्यार्थेऽपि वाच्यत्वे पूर्वदोषव्याप्तेर्लक्षणैवाकामेनापि त्वयाऽङ्गीकर्त्तव्या। एवं चेत्तर्हि सत्यादिवाक्ये का वा लक्षणेति विवेचनीयम्। जहत्स्वार्थाऽजहत्स्वार्था जहदजहत्स्वार्था वेति। नाद्यः पक्षः, गङ्गायां

घोष इत्यत्र शक्यस्य प्रवाहस्य त्यागात्तीरस्याशक्यस्य कल्पनावत् सत्
ज्ञानानन्दानां पदार्थानां शक्यभूतानां त्यागादसत्यमज्ञानं दुःखमित्येतद्
क्यार्थोऽभ्युपगतः स्यात् । नापि द्वितीयः, द्वैतापत्तेः परमतप्रवेशाच्च
नापि तृतीयः, उक्तप्रकारेण हेयोपादेयभागासम्भवात्, तदभावे सुत
लक्षणाभाव इत्यर्थः । न च शाखाचन्द्रन्यायेन कल्पितसम्बन्धेनापीष्ट
सिद्धिरिति वाच्यम् । विषमदृष्टान्तत्वात् । तथा हि शाखाचन्द्रयोः सम्
न्धिनोः प्रत्यक्षप्रमाणगोचरत्वेनानेकधर्मवत्वेन च सम्बन्धित्वकल्पन
योग्यत्वात् । दार्ष्टान्तिके तु सर्वविशेषशून्यतया सर्वप्रमाणाविषयत्वात्
न शशशृङ्गकल्पे वस्तुनि सम्बन्धित्वकल्पनावकाश इति । किं बहु
वाच्यत्वानभ्युपगमे सर्वथा लक्षणानुपपत्तिः वाच्यस्यैव लक्ष्यत्वनिय
दिति पूर्वमेवोक्तम् । तथाचात्र प्रयोगः, लक्ष्यं न निर्वाच्यं शब्दार्थत्वात्
कुसुमितद्रुमा गङ्गेत्यादिवत् । जगदत्यन्ताभिन्नं ब्रह्मेतिवादिनां म
निरस्तम् । तृतीयां विप्रतिपत्तिं दूषयितुमुपन्यस्यति । तदेवमभेदवाक्या
साम्यप्रतिपादकताऽभ्युपगमेन सार्थक्यं वक्तव्यम् । भेदवाक्यानाम्
प्राबल्यादत्यन्तभेदविषयकमेव ज्ञानं वेदान्तशास्त्रप्रतिपाद्यम् । तथा
चेतनाचेतनात्यन्तभिन्नं ब्रह्मेति वदन्ति । अथ तत्त्वमसीत्यत्र पद
प्रातिपदिकलक्षणापेक्षया पदैकदेशविभक्तौ लक्षणा लघीयसी । अस्तु
तच्छब्दात्परत्र तृतीयादिविभक्तेः "सुपां सुलुगि" त्यादिना प्रथमै
वचनादेशो वा लुग्वा । तथा च तेन त्वं तिष्ठसि, तस्मै त्वं तिष्ठसीति व
ततः सञ्जात इति वा, तस्य त्वमिति वा, तस्मिन् त्वमिति वा वाक्यार्थ
तत्साहचर्य्यात्तदिति व्यपदेश इति । "वसन्तादिभ्यष्ठक्" इत्यत्र स
हचर्य्यात्तच्छक्यं भविष्यति । वसन्तसहचरितमध्ययनं वसन्त " इ
महाभाष्योक्तेः । प्रसिद्धञ्च प्रत्यगात्मनो ब्रह्मसाहचर्य्यं "द्वा सुपर्णे" त्या
यद्वा तदाश्रितत्वात्तदिति व्यपदेशः, समर्थः पदविधिरित्यत्र समर्थपदाश्रि
त्वात्पदविधिरुपचारेण समर्थ इति पदेनोच्यते । इति महाभाष्योक्ते
सर्वाः प्रजाः दायातना इतिवाक्यशेषाच्च । अथवा " ब्राह्मणोऽस्य मुखम
सीदि " त्यादिवत् । " इग्यणः सम्प्रसारणमित्यत्र यथा काकाज्जा
काकः श्येनाज्जातः श्येनः, एवं सम्प्रसारणाज्जातो वर्णः सम्प्रसारणमि
ति माहाभाष्योक्तेः । " सन्मूलाः सोम्येमाः सर्वाः प्रजा " इतिवाक्य
षात् । "ब्रह्मणो मुखमित्येव मुखजातत्वहेतुतः । यथावदच्छ्रुतिस्तद्वज्जी
ब्रह्मेतिवाग्भवेदि " ति स्मृतेश्च । अथवा धान्यमसि धिनुहीत्यत्र तण्
धान्यशब्दवत् । तदधीनत्वात्तदिति व्यपदेशः । प्राणबन्धनं सोम्य म

इति वाक्यशेषे जीवस्येशाधीनत्वोक्तेः। "यदधीना यस्य सत्ता तत्तदित्येव भण्यत" इति भारतोक्तेश्च। अथवाऽतिदेशोऽयं तद्वत्त्वमसीत्यर्थः। "बहु गण" इत्यादि सूत्रे बहुगणवतुडतयः सङ्ख्यावद्भवन्ति। अन्तरेणापि वतिमतिदेशो गम्यते। अब्रह्मदत्तं ब्रह्मदत्त इत्याह, तेन वयं मन्यामहे-ब्रह्मदत्तवदयं भवतीति महाभाष्योक्तेः।

"सारूप्यादि" ति जैमिनिसूत्रे आदित्यो यूप इत्यादिकं सादृश्यादित्युक्तत्वाच्च। "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदि" ति बादरायणसूत्रे प्रकृतगुणयोगाज्जीवेतरदिति व्यपदेश इत्यभिधानाच्च। "भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वश" इति स्मृतेश्च। अन्यथा "तत्वमसी" तिवाक्यमबोधकं स्यात्। यथोक्तं महाभाष्ये—"यो गामश्व इति ब्रूयात् न जातु चित्सम्प्रत्ययः स्यात्" इति। यद्वा शाखासदेशे चन्द्रे शाखाशब्दवत् जीवान्तर्य्यामितया जीवसदेशे ब्रह्मणि त्वमिति व्यपदेशः। यद्वा ब्रह्मणः सर्वकर्त्तृत्वात् यजमान प्रस्तर इत्यादिवत् तत्सिद्धं त्वमिति व्यपदेशः। एवञ्च तदधीनत्वतादर्थ्य तत्स्थ्यताद्धर्म्यपूर्वकैर्निमित्तैस्तत्त्वमस्यादिसामानाधिकरण्यं गीयते। यद्वा शब्दो नित्यः शब्दत्वाद् घटवदित्यत्र यथा दृष्टान्तानुसारादनित्य इति पदच्छेदस्तथा भेदबोधकदृष्टान्तानुसारात्। "स आत्मा तत्त्वमसी" त्यत्रातत्वमसीति पदच्छेदः। निर्मुक्तत्वपूर्णज्ञानानन्दत्वादिना नञा सादृश्यबोधनात्। तथाहि, यथा परिभ्रमणेन श्रान्तः सूत्रबद्धः पक्षी शङ्कुमेवाश्रयति तथा जागरादौ परिभ्रमणेन श्रान्तो जीवात्मा सुषुप्तौ परेशं संश्रयतीत्याह। "यथा शकुनिः सूत्रेण प्रबद्ध" इत्यादिना ?। ननु मत्तोऽन्यश्चेतनश्चेन्मया ज्ञायेतेत्यत्राह। यथा मधुकरैःसङ्गृहीता रसा अयममुष्याहमिति स्वभेदं न जानन्ति, तथा जीवे विद्यमानोऽप्यविवेकिभिर्न स्वभिन्नतया ज्ञायते परेश इति। "यथा सोम्य मधुकृत" इत्यादिना ॥ २ ॥ ननु रसैरचेतनैर्विद्यमानो मा ज्ञायि, चेतनेन कुतो न ज्ञायत इत्यत्राह। यथाचेतनाभिरपि नदीभिः समुद्रे मिलिताभिरियं गङ्गाऽहं यमुनेति भेदो न ज्ञायते, तथा त्वयि स्थित ईशस्त्वया न ज्ञायत इति। "इमाः सोम्येत्यादिना ॥ ३ ॥ ननु भवतु प्रत्यगात्मा ईशः, प्रत्यगात्मनस्तदधीनत्वं कुतस्तत्राह। यथा वृक्षस्य विघातिनि विद्यमानेऽपीशानुग्रहात्सुखमवस्थानं तदभावे विघातकाभावेऽपि शुष्कता, तथा मानु-

षादिदेहेऽपीशाधीनत्वमिति । यथा सोम्य महतो वृक्षस्येत्या" दिना ॥ ४
ननु सूक्ष्ममपि स्वस्वरूपं ज्ञायते, तथेशोऽस्ति चेत्ज्ञायेतैवेति । तत्राह
यथा बटबीजे महान्बटो यच्छक्त्या सन्नपि नोपलभ्यते,एवं जीवान्तर्ग
हरिर्न दृश्यते । इति न्यग्रोधफलमित्यादिना ॥ ५ ॥ ननु तद्धर्मे गृह्यमा
लवणं न गृह्यते वटावस्थानहेतुसामर्थ्यं गृह्यमाणेऽपि स न गृह्यते । इ
लवणमुदकइत्यादिना ॥ ६ ॥ ननु तर्हीशस्याज्ञेयत्वात्तज्ज्ञानसाधनवै
थ्र्यं तत्राह—" यथा चौरैः कश्चन पुरुषो बद्धाक्षो देशान्तरे मुक्तः पृष्ट
पृष्ट्वा स्वदेशमायाति तथा दुर्ज्ञेयोऽपीशो गुरूपदेशादिना सुज्ञे
" यथा सोम्य पुरुष " इत्यादिना ॥ ७ ॥ ननु वृक्षदेहे जीवस्येश्वराधी
त्वमभिहितं मानुषदेहे कथं तज्जानीयात्तत्राह । रोगग्रस्तव्यापारःस्वपा
स्थान्यथा न वेद तथा सुषुप्तौ सन्नपि प्रत्यगात्मा तं न वेदेति " पु
सोम्योपतापिनमि" त्यादिना ॥ ८ ॥ ननु यो मत्तोऽन्य ईश इति जान
यश्चाहमेव ब्रह्मेति वेद तयोः कीदृशं फलम् । तत्राह । यथा कश्चन पु
राजभटैरानीतश्चौरोऽयमिति । यदा स चौरस्तदा दण्डयो यदि न च
स्तदा न तथा । योऽहं ब्रह्मेति वेद, परकीय ब्रह्मत्वापहारकत्वादण्ड
मद्भिन्नं ब्रह्मेति जानन्न दण्डय इति पुरुषमित्यादिना ॥९॥ एतैर्नवभि
ष्टान्तैर्जीवेशयोर्भेदः सिध्यति । सिद्धे च तस्मिन् " स आत्मा तत्वम
त्यत्रातदितिच्छेदः सम्यगेवेति प्रतीमः । तस्मात्सर्वेषामपि दृष्टान्तानां
परत्वा"त्तत्वमसी"ति वाक्यस्यापि भेदपरत्वं युक्तम् । तस्माद्भेद एव स
वेदान्तसमन्वय इति । तत्तुच्छमित्याहुरेके तार्किकादिमतप्रवेशा
अभेदप्रतिपादकश्रुतीनां सर्वस्वार्थत्यागेनात्यन्तबाधप्रसङ्गात् । " तं
परादाद्य आत्मनोऽन्यत्र सर्वं वेद " इत्यादि भेदस्य निन्दाश्रवणाच्च ।
" द्वा सुपर्णा सयुजा, ज्ञाज्ञौ द्वावजावीशानीशौ " इत्याद्याः श
प्रागुदाहृताः श्रुतयः । " द्वाविमौ पुरुषावि " त्याद्याः स्मृत
"भेदव्यपदेशाच्चान्यः" इत्यादीनि सूत्राणि च सन्ति । ताभिर्जीवेश
स्य सिद्धत्वात् कथं प्रत्याख्यातुं शक्यते इति । न चोक्तश्रुतीनां कल्पि
दपरत्वेन प्रामाण्योपपत्तिः, द्वौ चन्द्राविवितिवत् । उक्तश्रुतीनां कल्पित
परत्वे वेदान्तानामतत्वावेदकत्वापत्तेः । नच प्रत्यक्षप्राप्तभेदानुवादक
द्भेदश्रुतीनां दुर्वलत्वमिति वाच्यं,यतः भेदश्रुतीनां भेदप्रतिपादकत्वान्ना
दकत्वं नहि त्रैकालिकभेदः प्रत्यक्षेण प्रतिपत्तुं शक्यः । न च 'अजो
इत्यादिश्रुतौ त्रिकालाबाध्यत्वबोधकपदाभाव इति वाच्यम् । त्रिकाल

ध्यस्य भेदस्य पदादनुपस्थितत्वेऽपि अनुमानेन तदुपस्थितेः सम्भवात् उक्तश्रुतिबोध्यो भेदस्त्रिकालाबाध्यः श्रुतिप्रामाण्यलब्धत्वादिति प्रयोगः "नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपा" इति भेदव्याप्यबहुत्वस्य प्रत्यक्षायोग्यातीतादिकालसम्बन्धोक्तेः, स्मृतेश्च श्रुतिव्याख्यारूपत्वात्। किञ्च यदि प्रत्यक्षस्य प्रामाण्यमभ्युपेयते तत एव भेदः सिद्ध्यति। श्रुतेर्नित्यानुवादकताऽस्तु। यदि तस्य प्रामाण्यं नोररीक्रियते तदा श्रुतेर्नानुवादकत्वम्। न च यत्र ज्ञातज्ञापकत्वं तत्रानुवादकत्वमितिनियमोऽभ्युपेयते, न तु प्रमाणगृहीतग्राहित्वमिति वाच्यम्। यथेदं रूप्यमिति वाक्यस्याप्रमाणगृहीतग्राहित्वेनाप्रमाणता, तद्वद् भेदप्रतिपादकश्रुतेरप्रामाण्यापत्तेः। इष्टापत्तौ च तद्दृष्टान्तेन वेदमात्रेऽपि तत्वापत्तेः। भेदश्रुतीनामनुवादकत्वस्वीकारेऽपि तद्वति तत्प्रकारकत्वरूपयाथार्थ्यप्रामाण्यहानेश्च। न चेशभेदस्य प्रत्यक्षप्रमाणसिद्धत्वात् भेदप्रतिपादकश्रुतीनां वैयर्थ्यं प्रसज्जेत इति वाच्यम्। यतः ब्रह्मविशेष्यकजीवप्रतियोगिकभेदः जीवविशेष्यकब्रह्मप्रतियोगिक भेदः प्रत्यक्षेण प्रतिपत्तुं न शक्यते। यथा पिशाचप्रतियोगिकभेदः प्रत्यक्षेण प्रमाणेन गृह्यते न तु तत्प्रतियोगिपिशाचः। तथा भेदप्रतियोगिब्रह्म वेदान्तशास्त्रमन्तरा कथमपि ज्ञातुं न शक्यते, तज्ज्ञानार्थं शास्त्रस्य सार्थक्यम्।

न च ब्रह्मभेदप्रतियोगिनो ब्रह्मणो ज्ञानार्थं यद्यपि वेदान्तशास्त्रस्यापेक्षा वर्त्तते तद्भेदस्तु न शास्त्रसापेक्षनियतः। किन्तु प्रत्यक्षप्रमाणसापेक्षस्तथा च जीवब्रह्मणोर्भेदस्य प्रत्यक्षप्रमाणप्राप्तत्वादभेदश्रुतीनामनुवादकत्वं दुर्वारमिति वाच्यम्। यतोऽनुभवेन गृहीतोऽर्थः तद्ग्राहित्वेन स्मृतेरनुवादकत्वापत्तिस्तद्वारणाय स्वनिरपेक्षप्रमाणगृहीतग्राहित्वमनुवादकत्वं वाच्यम्। प्रकृते च नहि श्रुतिनिरपेक्षं प्रत्यक्षप्रमाणं किन्तु सापेक्षमेवेति न भेदश्रुतेरनुवादकत्वम्। नच मास्तुश्रुतीनामनुवादकत्वं व्यावहारिकभेदपरत्वेननैराकाङ्क्ष्याङ्गीकारादिति वाच्यम्। भेदश्रुतीनां व्यावहारिकभेदपरत्वेन बाध्यत्वात् अप्रमाणतापत्तेः। न च कर्ममीमांसकानां मते "वायुःक्षेपिष्ठा देवते" त्यर्थवादानां यथा स्वार्थे तात्विकप्रामाण्याभावेऽपिस्तुतौ तात्त्विकप्रामाण्यं,तथा भेदश्रुतीनां स्वार्थेप्रामाण्यविरहेऽपि प्रवृत्त्यादौ तात्विकप्रामाण्यमिति वाच्यम्।नह्युत्तरकालेऽर्थवादबोध्यं प्राशस्त्यं बाध्यते, प्रकृते तु तत्वज्ञानेनोत्तरकाले भेदस्य बाधाद्बाधितार्थबोधजनकत्वात् भेदश्रुतीनामप्रामाण्यस्य दुर्वारत्वात्। न चाभेदश्रुतिबिरोधा-

द्भेदश्रुतीनां न स्वार्थे प्रामाण्यमिति वाच्यम् । अभेदश्रुतीनां लक्षणया अखण्डचिन्मात्रबोधकत्वेन भेदज्ञानाप्रतिबन्धकत्वात् । नहि धर्मिमात्र-बोधकं मानं तद्धर्मवैशिष्ट्यविरोधि भवितुमर्हति ।

न च " नेह नानाऽस्ति किञ्चन, सर्वं खल्विदं ब्रह्म, तत्त्वमसी-त्येवमादयः शतशः श्रुतयस्सन्ति, ताभिरवान्तरतात्पर्येण भेदाभावो बोध्यते, महातात्पर्येणाखण्डं चिन्मात्रं प्रतिपाद्यत इति विरोधोदुर्वार इति वाच्यम् । यद्यवान्तरतात्पर्येण भेदाभावो बोध्यते तदा भेदस्यापि बोधनात्तस्य तात्विकतापत्तेः नहि महातात्पर्य्यजन्योबोधः कमपि प्रति-बध्नाति । अवान्तरतात्पर्यजन्यबोधस्तु भेदाभावं विदधानः कथं भेदं विरुन्ध्यात् । यद्यवान्तरतात्पर्य्यजन्यबोधः विहितं निषिध्यात्तदा स्वव्या-घातकत्वं स्यादिति । न च भेदाद्यभावो ब्रह्मैवेति वाच्यम् । तज्ज्ञानस्य भेदाविरोधित्वात् । अपि च, " यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता " इत्यत्र सर्वकामावाप्ति फलोक्तेः, शुद्धज्ञानफलोक्तेश्च, त्वयाऽपि शुद्धब्रह्मविषयत्वेन स्वीकृताया भूमविद्यायाः फलोक्त्यवसरे " यस्य सर्वेषु लोकेषु कामचारो भवति पञ्चधा सप्तधे " ति भेदोक्तेः । " परञ्ज्योतिरुपसम्पद्यते " इत्यत्रापि स्वरूपाभिव्यक्तिफलोक्तेः । " तदा विद्वान् पुण्यपापे विधूय निरञ्जन " इत्यत्रापि कर्मक्षयोक्तेश्च त्वन्मतेऽपि भेदभोगादिपरेषु फलाध्यायान्तपाद-स्थेषु जगद्व्यापारवर्जं "सङ्कल्पादेव तच्छ्रुतेः, भोगमात्रसाम्यलिङ्गाच्चे" त्यादिषु सूत्रेषु प्रक्रान्तशुद्धविद्यायाः फलस्यैव वक्तव्यत्वाच्च । " पृथ-गात्मानं प्रेरितारञ्चे " ति भेदज्ञानान्मोक्षोक्तेश्च । तस्माद्भेदश्रुतीनां पारमार्थिकभेदपरत्वमेव सिद्धम् ।

किञ्च भेदः पारमार्थिक एव षड्विधतात्पर्य्यनिर्णायकलिङ्गो-पेतश्रुतिगम्यत्वात् । तथाह्यथर्वणे " द्वासुपर्णो " त्युपक्रमः । " परमं साम्यमुपैती " त्युपसंहारः ॥ १ ॥ " तयोरन्यः. अनश्नन्नन्यः, अन्य-मीशम् " इत्याद्यभ्यासः ॥ २ ॥ शास्त्रैकगम्येश्वरप्रतियोगिकस्य काल-

ाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वता ॥ ३ ॥ "पुण्यपापे विधूये"
फलम् । ४ ॥ "तस्य महिमानमिती" त्यर्थवादः । ५ ॥ "अन्योऽन-
न्नि"त्युपपत्तिः ॥ ६ ॥ तस्माद्भेद एव वेदान्तशास्त्रसमन्वयः ।

अत्रोच्यते । अत्यन्तभेदवादिभिः ब्रह्मणः प्रपञ्चं प्रत्युपादानका-
त्वं नानुमन्यते, किन्तु निमित्तकारणत्वं । तच्च न वक्तुं शक्यते ।
ण उपादानत्वाभावे कार्यव्याप्त्यसम्भवात् । परिच्छिन्नत्वापत्तेश्च ।
दि ब्रह्मणो विश्वं प्रति निमित्तकारणत्वमुररीक्रियते तदा कारणविज्ञा-
सर्वकार्यविज्ञानरूपश्रौतप्रतिज्ञाया भङ्गः प्रसज्जेत । नहि निमित्त-
रणविज्ञानेन सर्वकार्यज्ञानस्य सम्भावनाऽपि, तथा सति कुलालादि
नादपि मृन्मयमात्रस्य ज्ञानापत्तिः । नतु तदस्ति सर्वानुभवविरोधात् ।
जन्माद्यस्य यतः" "यतो वा इमानि भूतानी" त्यादिशास्त्रप्रामाण्यात्
ज्जन्माद्यभिन्ननिमित्तोपादानकारण एव ब्रह्मणि शास्त्रस्य समन्वय-
तिपादनात् । अन्यथा यत्प्रयन्त्यभिसंविशन्तीति कारणश्रुतेर्बाध-
ङ्गात् । नहि निमित्तकारणे कार्यस्य लयः सम्भवतीति ।

## तुरीयां विप्रतिपत्तिं सिद्धान्तयितुमुत्थापयति ।

स्वभावतोऽपास्तसमस्तदोषोऽनन्ताचिन्त्यविचित्रयावदात्मवृत्ति-
भाविककल्याणगुणशक्तिवैभवाश्रयो जगज्जन्माद्यभिन्ननिमित्तो-
दानहेतुर्निखिलशास्त्रैकवेद्यो मुक्तोपसृप्यः परब्रह्मभगवदादिशब्दाभि-
श्चिदचित्पदार्थभिन्नाभिन्नसम्बन्धाश्रयः श्रीपुरुषोत्तमो रमानिवासः
कृष्ण एव सर्ववेदान्तप्रतिपाद्य इति राद्धान्तः । अत्रेदमालोचनीयम् ।
चिन्त्यानन्तशक्तिविभवे निखिलजगदुद्भवाप्ययस्थितिकारणे चिदचि-
भिन्ने परब्रह्मणि श्रीपुरुषोत्तमे सर्वेषां वेदान्तवचनानां समन्वयो-
नोपपद्यते तस्मिन्भेदस्य सत्वात्तत्स्वरूपस्य वक्तुमशक्यत्वात् यदि
र्मिस्वरूपं भेदस्तदा दूरस्थे वनस्पत्यादावभेदारोपो न स्यात् । धर्मिस्वरू-
तीतौ भेदस्यापि प्रतीतत्वात् । न चारोपोऽभेदमेवावगाहते, न धर्मि-
रूपमतो भ्रमोपपत्तिरिति वाच्यम् । भ्रान्त्या धर्मिस्वरूपस्याप्यवगाह-
त् । न च भ्रान्तेरुभयविषयकत्वकल्पने गौरवात्तादात्म्यधर्मविषयक-
वास्त्विति वाच्यम् । अयमभिन्न इति न भासेत, अभेद इत्येव
सेत । तथा च भ्रान्तेरुभयविषयकत्वकल्पनाया आवश्यकत्वात् ।

ननु भिन्नेष्वभेदप्रकाश इति नोच्यते, किन्तु ये भिन्नास्तेष्वनारब्ध
यवित्वमारोप्यते न चारोपानुपपत्तिरारब्धावयव्यपेक्षया भेदग्रहस्य वि
षरूपतया विरोधित्वाभावात् । न चानेकेष्वेकस्मिन्नवयविन्यारोप्यम
ऽनेकेषु कुसुमेष्वारोप्यमाणसूत्रे यथा न भ्रान्तिस्तद्वदत्रापि न स्या
वाच्यम् । तत्रानेकेषु संयागितया सूत्रस्य प्रतीतेरभ्रान्तिविषयत्
प्रकृते त्वनेकेषु वनस्पतिस्ववयव्यन्तरसंयोगितया न प्रतीयतेऽतोऽ
ब्धावयविष्वारब्धावयवित्वभ्रम इति चेन्न, तेषामनुदाहरणीयत्व
यत्र भिन्नयोश्चैत्रमैत्रयोस्स एवायमिति प्रत्यभिज्ञाभ्रमो जायते तदे
हरणत्वेनेष्टत्वात् । न चातस्मिंस्तद्बुद्धिर्यत्र तत्रापि नैक्याध्यासः, किन्
यनिष्ठतादात्म्याख्यधर्मान्तरमारोप्यतेऽतोधिष्ठानस्वरूपप्रतीतावपि वि
धित्वाभावाद्धर्मान्तरारोपोऽभ्युपेयत इति वाच्यम् । यद्येवं तदा
पटो न भवतीत्यत्रापि घटस्य पटत्वधर्मान्तरमारोप्य निषिध्यत
वक्तुं शक्यत्वात्तादात्म्याभावस्य संसर्गाभावस्यैक्यापत्तेः । न चेष्टाप
संसर्गाभावतादात्म्याभावयोरभेदाङ्गीकारेऽपसिद्धान्तापत्तेः । यदि
यत्र प्रतियोगिनमारोप्य निषेधबुद्धिः स संसर्गाभावः । यत्र पुनः
योगितावच्छेदकमारोप्य निषेधबुद्धिः सोऽन्योऽन्याभावः । आरो
प्रमाणमिदमिह नास्ति । इदमिदं न भवतीति प्रतीतिस्तद्वृत्तिधर्म
तादात्म्यं न तु अभेदः, तस्याप्रामाणिकत्वात्तयोर्भेदोऽभ्युपेयत इत्यु
तदाऽपि तयोर्भेदाङ्गीकारेपि भेदाभेदयोर्विरोधात् स्वरूपभेदग्रहे भेद
न स्यात् । पटपटयोरिवेति दूषणं दुर्निवार्यम् । यदि धर्मिस्वरूपा
ऽतिरिच्यते तदा प्रतीतावन्योऽन्याश्रयः । तथाहि धर्मित्वप्रतियो
व्यवस्थाप्रतीतावन्योऽन्याभावः प्रत्येतुं शक्यते । घटः पटो नेति प्र
अन्योऽन्याभाववतीतौ च तद्व्यवस्था प्रत्येतव्येति । प्रतियोगिप्र
प्रतियोगित्वधर्ममनुल्लिखन्ती धर्मिप्रतीतिरपि धर्मित्वाकारमनुल्लिख
भेदप्रतीतिकारणमतो न अन्योऽन्याश्रयप्रसङ्गः, अतएव कुम्भः प
भवतीति प्रतिषेधावसरे कुम्भस्य प्रतियोगिताया अविवक्षितत्वान्न
षेधप्रसङ्गः । न च तर्ह्य निषिध्यमानकुम्भेन सह भिन्नत्वेनागृहीत
टस्यापि निषेधो न स्यादिति वाच्यम् । पटस्यासत्वनिरूपणावसरे
प्रतियोगित्वेनापेक्ष्यमाणत्वादाश्रयत्वेन चानपेक्षितत्वात्तस्य कुम्भ
ङ्ग्रहाभावात् । यद्यप्यन्योऽन्याभावस्योभयाश्रयत्वादुभयप्रतियो
श्चाश्रयप्रतियोगिभेदाभावादुभयनिषेधसङ्ग्रहौ विरुद्धावेकदा स्यात

तथाऽप्यन्या कुम्भाश्रयताऽन्या पटाश्रयता, अन्या कुम्भप्रतियोगिता, अन्या पटप्रतियोगिता। तथा च घटेन विशेषिता पटेन विशेषिता वाऽऽश्रयता प्रतियोगिता च भिन्नैवेति नोक्तदोषावकाशः। नापि प्रतियोगित्वसिद्ध्यर्थमनुयोगिनः सकाशाद्भेदमुपजीवति न वा। उपजीवति चेदन्योऽन्याश्रयत्वं, नोपजीवति चेत्तर्हि स्वभिन्नत्वात्प्रतियोगिनो भिन्नत्ववत् स्वस्मादपि स्वभेदस्स्यादिति वाच्यम्। धर्मिग्रहणं प्रतियोगिस्मरणञ्च भेदज्ञानसामग्री, प्रतियोगिता स्मर्यमाणता, अनुभूयमानता च धर्मिता तेन स्मरणादिना नियमोपपत्तेरितरेतराश्रयादिप्रसङ्गानवकाशात्। नापि सोऽयं देवदत्त इत्यत्रायमित्यंशस्य गृह्यमाणतया धर्मित्वात्। स इत्यंशस्य स्मर्यमाणतया प्रतियोगित्वात्तत्रापि भेदः प्रकाशेत। वास्तवतत्सत्त्वासत्त्वाभ्यां विशेषात्। भेदसत्तासहितप्रतियोगिस्मरणादि भेदग्रहे कारणम्, तद्वैकल्यान्नात्र तथेति। अथ यदि भेदोऽधिकरणस्वरूप एवेत्युच्यते तदा भेदस्य सप्रतियोगिकतया भेदत्वेन निरुच्यमानानां भूतलादीनां सप्रतियोगिकत्वप्रसङ्गः, न च भूतलादेस्तथा पटाद्यनपेक्षतयैव प्रतीतेरिति चेन्न। यतो देवदत्तस्य तत्वेन रूपेण प्रतीतावनन्यापेक्षत्वेऽपि पितृत्वेन रूपेण तस्य प्रतीतौ प्रतियोगिसापेक्षत्वं यथा, तद्वद्भूतलादीनां भूतलत्वेन प्रतीतावनन्यापेक्षत्वेऽप्यधिकरणत्वेन तस्य प्रतीतौ प्रतियोगिसापेक्षत्वमनुभवसिद्धम्।

न चैवं पदार्थजातस्य केनचिद्रूपेण सापेक्षत्वं रूपान्तरेण निरपेक्षत्व सम्भवादिदं सप्रतियोगिकमिदं निष्प्रतियोगिकमिति व्यवस्था कथमुपपद्येत इति वाच्यम्। यदसाधारण्येन स्ववाचकपदप्रवृत्तिनिमित्ततावच्छेदेन प्रतीतौ प्रतियोगिप्रतीतिसापेक्षं तत्सप्रतियोगिकमन्यत्तु निष्प्रतियोगिकमिति सप्रतियोगिकनिष्प्रतियोगिकव्यवस्थाया उपपत्तेः। यथाऽभाववाचकं यत्पदं तस्य तत्प्रवृत्ति निमित्तमभावत्वं तदवच्छेदेन प्रतीतौ प्रतियोगिसापेक्षत्वात् तत्सप्रतियोगिकम्। घटादिपदं घटादिवाचकपदप्रवृत्तिनिमित्तभूतघटत्वावच्छेदेन प्रतीतौ प्रतियोग्यादिनिरपेक्षत्वान्निष्प्रतियोगिकमिति।

ननु भूतलवृत्तिघटभेदस्य भूतलानतिरिक्तत्वेऽपि भूतलवृत्तिघटभेदत्वन्तु भूतलादतिरिक्तं वाच्यं तदप्यतिरिक्तं तदपि भिन्नमित्यनवस्थाप्रसङ्ग इति चेन्न। भेदत्वभेदस्याप्यधिकरणस्वरूपत्वात्। न च भेदस्य भेदमादायानवस्थाऽपरिहार्या, भूतले भेदद्वयं भूतलं घटोनेति प्रतीतिसिद्ध एको भेदो भूतलं भेदोनेत्यपरस्तथा च भेदत्वेन रूपेण सकलभेदानां

सङ्ग्रहादनवस्थाप्रसङ्गाभावात् । यथा तार्किकाणां नये घटे रूपरसा
प्रतियोगिकसमवायस्य प्रतियोगितावच्छेदकभेदेऽप्यभेदस्तद्वदत्रापि घ
त्वादिप्रतियोगितावच्छेदकभेदेऽपि भूतलवृत्तिनिखिलभेदोऽप्यभिन्न
नापि धर्मिस्वरूपं भेदस्तथा दूरस्थवनस्पत्यादावभेदारोपो न स्यादि
प्रागभिहितं वाच्यम् । भेदमात्रस्य संशयविपर्ययविरोधित्वाभावा
भेदत्वेन भेददर्शनस्यैव तथात्वात् । आरोप्यारोपविषयगतधर्मयोरन
न्यस्मिन्नभावदर्शनं वा, आरोप्यधर्मस्यारोपविषये व्यतिरेकदर्शनं
विरोधि । प्रकृते तथात्वस्याभावान्नोक्तदोषावकाशः । एतेन दूरादन
व्यक्तकरचरणादिपुरुषस्वरूपे दृष्टे स्थाणुर्वा पुरुषोवेति संशये
स्यादित्यपि निरस्तं भवति ।

किञ्च यदि भेदस्य घटस्वरूपत्वमुररीक्रियते तदा घटप्रतियो
भेदस्यापि घटस्वरूपत्वमापद्येत तन्निरासाय पटविशिष्टभेदस्यैव घट
रूपत्वं वाच्यं तथा सति पटस्यापि घटस्वरूपापत्तिः न चेष्टाप
घटपटयोरभेदे घटमानयेत्युक्तौ पटस्याप्यानयनप्रसङ्गात् । तथा न
भेदस्याधिकरणस्वरूपत्वं येन तद्बाधे शून्यतापत्तिः स्यादिति चेन्मै
भेदप्रतियोगिन उपलक्षणत्वेन स्वरूपतायामनन्वयात् । अन्यथा दु
निवृत्तेः पुमर्थतया पुमर्थत्वं दोषाभावस्य साधकताप्रयोजकत्वे दोषस्
साधकताप्रयोजकत्वम् । अनृतव्यावृत्त्यज्ञाननिवृत्त्यो ब्रह्मरूपत्वे
तादीनामपि तद्रूपत्वम् । अज्ञाननिवृत्तेर्मोक्षत्वेऽज्ञानस्य च मो
स्यात् ।

भिन्नयोर्देवदत्तयज्ञदत्तयोः स एवायमित्यभेदभ्रमो यदा ज
तदा देवदत्तस्य सत्वद्रव्यत्वाधिकरणतया प्रतीतेर्भेदग्रहस्यैव सम्भ
दनुत्पत्तिरिति यदुक्तं तदपि न । यतः, न कारणमात्रात्कार्यनिष्पत्ति
तु कारणपौष्कल्यादिह च नाधिकरणप्रतीतिरेव भेदप्रतीतिसामग्री
योगिस्मृत्यादिसहिता एव भेदप्रत्यायकत्वादिह च तदभावाद्भेदा
वस्तुतोऽस्याः शङ्कयाःसमाधानस्य प्रागभिहितत्वान्नात्रशङ्काकलङ्कावक
अपि च किं भेदज्ञानमेव नास्ति, सदपि कारणजन्यं न बाध्यमानं
वा, तत्र प्रथमः सर्वतो विरोधादनुत्तरः । भेदभ्रमनिरासाय वेदान्त
भेदाप्रतीतौ बहुयुक्तिभिस्तन्निराकरणञ्च भेदः स्वरूपं वा धर्मो वेति
ल्पश्च नोपपद्यते । न हि पर्यायेण विकल्पः सम्भवति, नहि केन

घटः कलशो वेति विकल्प्यते । द्वितीये कारणाजन्यत्वमजन्यत्वेन ? अकारणजन्यत्वेन वा ? नाद्यः, भेदप्रतीतेर्नित्यत्वापत्त्या ब्रह्मज्ञानानिवर्त्यत्वापत्तेः । द्वितीयोऽपि व्याघाताद्धेयः ।

तृतीयेऽपि किं शुष्कतर्कैरेव भेदस्य बाध्यत्वाध्यवसायः, श्रुत्यादिना वा ? नाद्यः, ऐक्यस्यापि ब्रह्मस्वरूपत्वे तद्वदेव निरपेक्षत्वाद्यापातात् धर्मत्वेनानवस्थेत्यादितर्कबाध्यत्वसाम्यात् । त्वयैव वेदान्तानामभेदपरत्वं दर्शयितुमिदं शास्त्रं प्रवृत्तं, न तर्कशास्त्रवत्केवलाभियुक्तिभिः कञ्चित्सिद्धान्तं साधयितुं प्रवृत्तमित्युक्तत्वाच्च । न द्वितीयः श्रुतेः साक्षिप्रत्यक्षाद्यबाधकत्वस्योक्तत्वात् । अयं सद्रूप आत्मा भेदो नेति धीर्भेदः सन्निति ज्ञाने बाधिका सा च यदि भेदमवगाहते तदा तस्या अभेदसाधकत्वं नोपपद्यते प्रत्युत भेदसाधकत्वमेव । यदि भेदबाधकज्ञानस्याभेदविषयकत्वमुररीक्रियते तदाऽभेदइत्यत्र नञर्थोवक्तव्यः, स हि तदन्यो वा तद्विरोधी वा तदभावो वा ? त्रिष्वप्यर्थेषु भेदो दुर्निवारः तदनन्यत्वे तद्विरुद्धतदभावत्वयोरयोगात् । किञ्च बाधकं ज्ञानं त्रिविधं-नायं भेद इति वा, नास्त्यत्र भेद इति वा, अन्यदेव भेदात्मनाऽभादिति वा ? तत्र नेदं रजतं, नास्त्यत्र रजतमन्यदेव रजतात्मनाऽभादिति वत्सर्वथा भेदावगाहीति कथं भेदमात्रबाधकम् । आद्ये द्वितीये च बाधकज्ञानेऽधिकरणतया प्रतियोगितया भेदावगाहित्वम् । तृतीयेऽन्यदेवेत्युक्त्या स्पष्टं भेदावगाहित्वम् ।

नन्वेकमेवानेकात्मना प्रत्यभादिति ज्ञानं बाधकमिति चेन्न । एकानेकयोर्वस्तुनोर्भेदाभावे वैलक्षण्याग्रहणे च बाधकत्वायोगात् । किञ्च भेदाद्भिन्नतया स्वार्थं बाधधीरवगाहते न वा ? आद्ये भेदः स्थिरोऽन्त्ये न स्वस्माद्भेदबाधिका, तस्मात् क्लृप्तविषयत्वान्नान्योन्याश्रयवादेरुत्थानम् । यस्तु पदार्थान्निरुच्य व्यवस्थापयति तं प्रति अधिकरणस्वरूपो वा धर्मो वा भेद इति दूषणं शोभते नास्मासुह्यनिर्वचनीयत्ववादिषु प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षान्तर्बहिर्भावाभ्यां सदसत्वाभ्यामन्येनापि धर्मेणाऽनिर्वाच्य इत्यङ्गीकारादिति खण्डनकारेणोक्तं तदपि न रमणीयम् । तर्कबाध्यत्वमनिर्वचनीयत्वव्याप्यञ्चेत्तदा त्वदभिमतैक्य

स्यापि तर्कबाध्यत्वेनानिर्वचनीयतापत्तेः । तच्च यथा भवतां तर्कबाध्य नेष्टं तथा खण्डनकारोक्तसमाधानं ममापि नेष्टम् । यच्च कथं तर्क स्यात्तदा शून्यवादापत्तिरिति चेन्न । यदि भेदोऽधिकरणान्नातिरि तदा भेदबाधे शून्यवादस्य तुल्यत्वात् ।

यदि भेदस्याधिकरणस्वरूपत्वमुच्यते तदा घटभेदशब्दयोः प यत्वं स्यात् अतो भेदस्य नाधिकरणस्वरूपत्वं वाच्यमिति चेन्न । घ भेदत्वप्रवृत्तिनिमित्तानां भेदात् पर्य्यायतापत्तेरभावात् । अथ भे तावत् जातिरूपं वा उपाधिरूपं वा ? तन्निष्ठासाधारणधर्मरूपं व नाद्यः, अनवस्थाभयाद्यथा जातौ जातित्वं जातिरूपं वक्तुमशक्य तथा भेदे भेदत्वजातिस्वीकारेऽनवस्थाप्रसङ्गात् । न द्वितीयः, अन्यो श्रयापत्तेः । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपं भे वक्तव्यम् । तत्र तादात्म्यं निविष्टं तच्चाभेदात्मकं तस्य प्रतियोगि भेदस्य प्रवेशस्तज्जिज्ञासायां पुनर्निरुक्तलक्षणं वाच्यमित्यन्योन्याश्र न तृतीयः । तादात्म्यावच्छिन्नप्रतियोगिताकात्यन्ताभावेऽतिव्या तस्यापि स्वरूपत्वेऽनुगतव्यवहारानुपपत्तेरिति चेन्न, भेदत्वादेरखण्डो धित्वात् । अथ निर्विशेषवादिनां मतेऽपि विशिष्टबुद्धित्वावच्छिन्नं विशेषणज्ञानस्य कारणत्वं निर्विवादम् ।

सत्यं ब्रह्म ज्ञानस्वरूपं ब्रह्मेति विशिष्टबुद्धिः सत्यत्वज्ञान दिधर्मज्ञानमन्तरा नोपपद्यते । अतो धर्मभेद आवश्यकः । न कल्पितधर्ममङ्गीकृत्य तादृक् विशिष्टबुद्धिरुपपादयितुं शक्यते इति च्यम् । श्रुतिबोध्यानां सत्यत्वादिधर्माणां कल्पितत्वस्यासम्भवदु त्वात् । तथा सति श्रुतेरतत्वावेदकत्वापत्तेः । नह्यारोपे बाधमन्त न्यत्प्रमाणमस्ति येन सत्यत्वादीनां कल्पितत्वसिद्धिः स्यात् । न "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः पारमार्थिकसत्यत्वे तात्पर्यं ना वाच्यम् । व्यावहारिकस्य सत्यत्वादेरसिद्धिप्रसङ्गात् । यद्यु ब्रह्मणि पारमार्थिकसत्यत्वं न बोध्यते तदा तदितरस्मिन्प्रपंचे व्या रिकसत्यत्वं तव मते न सिद्ध्येत् ।

अन्ये तु, यत्पुनरभिधीयते — किमेतैर्भेदखण्डनवादिभिर भवति किं भेदज्ञानमेव नास्ति सदपि नित्यमनित्यम् , अनित्यमपि निर्हेतुकं सहेतुकमपि वा, निर्विषयं सविषयमपि वा बाध्यमानं

यम्। नाद्यः, सिद्ध्यसिद्धिभ्यां व्याघातात्। लोकानुभवविरोधात्तदनङ्गी कुर्वतोऽप्रमितप्रतियोगिकनिषेधविरोधादङ्गीकारे सुतरां तद्विरोधात्प्रथमः स्वरूपमेव न लभते। कुतस्तत्रोत्तराभिधानस्य प्रत्याशा। सामग्र्यनिरू-पणाद्भेदज्ञानं सदपि नित्यमित्यङ्गीकारे सर्वज्ञानोपरमसुषुप्तिविरोधात् द्वितीयोऽपि विकल्पो हेयः। कादाचित्कसतो निर्हेतुकत्वे नियामकाभा-वात् स्यादेव वा न स्यादेव वेति तृतीयोऽप्युपेक्षणीयः। नापि चतुर्थः, निर्विषयस्य प्रतीतिविरुद्धत्वात्। पञ्चमश्चिन्त्यते, भेदज्ञानस्य स्वरूपा-न्योन्याभाववैधर्म्येष्वन्यतमो विषय उत तेभ्योऽन्यः। द्वितीये प्रागुक्ता-भिरनुपपत्तिभिः स्वरूपादिभेदविषयाभिस्त्रिविध एव भेदो बाध्यः।

प्रकारान्तरस्य तु व्यधिकरणत्वान्न बाधसम्भवः। एवं स्वरूपादि भेदानां बाध्यत्वे ततोऽन्यभेदस्यापि बाध्यत्वस्वीकारे चौरापराधेन निरप-राधमाण्डव्यमहामुनिनिग्रहः स्मर्य्यते। तत्रापि यदि धर्मान्तरमेवेति सत्त्वं तदाऽनवस्थाभिया तदधिकः प्रवाहस्त्यज्यतां, तस्य कुतस्त्यागः? नह्यनवस्था प्रतिभासमानमर्थं निवर्त्तयति, किन्तु प्रवाहं परिहारयति, गन्धे गन्धान्तरवत्।

अथान्योन्याभावं प्रत्यधिकरणतया प्रतियोगितया ज्ञायमान-मन्योन्याभावस्य कारणं चेत्तर्ह्यन्योन्याभावज्ञानसिद्धौ तत्सिद्धिरित्या-त्माश्रय उच्यते। न सोऽपि दोषोऽस्ति, यतोऽन्योन्याभावविशेषिताधि-करणज्ञानस्य तद्धेतुत्वे स दोषः स्याद्धेत्वन्तराङ्गीकारे तु नात्माश्रयः तच्चावश्यं वाच्यमन्यथा भेदज्ञानमेव न स्यात्, अस्ति च तत्ततो हे-त्वन्तरमाक्षिपेत्। न तु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्त्तेत. तथा च दृश्यमानकार्यानुसारेण कारणं कल्प्यं न तु कारणादृष्ट्या दृष्टकार्य स्वरूपमपलपनीयम्। न च दृश्यमानकार्यस्य कारणतया हेत्वन्तरं न कल्प्यम्। आत्माश्रयत्वेपि तस्याविद्यावशादुपपत्तेरनुपपन्नविधानपटीयसी-त्वात्तस्या इति वाच्यम्। अविद्यास्वीकारेणात्माश्रय दोषस्य वारयितु-मशक्यत्वात्। अविद्या स्वीकार आत्माश्रयदोष परिहारश्चेत् घटादीना-मपि कुलालनिरपेक्षाणां स्वत एवोत्पत्तेर्मृदाद्युपादानं न स्यात्। अथ प्राक्कालावच्छिन्नं सत्कारणमुत्तरकालावच्छिन्नं सत् कार्यं तत्रैकस्य न सम्भवति। स्वसिद्धौ स्वसिद्धिरित्यात्माश्रयदोषस्तस्य परिहारेण सिद्धं भेदज्ञानं, तच्च भिन्नत्वादिप्रकारैः सदादिप्रकारैश्च दुर्निरूपमतोऽविद्येत्यु-

च्यत इति विचारार्थः । इति चेत्, अन्योन्याभावज्ञानस्य सहेतुकत्वे नास्ति विवादस्तदन्योन्याभावज्ञानं कार्यमेव स्वानुरूपं कारणं कल्पयतीति त्वया मया च स्वीकारात् । तच्च दुर्निरूपमिति यदुक्तं तदपि न यतो घटस्य प्रतियोगित्वप्रतीतिमपेक्ष्य पटस्य प्रतियोगित्वप्रतीतिरितरेतराभावज्ञान कारणञ्चेत्स्वाश्रयादिदोषः स्याद्यदा तु प्रतियोगित्वनिरपेक्षाधिकरणप्रतीतिस्तन्निरपेक्षा च प्रतियोगिस्मृतिर्भेदज्ञानकारणमङ्गीक्रियते तदात्माश्रयाभावात्सुनिरूपणमेव कारणान्तरमित्याहुः ।

अथ भेदः किं स्वेन भिन्ने स्वस्थितिरुत द्वितीयभेदवद्भिन्ने किम्वा भेदान्तरेण भिन्ने वर्त्तते किम्वाऽभिन्ने ? नाद्यः, आत्माश्रयदोषदुष्टत्वात् । द्वितीयोऽप्यन्योन्याश्रयत्वादुपेक्षणीयः । अनवस्थादोषात्तृतीयोऽपि हेयः । भेदाभेदयोः परस्परविरुद्धत्वेनान्यतरनिषेधेऽन्यतरविधानस्यावश्यकत्वेन प्रकारान्तरस्यासम्भवात् ' परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायादिति चतुर्थोऽपि त्याज्यः । इति चेन्न अत्यन्ताभेदवादिनां मतेऽप्युक्तदोषस्य विद्यमानत्वात् । अभेदोऽभिन्ने वर्त्तते भिन्ने वा ? आद्ये, आत्माश्रयान्योन्याश्रयादिदोषाणां जागरूकत्वात् द्वितीये विरोधात् तेजस्तिमिरयोरिव भेदाभेदयोः परस्परविरोधात् अभेदस्य सत्वे कथं भेदः स्यास्यति । भेदसत्वेऽभेदः कथमिति दोषस्य समानत्वात् यद्यनिर्वाच्यत्वं तस्य वाच्यं तदा तत् तद्वति वर्त्तते तदभाववति वा ? नाद्यः, अनिर्वाच्यत्ववत्यनिर्वाच्यत्वस्य वृत्तित्वमिष्टं तदप्यनिर्वाच्यत्वात्तद्वति वर्त्तत इति परस्परसापेक्षत्वेनात्माश्रयस्य सत्वात् अनिर्वाच्यत्वाभावनिर्वाच्यत्वयोः परस्परविरोधान्न तदभाववत्यनिर्वाच्यत्वं वर्त्तत इति द्वितीयः कल्पोऽपि दुष्टः । नचाभेदस्य धर्मत्वे भिन्ने धर्मिणि निवेश उताभिन्न इत्यादि विकल्पदोषपरम्परा स्यात् । मया त्वभेदस्य ब्रह्मस्वरूपातिरिक्तत्वं नेष्यत इति मन्मते नोक्तदोषः प्रसरति आत्माश्रयादिदोषप्रसङ्गे नाभेदोऽभिन्ने वर्त्तते भिन्ने वेति निर्वक्तुमशक्यत्वादिति दूषणमनिर्वचनीयवादिनां भूषणमेवोक्तविकल्पेनाभेदस्यानिर्वाच्यत्वं सिद्ध्यतीति वाच्यम् । यतः यदि भेदस्याधिकरणस्वरूपातिरिक्तत्वं स्यात्तदा भिन्ने धर्मिणि वर्त्तते उताभिन्न इत्यादिविकल्पः प्रसज्जेत अस्माभिस्तु भेदस्याधिकरणस्वरूपत्वमुररीक्रियतेऽतोऽस्माकं नये न कोऽपि दोषावकाशः । भवन्नये त्वनिर्वाच्यत्वं तद्वति वर्त्तते तदभाववति वेति विकल्पप्रतिघातेन व्यावहारिकमप्यनिर्वाच्यत्वं न सिद्ध्येत्तथा सति मिथ्यात्वोपपादकैस्तैः ब्रह्मव्यतिरिक्तस्य सर्वस्यापि तत्वस्य

हतत्वात् । "तदैक्षत बहु स्यां प्रजायेय, स ऐक्षत लोकान्नु सृजा, सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिप्रतिपाद्यानामीक्षणादीनां तथात्वात्तदुपपादकमीक्षत्यधिकरणानामुच्छेदः प्रसज्जेत, तस्माद्भेदस्य पारमार्थिकत्वं सिद्ध्यति, सिद्धे च तस्मिन्नचिन्त्यानन्तशक्तिविभवे निखिल जगदुत्पत्ति स्थितिकारणे चिदचिद्भिन्नाभिन्ने परब्रह्मणि सर्वेषां वेदान्तवचनानां समन्वय उपपद्यत इति ।

ननु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय" मित्यादिना सजातीयत्वादिभेदशून्यत्वश्रवणात्कथमुक्तार्थसिद्धिरिति चेन्न । तादृशस्य जगद्व्यापारासम्भवात् । मायाङ्गीकारेण चेत् किं तदानीं निर्विशेषचिन्मात्रं ब्रह्म माया तिष्ठतीति जानाति न वा । जानाति चेत् ज्ञानमात्रस्य कथं ज्ञातृत्वं, न जानातीति चेत् अज्ञत्वात्कथमङ्गीकरोति । अपि च यत्किञ्चिच्छक्तियोग्यं मायाङ्गीकारानन्तरमभ्युपेयते भवद्भिः, तत्पूर्वं मायाङ्गीकारानुगुणशक्त्यभ्युपगमे निर्विशेषत्वहानिः । किञ्च तदानीं किं मायाविलक्षणं ब्रह्म उतावैलक्षण्येन मायात्मकम् । आद्ये, वस्तुपरिच्छेद प्रसक्तेः । द्वितीये, मायात्मके ब्रह्मणि सृष्टिसमये मायाङ्गीकरणं निरर्थकम् । ब्रह्म सजातीयादिभ्यो भिद्यते, "सत्यं ज्ञान" मित्यादिलक्षणात् । तच्च न सम्भवति, मायात्मकं ब्रह्म इत्यभ्युपगमे ब्रह्मणस्ततोवैलक्षण्याभावेन विजातीयमायादितः भेदस्यासिद्धत्वात् । व्यावृत्यर्थं हि लक्षणं तदन्यानिष्ठतन्निष्ठधर्मवत्वं नान्यथा ।

न च शिष्योपदेशार्थमध्यारोपापवादन्यायेनेदमुच्यते । असर्प भूतायां रज्जौ सर्पारोपवत् वस्तुन्यवस्त्वारोपोऽध्यारोपः । तत्र वस्तु सच्चिदानन्दाद्वितीयं ब्रह्म, अज्ञानादि जडजातमवस्तु । अज्ञानं सदसद्भ्यामनिर्वचनीयं, त्रिगुणात्मकज्ञानविरोधिभावरूपञ्च । अहमज्ञ इत्यनुभवादन्यथा कृत्स्नस्यापि जगतो मिथ्यात्वात् आचार्य्यो ज्ञानोपदेष्टा शास्त्रजन्यं ज्ञानं बन्धनिवर्त्तकमित्यादिका सर्वा व्यवस्था लुप्येत । कल्पिताचार्य्योपदिष्टेन कल्पितशिष्यस्य का वाऽर्थसिद्धिः । मोक्षार्थं श्रवणादिप्रयत्नो निष्फलोऽविद्याकार्य्यत्वात् । न चाचार्य्यतज्ज्ञानयोः कल्पितत्वेऽपि स्वप्नदृष्टसिंहभयेन प्रबोधवत् ज्ञानोत्पत्तिसम्भव इति वाच्यम् । दृष्टान्तवैषम्यात् । तथा च दृष्टान्ते स्वप्नसिंहरूपासद्विषयकं ज्ञानं प्रति सद्रूपदोषस्य पारमार्थिकस्य कारणत्वं ज्ञानस्य भयं प्रति भयस्य प्रबोधं प्रति प्रबुद्धस्यापि देवदत्तस्यापि पारमार्थिकत्वञ्च दृष्टान्ते सर्वस्यापि मिथ्यात्वेन दृष्टान्तानुपपत्तेः ।

अथ रज्जौ सर्पवन्निर्विशेषे ब्रह्मण्यारोपितस्य प्रपञ्चस्य कोवा द्रष्टा ब्रह्मैवेति चेत् ज्ञानमात्रस्य कथं द्रष्टृत्वं, मायायोगेनेति चेन्माया सम्बन्ध आगन्तुकः स्वाभाविकोवा । आद्ये, ब्रह्मणोविमुक्त्वाभाव प्रसक्तेः । द्वितीयश्चेत्तर्ह्यग्रेऽपि मायाशवलमेवेति सिद्धम् । अद्वितीयादि वाक्यस्य सविशेषपरत्वे सजातीयादिभेदशून्यत्वहानिश्च । न च शवल त्वेऽप्यग्रे प्रपंचाप्रतीतिरिति वाच्यम् । कारणाभावात् । ईच्छाभावमेव कारणमिति चेत्तदभावे कारणं वक्तव्यम् । इच्छैवेति चेत्, तर्ह्यऽग्रेपी च्छावत्वेन सविशेषस्य ब्रह्मणः सिद्धिर्नतु निर्विशेषस्याद्वैतहानिश्चेत्यल परदोषोद्घाटनेन । प्रकृतमनुसरामः । वेदान्तशास्त्रे त्रिविधानि वाक्यानि पठितानि भेदपराण्यभेदपराणि भेदनिषेधपराणि निषेधसामान्यपराणि च । तत्र "नित्यो नित्यानां, जहात्येनां भुक्तभोगामजोऽन्यः पृथगात्मानं प्रेरितारं च मत्वा, प्रधानक्षेत्रज्ञपतिः, अक्षरात्परतः परः तस्मिँल्लोकाः श्रिताः सर्वे, भीषाऽस्माद्वातः, यद्भूतयोनिं प्रवदन्ति धीराः, एष योनिः सर्वस्य, सर्वाँल्लोकानीशते ईशनीभिः, सर्वस्य शरणं सुहृत्, तमीश्वराणां परमं महेश्वरम्, स्वाभाविकी ज्ञानबलक्रिया च। "भेदव्यपदेशाच्चान्यः, अधिकन्तु भेदव्यपदेशात्, विवक्षितगुणोपपत्तेश्च सर्वोपेता च" त्यादीनि भेदप्रतिपादकानि । "आत्मा वा इदमेक एवाग्र आसीत्, एकोहवै नारायण आसीत्, तत्वमसि, अयमात्मा ब्रह्म आत्मैवेदं सर्वं, सर्वंखल्विदं ब्रह्म, अहं ब्रह्मास्मीति । तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यादीन्यभेदपराणि । "सर्वं तं परादाद्योऽन्य आत्मनः सर्वं वेद" इत्यादीनि भेदनिषेधपराणि । "अथात आदेशो नेति नेति, अस्थूलमनण्वित्यादीनि निषेधसामान्यपराणि श्रुति सूत्राणि; न तेषामितरेतरबाध्यबाधकभावो वक्तुं शक्यस्तुल्यबलत्वात्

तथा च सर्वेषामपि वाक्यानां स्वार्थप्रामाण्यसिद्धये चिदचिद्भिन्नाभिन्नं ब्रह्म वेदान्तशास्त्रविषयत्वेनाभिप्रेतं भगवतः सूत्रकारस्य एतदभिप्रायतया तद्घटकसूत्राणि प्रणीतानि--"अंशो नानाव्यपदेशात् अन्यथा चापि दासकितवादित्वमधीयत एके, उभयव्यपदेशात्त्वहिकुण्डलवदित्या" दीनि । अतश्चैवमेतेषां समन्वयः । तत्र तत्त्वमस्यादिभिश्चिदात्मना ब्रह्मतादात्म्योपदेशात्तेषां ब्रह्मात्मकत्वेन तदायत्तस्थितिप्रवृत्तिकत्वेन तद्व्याप्यत्वेन तदाधेयत्वेन च स्वार्थपरत्वं समञ्जसम् । ब्रह्मात्मा यस्य चेतनाचेतनवस्तुजातस्य तद्ब्रह्मात्मकं, तस्य भावस्तत्तेन "ऐतदात्म्यमिदं सर्वम्, एष मे आत्मा, एष ते आत्मा, एष सर्वभूतान्तरात्मा" । "आत्मेति तूपगच्छन्ति ग्राहयन्ति च । " "अहमा

णस्तदात्मीयनियम्यपरतन्त्रसत्वाश्रयं चिदचिद्रूपं विश्वमिति फलितम्।

परतन्त्रसत्वं नाम परायत्तस्थितिप्रवृत्तिकत्वं तच्च नियम्यवर्गाश्रितं तदसाधारणधर्मत्वात्। "यदासीत्तदधीनमासीत्, तमेव भान्तमनुभाति सर्वं, स कारयेत्पुण्यमथापि पापम्," ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वे"ति श्रवणात्। "जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचरम्। अहं सर्वस्य प्रभव" इत्यादिश्रवणाच्च। परतन्त्रसत्वं द्विविधम् कूटस्थविकारिभेदात्। तत्र कौटस्थ्यञ्च जन्मादिविकारशून्यत्वे सति शाश्वतत्वं तदधिकरणं क्षेत्रज्ञं पुरुषादिपदार्थभूतं चेतनवस्तु। "न जायते म्रियते वा विपश्चित्।" "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीर" इत्यादिश्रुतिस्मृतिभ्यः!

विकारित्वे सति प्रवाहरूपेण नित्यत्वंद्वितीयं, तदधिकरणञ्चाचेतनं मायाप्रधानप्रकृतिक्षेत्रज्ञादिपदार्थरूपम्। "अजामेकां, गौरनाद्यन्तवती," "त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्। तदेतदक्षयं नित्यं जगन्मुनिवराखिलमि"त्यादि श्रुतिस्मृतिभ्यः। एवं परतन्त्रसत्वमादाय भेदशास्त्रस्य प्रवृत्तिः। तस्यैव तेषां नैराकाङ्क्ष्यञ्च तथैव भेदनिषेधपराणां चेतनाचेतननिष्ठस्वतन्त्रसत्वमादाय प्रवृत्तिः। नेति नेतीत्यादि सामान्य निषेधवाक्यानां ब्रह्मणः वैलक्षण्यज्ञापनेन प्रवृत्तिश्चेति निरवद्यम्। तथा च "तत्त्वमसी"त्यत्र तच्छब्दः सर्वज्ञसर्वशक्तिविश्वात्मपरब्रह्मभूत स्वतन्त्रसत्ताश्रयप्रतिपादनपरः। त्वम्पदार्थश्च तदात्मीयतदात्मकपरतन्त्र सत्ताश्रयजीवात्मवाचकः। असिशब्दश्चोभयपदार्थसम्बन्धाभिधानपरः। स च सम्बन्धस्तदात्मकस्य त्वम्पदवाच्यस्य तत्पदार्थेन सह स्वतन्त्रसत्वाभेदसहिष्णुपरतन्त्रसत्वभेदरूपः। तत्पदार्थवृत्तिस्वतन्त्रसत्ताश्रयाभिन्न ब्रह्मात्मकपरतन्त्रसत्वाश्रयाभिन्नस्त्वम्पदार्थ इति वाक्यार्थः। तत्पदार्थो विश्वात्मा, त्वम्पदार्थः क्षेत्रज्ञान्तरात्मा तयोरभेदो घटो द्रव्यं पृथिवी द्रव्य मित्यादिवन्मुख्य एवातोयुक्तमुक्तसिद्धान्तस्य साधीयस्त्वम्।

ननु परब्रह्मणः श्रीपुरुषोत्तमस्य नारायणादिपदार्थस्य सर्वात्मनस्तत्पदार्थत्वे न कश्चिद्दोषाऽवकाशः श्रौतत्वात्। परन्तु जीवान्तर्यामिणस्त्वं पदार्थत्वं कथमिति वक्तव्यं, त्वम्पदस्य जीववाचकत्वेन प्रसिद्धत्वादिति चेन्न, विश्वात्मत्वेन सर्वशब्दवाच्यत्वादेवेति ब्रूमः। यथा"ऽग्नेर्ढगि"त्यत्राग्निशब्दोऽकारगकाराद्यवच्छिन्नानुपूर्वीकाग्निशब्दपरः। "अग्नौ

जुहोती" त्यत्र च स एवाग्निशब्दो दहनप्रकाशनादिधर्मावच्छिन्नपर
र्थोपस्थापनपरः । एवमुभयार्थप्रतिपादकत्वमग्निशब्दस्य शक्यत्वात्तं
मुख्यमेवेति शाब्दिकानां राद्धान्तः । तथैवात्रापि सर्वेषां चेतनाचेतन
स्तुजातवाचकानां तत्तत्पदार्थवाचकत्वेऽपि तत्पदार्थान्तरात्मभूतब्रह्म
त्वमविरुद्धम् सर्वात्मत्वात् । यथा चतुर्मुखादिशरीराणि तत्तदवच्छि
तत्तच्चेतयितारश्च चतुर्मुखादिशब्दवाच्यास्तेषां शक्या एव तैरभिधी
स्वशक्तिभिरेव तथैव तेषां चतुर्मुखादिपिण्डतत्तदवच्छिन्नक्षेत्रज्ञाभि
नपरत्वेऽपि तस्य तत्तदन्तरात्मत्वात् ब्रह्माभिधानपरत्वं प्रधानमं
सुशकं वक्तुमिति । एतदभिप्रायमाश्रित्य वस्तुजातस्य ब्रह्मतादात्म्यमुद्
षयन्ति श्रुतयः । " ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म, भोक्ता भ
प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्, नारायणः परोध्य
ध्यानं नारायणः परमि"त्याद्याः । ननु पूर्वदृष्टान्तोऽग्निशब्दस्योभया
धानपरत्वं पाणिन्यादिस्मृतिविधेयत्वादुक्तार्थे प्रमाणत्वं सुशकं न तथे
र्थः प्रमाणपदवीमारोहति प्रमाणशून्यत्वात् । न चोक्तोपमानमेवात्र प्र
मिति वाच्यम् । अश्रौतस्योपमानस्यातिदुर्बलत्वादिति चेन्न । "नामानि
णि यमाविशन्ति, सर्वे वेदा यत्पदमामनन्ति, नमामः सर्ववचसां प्रतिष्ठा
शाश्वती" त्यादि शास्त्रस्यैवात्र प्रमाणत्वात् । तत्सिद्धं भगवतः सर्वात्म
विश्वस्य च तदात्मकत्वेन तत्तादात्म्योपदेशार्हत्वमिति, तथा चोक्तं
भगवद्भिराद्याचार्य्यचरणैः—"सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्
भ्यो निखिलस्य वस्तुनः । ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपत
श्रुतिसूत्रसाधिते"ति । एतस्य व्याख्यानं 'वेदान्तरत्नमञ्जूषायां' द्रष्टव्
अपि च ब्रह्मायत्तस्थितिप्रवृत्तिकत्वेनापि जगतो ब्रह्मतादात्म्योपदेशा
कः । यद्यदायत्तस्थितिप्रवृत्तिकं तत्तदभेदव्यपदेशार्हमिति व्याप्तिम
न्तिच्छन्दोगाः प्राणसम्वादे— " न वै वाचो न चक्षूंषि न श्रोत्रा
मनांसीत्याचक्षते प्राण एवैतानि सर्वाणि भवती"त्यादिना ब्रह्म व्या
त्वेनाऽपि वस्तुजातस्य ब्रह्मतादात्म्यं सुघटितमेव । " यच्च किञ्चिज्ज
स्मिन्दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थि
द्यावा-पृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वा" इति शा
चनात् । " योऽयं तवागतो देव समीपे देवतागणः । स त्वमेव ज
द्स्रष्टा यतः सर्वगतो भवान् ॥ सर्वं समाप्नोषि ततोऽसि सर्वः " इति
स्मृत्या व्याप्यस्य-व्यापकाभिन्नत्वनिर्देशार्हत्वं प्रतिपादितम् ।

ननु स्वाभाविक-भेदाभेदमतेऽपि यथा ब्रह्मणोगुणाः स्वाभाविकाः श्रूयन्ते—" स्वाभाविकी ज्ञानबलक्रिया च"त्यादिना, तथा जीववृत्ति-दोषा ब्रह्मण्येव स्वाभाविकाः स्युस्तयोरेकत्वात्। इति निर्दोषब्रह्मतादा-त्म्योपदेशोदुर्घट एवेति चेन्न। यतो जीवेशयोः स्वरूपत ऐक्यं नाभ्युपग-च्छामो येनोक्तदोषः प्रसज्जेत। अपि तु इतरेतरात्यन्तवैलक्षण्येन ब्रह्मण-श्चेतनाचेतनयोश्च स्वरूपेण भेदं प्रतिपादयामः। तत्र चेतनः स्वरूपेण परिच्छिन्नः, अणुपरिमाणकत्वात्। अचेतनोऽपि तथैव, स्थूलाद्यनेकरूप-वत्वात्। ब्रह्मतूभयविलक्षणं त्रिविधपरिच्छेदशून्यत्वादिति विवेकः। तथा च ब्रह्मणश्चेतनाचेतनयोः सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्र-सत्वसर्वाधारत्वादिधर्मैर्भेदः स्वाभाविकः। ब्रह्मात्मकत्वतन्नियम्यत्वतद्-व्याप्यत्वतत्तन्त्रसत्वपराधेयत्वादिधर्मैरभेदः स्वाभाविकोऽभ्युपगम्यते। " एष सर्वभूतान्तरात्मा, अन्तः प्रविष्टः शास्ता जनानाम्, यच्च किञ्चि-ज्जगत्यस्मिन्दृश्यते, आत्मा हि परमः स्वतन्त्रोऽधिगुणः, तस्मिँल्लोकाः श्रिताः सर्वे " एतानि वाक्यानि उक्तार्थे प्रमाणत्वेनानुसन्धेयानि। अनु-मानेनाप्युक्तार्थसिद्धिर्भवितुमर्हति। तथाहि-जगद्ब्रह्माभिन्नं तदात्मक-त्वात्। यो यदात्मकस्सतदभिन्नो दृष्टो यथा मृदात्मको घटो मृदभिन्ननिर्दे-शार्हस्तद्वत्। तन्नियम्यत्वादप्यभिन्नः, यो यन्नियम्यः स तदभिन्ननिर्देशार्हः। यथा जीवनियम्यशरीरं जीवाभिन्नं प्रतीयते तद्वत् तद्व्याप्यत्वादप्य-भिन्नः। यो यद्व्याप्यः स तदभिन्ननिर्देशार्हः। यथा वह्निव्याप्योधूमस्तद-भिन्नस्तद्वत्। तदधीनत्वादपि तथा, यद्यदधीनं तत्तादभिन्ननिर्देशार्हं, यथा प्राणायत्तइन्द्रियगणस्तदभिन्ननिर्देशार्हस्तद्वत। तदाधेयत्वादपि तथा यो यदाधेयः स तदभिन्ननिर्देशार्हः, यथा भौतिकं स्वकारणरूपाधिकरणमहा-भूताभिन्ननिर्देशार्हं तद्वत्। अत्राभिन्नत्वञ्च पृथक्स्थितिप्रवृत्त्ययोग्यत्वं वि-वक्षितं, तथा च नोक्तार्थे व्यभिचारशङ्काकलङ्कावकाशः। घटो द्रव्यमि-त्यत्र घटस्य द्रव्यतादात्म्यं शक्यत्वान्मुख्यमेव, घटत्वावच्छिन्नस्य द्रव्य-त्वावच्छिन्नं विना पृथक्स्थितिप्रवृत्यनर्हत्वाद्द्रव्यात्मकत्वात्। एवं विश्वं ब्रह्मेत्यत्रापि चेतनाचेतनरूपविश्वस्य ब्रह्मतादात्म्योपदेशो मुख्य एव शक्यत्वसाम्यात्। ब्रह्म विना विश्वस्य पृथगवस्थानप्रवर्त्तनार्हत्वायोगाद् ब्रह्मात्मकत्वात। तस्मादचिन्त्यानन्तस्वाभाविककल्याणगुणशक्तिवैभवे चिदचिद्भिन्नाभिन्ने परब्रह्मणि भगवति श्रीपुरुषोत्तमे निखिलवेदान्तानां समन्वय इति सिद्धम्। उक्तसिद्धान्तस्य सूत्रकाराभिप्रेतत्वं तथा हि।

चेतनाचेतनयोर्ब्रह्मणो भेदाभेदश्च कथं सम्भाव्यः, दुरुपपन्नत्वादित्याशङ्क्य समाधत्ते सूत्राभ्याम् । तत्र तावच्चेतनस्य ब्रह्मणा भेदाभेदसूपपन्न इत्याह " उभयव्यपदेशात्त्वहिकुण्डलवदि "ति । अचेतनस्योभयव्यपदेशात् । " हन्ताहमिमास्तिस्रोदेवते" ति भेदव्यपदेशः । "सर्वं खल्विदम्ब्रह्म, तज्जलानिति, ब्रह्मैवेदं सर्वमित्यादिना चाभेदव्यपदेशस्तस्मादुभयव्यपदेशाद्धेतोर्भेदाभेद एव शास्त्रार्थः । उभयविधशास्त्राविरोधात् । अन्यथा चैकतरस्यावश्यं बाध इत्यर्थः । ननु भेदाभेदयोरितरेतरात्यन्तविरोधात्कथमेकत्र स्थितिरिति शङ्क्याह दृष्टान्तमुखेन-'अहिकुण्डलवदि' ति । यथा कुण्डलावस्थापन्नस्याहेः कुण्डलम् व्यक्तावस्थापन्नत्वात् प्रत्यक्षप्रमाणगोचरं तद्भेदस्य स्वाभाविकत्वात् । लम्बायमानावस्थायान्तु सर्पायत्तावच्छिन्नस्वरूपेण कुण्डलस्य तत्र सत्वेऽपि अव्यक्तनामरूपत्वापत्त्या प्रत्यक्षागोचरत्वं, सर्वात्मकत्वतदाधेयत्वतद्व्याप्यत्वादिना तदपृथक्सिद्धत्वादभेदस्यापिस्वाभाविकत्वमुभयोरपि स्थूलसूक्ष्मावस्थयोरनुगतत्वाद् भिन्नाभिन्नत्वम् । स्थूलावस्थापन्नस्य कार्यस्य कारणायत्तपरतन्त्रसत्तावच्छिन्नस्वरूपेण भेदसद्भावेन प्रत्यक्षप्रमाणविषयत्वं व्यक्तनामरूपत्वात् । अव्याकृतावस्थायान्तु बीजेऽङ्कुरस्येव कार्यस्य कारणे सूक्ष्मस्वरूपेण प्रत्यक्षागोचरत्वेऽपि सद्भाव एवाव्यक्तनामरूपत्वात् । अत उभयावस्थायामपि तदात्मकत्वतदाधेयत्वतदायत्तसत्ताकत्वादिना तदपृथक्सिद्धत्वेनाभिन्नत्वेऽपि परतन्त्रसत्तावच्छिन्नतदात्मीयस्वरूपेण भिन्नत्वमपि स्वाभाविकमिति ।

एवमचेतनस्य ब्रह्मभिन्नाभिन्नत्वप्रकारं निरूप्य चेतनस्यापि तत् प्रतिपादयति-" प्रकाशाश्रयवद्वा तेजस्त्वात्" । वा शब्दोऽतिदेशार्थः पूर्वोक्ताचेतनवच्चेतनस्यापि ब्रह्मणा भिन्नाभिन्नत्वं दर्शयति । कुतः " उभयव्यपदेशादि "त्यनुवर्त्तते । "ततस्तु तं पश्यति निष्कलंध्यायमान" इति ध्यातृध्येयत्वेन द्रष्टृदृश्यत्वेन " ब्रह्मविदाप्नोति परं परात्परं पुरुषमुपैति दिव्यमि " ति प्राप्तृप्राप्यत्वेन च "य आत्मानमन्तरो यमयती" ति नियन्तृनियम्यत्वेन च स्वाभाविकभेदस्य व्यपदेशात् । " तत्त्वमस्यहम्ब्रह्मास्मि अयमात्मा ब्रह्मे"त्यादिना च स्वाभाविकाभेदस्य व्यपदेशाद् भिन्नाभिन्नत्वमिति ।

अधिकशङ्का तु यदि पूर्वदृष्टान्तेन चेतनस्य भिन्नाभिन्नत्वं तर्हि

अचेतनवदवस्थाभाक्त्वमङ्गीकृतं स्यादिति तन्निरासयन्दृष्टान्तान्तरमाह। "प्रकाशाश्रयवदि" ति, यथा सूर्यादिप्रकाशः स्वाश्रयात्सूर्यादेर्भिन्नतया प्रत्यक्षेणोपलभ्यते स्वाभाविकभेदवत्वात्। तदाधेयत्वतदात्मकत्वादिभिश्च हेतुभिस्तदविनाभावात् अभिन्नत्वमपि प्रत्यक्षादिमानसिद्धमेवातोऽभेदस्यापि स्वाभाविकत्वमिति। तद्वत्प्रत्यगात्मनामपि परतन्त्रसत्वावच्छिन्नब्रह्मात्मीयस्वरूपत्वेन स्वभावादेव भिन्नत्वेऽपि तदात्मकत्वतदाधेयत्वतद्व्याप्यत्वादिभिर्हेतुभिस्तदविनाभावादभिन्नत्वमपि स्वाभाविकमेवेति न केनापि वाक्येन विरोधलेशस्य सम्भावनेति भावः। तत्र हेतुमाह-तेजस्त्वादिति, उभयोरपि तेजोरूपत्वात् गुणतोऽप्यभेदस्सम्भवतीत्यर्थः। ननु सवितृप्रकाशपक्षेऽप्याधाराधेयभावः प्रत्यहमुदयास्तमयौ भवत इति चेदित्याहुरेके तत्तुच्छम्। आधाराधेयभावस्य शास्त्रप्रमाणसिद्धत्वेनेष्टापन्नत्वात्। "यस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन, यस्मिन्द्यौश्च पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैरि" त्यादिश्रुतेः। "द्यु-भ्वाद्यायतनं स्वशब्दादि" ति सूत्रात्। "मयि सर्वमिदं प्रोतं सूत्रेमणिगणा इवे" ति स्मृतेश्च। नाप्युदयास्तमयौ दोषौ वक्तुं शक्यौ तदंशे दृष्टान्ताभावात्। नहि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाजात्यसम्भवः सर्वसारूप्यस्य केनापि दर्शयितुमशक्यत्वात्।

किञ्च सर्वथैव सारूप्ये दृष्टान्तदार्ष्टान्तिकभावस्यैवोच्छेदप्रसङ्गाद् ब्रह्मणोऽप्यनित्यसादृश्यदर्शनादनित्यत्वापत्तेश्च। तस्माद्ब्रह्मणश्चेतनाचेतनयोश्च भिन्नाभिन्नत्वलक्षण एव सम्बन्धो वेदान्तशास्त्रप्रतिपाद्य इति सिद्धम्। तथा श्रुतयः "एकः सन्बहुधा विचचार, देवो बहुधा सन्निविष्टः त्वमेकोऽसि बहुधा बहून्प्रविष्ट" इत्यादयः। एताभिश्च भेदाभेद शब्दस्य व्युत्पत्तिरपि दर्शिता,तथा भेदे सत्येवाभेदो भेदाभेद इति। तथा चाह भगवान्मनुः-"एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणोरूपं कस्तद्वेदितुमर्हती" ति। श्रीमुखेनाप्याह–"एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखमि" ति। हरिवंशे घण्टाकर्णोऽपि–"केचिद्बहुत्वेन वदन्ति देवमेकात्मना किञ्चिदमुं पुरातनम्। वेदान्तसंस्थापितसत्वयुक्तं द्रष्टुं तमीशं वयमुद्यताःस्म॥ अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्टचित्ताः। आहुर्यमात्मानमजं पुराणं द्रष्टुं तमीशं वयमुद्यताःस्मेत्यादि-स्मृतयश्च। उभयथा भानमपि श्रुतिमुखेनैव सूपपन्नम। एषते आत्मा एष सर्वभूतान्तरात्मा, सर्वव्यापी सर्वभूतान्तरात्मे" त्यादिश्रुतिभिरात्मी-

य सम्बन्धश्रवणात् । एष एव तादात्म्यसम्बन्ध उच्यते । "ऐतदात्म्यमिदं सर्वं, तत्त्वमसी" त्यादिश्रुतेः । तदेव जगदुपादानं निमित्तञ्चेति पूर्वमेवलक्षणसूत्रेण प्रतिपादितम् ।

ननु ब्रह्मणोविश्व प्रति उभयविधकारणत्वं दुर्घटं "स ईक्षाञ्चक्रेतदैक्षते" त्यादिश्रुत्युक्तेक्षापूर्वककर्तृत्वस्य लोके निमित्तकारण कुलालसुवर्णकारादिष्विव निमित्तमात्र एव सम्भवात् । कार्याकारेण परिणामित्वं ह्युपादानत्वं न तु परिणाम्याधारत्वं, तथा सति घटाकारेण परिणममानाया मृदस्तदाधारस्य भूतलस्याप्युपादानत्वं प्रसज्जेत । "निष्कलं निष्क्रियं शान्तमि" त्याद्याः श्रुतयः सन्ति ताभिः ब्रह्मणोऽपरिणामित्वं बोध्यते । तथा च प्रपञ्चं प्रति ईश्वरस्य निमित्तकारणत्वं प्रधानस्योपादानकारणत्वमभ्युपेयम् । "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरमि" त्यादिश्रुतिस्मृतिदर्शनात् । उक्तश्रुतौ महेश्वरशब्देन मायिशब्दनिर्दिष्टस्य निमित्तकारणस्य मायां प्रति प्रेरकत्वं विवक्षितम् । लोके घटनिर्मातुः कुलालस्य निमित्तकारणस्य घटोपादानकारणभूतात् मृत्पिण्डादत्यन्तभेदस्य दर्शनाच्चेति चेन्मैवम् । यतो न लोकवदिह भाव्यम् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" ति श्रुतौ सृष्टेः प्रागेकत्वमवधारितम् । तदवधारणं निमित्तोपादानयोर्भेदे सति नोपपद्येत, अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणं ज्ञाप्यते, तदपि दुर्घटं स्यात् । अतो ब्रह्मणो विश्वं प्रति अभिन्ननिमित्तोपादानकारणत्वं वाच्यम् । अतएव "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवति" इत्युपादानकारणविज्ञानेन सर्वकार्यविज्ञानविषया प्रतिज्ञा । "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि" त्यादिरूपोदृष्टान्तश्चोपपद्यते नान्यथा यदि प्रपञ्चं प्रति ब्रह्मणोनिमित्तकारणत्वमत्रोररीक्रियते तदा निमित्तकारणकुलालादिविज्ञानेन मृन्मयज्ञानवत्तज्ज्ञानेन सर्वकार्यविज्ञानं प्रसज्जेत, तयोर्बाध एव स्यत् । न च कुलालमृत्पिण्डन्यायेन निमित्तोपादानभेदः शङ्कनीयः । तत्र हि निमित्तोपादानाभेदग्राहकप्रमाणाभावात् तद्भेदः, इह प्रमाणे जाग्रति कथमभेदो न स्यात् । "सदेव सोम्येदम्, उत तमादेशमप्राक्ष्यः" इति श्रुतिभ्यामेकत्वावधारणेनेतराधिष्ठातुर्निवारणेन च निमित्तोपादानयोरभेद इति प्रतिभाति । तथा हि आङ्पूर्वकदिशधातोर्बाहुलकात् कर्त्तरि घञि कृते आदेश इति निष्प

द्यते, प्रशासितृत्वाधिकरणमिहादेशशब्दार्थः । न च "अकर्त्तरि च कारके संज्ञायामि" ति घञः कर्तृव्यतिरिक्तविषयत्वात् कथमादिशतीत्यादेश इति वाच्यम् । घञन्ताद्भाववाचिन आदेशशब्दादर्शाद्यजन्तादपि प्रशासितृत्वाधिकरणस्यादेशशब्दार्थत्वात् । तथा च "अन्तः प्रविष्टः शास्ता जनानां, एतस्य वाऽक्षरस्य प्रशासने गार्गि प्रशासितारं सर्वेषाम्" इत्यादिश्रुतिस्मृतिभ्यामादेशशब्देन प्रशासनरूपव्यापाराश्रयः कर्ता विवक्षितः ।"तमादेशमादेष्टारमधिष्ठातारमप्राक्ष्मः येनादेष्ट्राधिष्ठात्राश्रुतेनाश्रुतंश्रुतं भवती"त्यर्थः। अपि च ब्रह्मणो जगदुपादानत्वे"यतो वा इमानि भूतानि जायन्ते""जन्माद्यस्य यतः""यतः सर्वाणि भूतानि"इत्यादि श्रुतिसूत्रस्मृतिषु "जनिकर्त्तुः प्रकृतिरि" ति सूत्रेण प्रकृत्यर्थविहितपञ्चम्याः प्रामाण्यात् । सूत्रे 'प्रकृति' पदमुपादानकारणपरम् । जननं जनिरुत्पत्तिः। "इणजादिभ्य इति जनेर्भावे इण प्रत्ययः । "जनि बध्योरि" ति न वृद्धिः।तस्याः कर्त्तेति शेषषष्ठ्या समासो,न तु कारकषष्ठ्या"तृजकाभ्यामि" तिनिषेधात् । एवञ्चोत्पत्त्याश्रयस्य यो हेतुरुपादानकारणं तदपादानसंज्ञं स्यादितिसूत्रार्थः । तत्र विवदन्ते बहवः । तथाहि स्यादेवं यद्युक्तसूत्रेणोपादानत्वविरहिणः पञ्चमी नोपलभ्येत । न त्वेवं पुत्रात्प्रमोदो जायते इत्यादावुपादानत्वाभाववतः पुत्रशब्दात्पञ्चमीदर्शनादिति प्रकृतिपदस्य कारणमात्रपरत्वं वाच्यं नोपादानपरत्वमित्याक्षिपन्ति वृत्तिकाराः ।

इत्थं हि काशिकाग्रन्थः— "जनिकर्त्तुः प्रकृतिः" जनेः कर्त्ता जनिकर्त्ता जन्यर्थस्यजन्मनः कर्त्ता जायमानस्तस्य या प्रकृतिः कारणंहेतुः तत्कारकमपादानसंज्ञं भवति । शृङ्गाच्छरो जायते, गोमयाद्वृश्चिको जायत इति प्रकृतिपदेन हेतुमात्रं वृत्तिकाराभिप्रेतमिनि । "ज्ञाजनोर्जा" इति जादेशः । अथ प्रकृतिग्रहणं किमर्थम् । यावता ध्रुवमित्यनुवर्त्तते, ध्रुवश्चावधिभूतमित्युक्तम् । जनिकर्त्तुश्चावधिः कारणमेव भवति, तत्रान्तरेणापि प्रकृतिग्रहणं प्रकृतिरेव गृह्यते ।नैतदस्ति"पुत्रात् प्रमोदो जायते" इत्यादौ पुत्रादेरपि अपादानसंज्ञा यथा स्यादित्येवमर्थं प्रकृतिग्रहणम् । द्विविधं हि कारणमुपादानकारणं सहकारिकारणञ्च, तत्र यत्कार्येणाभिन्नदेशं तदुपादानकारणं । यथा घटस्य मृत्पिण्डः, सहकारिकारणं यत्कार्येण भिन्नदेशो यथा तस्यैव दण्डचक्रादि तत्रासति प्रकृतिग्रहणे प्रत्यासत्तेरुपादानकारणस्यैव स्यान्नेतरस्य । प्रकृतिग्रहणे तु सर्वस्यैव कारणमात्रस्य भवति । महाभाष्यकारास्तु । 'अयमपि प्रयोगः शक्यो

वक्तुं कथं गोमयाद्वृश्चिको जायते गोलोमविलोमभ्यो दूर्वा जायन्ते इति अपक्रामन्ति तास्तेभ्यः । यद्यपक्रामन्ति किं नात्यन्तापक्रामन्ति सन्तत त्वात् । अथवान्यश्चान्याश्च प्रादुर्भवन्ति । इति वदन्ति तदीयकैयटस्य इत्थम् । अपक्रामन्ति ता इति । लोकप्रसिद्ध्याश्रयेणैतदुच्यते लोके यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यते । तर्काश्रयास्तु प्रक्रिया भिद्यन्ते वैशेषिकदर्शने परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशे कार्यमुत्पद्यते इति नास्ति कार्यस्यापक्रमः । साङ्ख्यदर्शनेऽपि आविर्भावतिरोभावलक्ष णजन्मनाशरूपपरिणामाभ्युपगमान्नास्त्यपक्रमः । यदिति, यद्यतोऽपक्रा मति तत्पुनस्तत्र न दृश्यते इति प्रसिद्धम् । इह तु तत्रास्ति दर्शनमिति प्रश्नः सन्ततत्वादिति । अविच्छेदादित्यर्थः । यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यर्थः । अथवेति क्षणिकपक्षं द्रव्यान्तरारम्भपक्षं वा परिणामपक्षं वाश्रित्यैतदुक्तमित्याह ।

ननु सतो जन्मायोगादसतश्च कर्त्तृत्वासम्भवात् पक्षान्तराभ वाच्च कथमङ्कुरो जायत इति प्रयोगः । नैष दोषः बुद्धिव्यवस्थापितस्या र्थस्य क्रियायां कारकरूपोपगमात् इति । अत्रेदमवधेयम् । न्यासमतमा श्रित्य प्रकृतिपदस्य हेतुमात्रपरत्वोपवर्णनम् । भाष्यकैयटयोस्तूपादानप रत्वमभिमतम् । 'पुत्रात्प्रमोदो जायते' इत्यस्य प्रामाणिकत्वे द्वेधा निर्वाहः । "बाहुलकं प्रकृतेस्तदनुदृष्टेरि" ति वार्त्तिकप्रयोगात् । उणादौ पठितानां प्रकृतीनामल्पत्वदर्शनात् बाहुलक माश्रितमिति तदर्थः । "विभाषागुणेऽस्त्रियामि" त्यत्र 'गुणेऽस्त्रियामित्यस्य प्रायिकत्वे पुत्रतः पञ्चमीत्येकः । स्वरूपसतः पुत्रस्य प्रमोदहेतुत्वे मूर्खपतितादिपुत्र तोऽपि प्रमोदोत्पत्त्यापत्तिस्तस्मादत्र पुत्रपदं पुत्रनिष्ठसौशील्यादिसद्गुण ज्ञानपरमेवेति पितृनिष्ठं पुत्रवृत्तिसौशील्यादिसद्गुणविषयकज्ञानमेव प्रमोदरूपत्वेन परिणमत इत्यङ्गीकारेणात्राप्यपादानकारणत्वेनैवापादा नसंज्ञेति द्वितीयः । ज्ञाने प्रमोदस्य समवायिकारणत्वाभावेऽप्यसमवायि कारणसत्वेनोपादानकारणत्वात्ततः क्वचित्समवायिकारणनाशेनेव क्वचि दसमवायिकारणनाशेनापि कार्यनाशान्न कोऽपि दोषः । किञ्च "हेतौ जनिकर्त्तुः पञ्चमी, अकर्तर्यृणे, विभाषागुणेऽस्त्रियाम्," इत्येव पाठे सकलेष्टसिद्धौ 'जनिकर्त्तुः प्रकृतिः' प्रकृतिपदोपादानेनापादानकरणे सामर्थ्याज्जायमानस्य प्रकृतिवाचकस्य प्रकृतिरपादानमित्येवार्थः कल्पनीय इति । ब्रह्मणः प्रजाः प्रजायन्ते, पितुः पुत्रो जायते, इत्यादौ तु

"तदैक्षत एकोऽहं बहु स्यां प्रजायेय" इति "आत्मा वै जायते पुत्र" इति श्रुतिस्मृतिभ्यां स्फुटः प्रकृतिविकृतिभावपर्य्यायपरिणामः।

वस्तुतस्तु 'जनिकर्त्तुः प्रकृतिरित्यत्र' प्रकृति पदस्य कारणमात्रार्थकत्वेऽपि उपादानपरत्वमप्यभ्युपगम्यते छागपशुन्यायेन। यथा "पशुना यजेत" इत्यत्र पशुशब्दस्य पशुमात्रवाचकत्वेऽपि 'छागवपाया' इति वाक्यशेषात्पशुविशेषपरत्वं तद्वत् प्रकृतेऽप्यनुसन्धेयम्। न चोक्तन्यायविषयोऽत्र निश्चयोपयिकवाक्यशेषाभावात् इति शङ्क्यम्। "आत्मन आकाशः सम्भूतः" इत्यादावुपादाने पञ्चम्याः "सच्च त्यच्चाभवदि" तिवाक्यशेषेण "सोऽकामयत बहु स्यामि" त्येतच्छाखान्तरस्थवाक्येन प्रतीतसमानाधिकरण्यस्य नियामकत्वात्। 'सत्' निर्विकारतया सततैकरूपश्चेतनः 'त्यत्' पूर्वावस्थापरित्यागिविकारास्पदमचेतनम्, ब्रह्मैव चेतनाचेतननामरूपभाग्भवतीति श्रुत्यर्थः। स आनन्दमय आत्मा देवमनुष्यादिरूपेण बहु स्यां तदर्थमाकाशादिभूतरूपेण प्रजायेयेति व्यष्टिसमष्टिरूपचेतनाचेतनविषयसङ्कल्पं कृतवानिति द्वितीयश्रुत्यर्थः। यदि ब्रह्मणोनिमित्तकारणत्वमात्रमभ्युपेयते तदा,सर्वत्र व्याप्तेरसम्भवात् तस्य परिच्छिन्नत्वमापद्येत। कारणत्वं नाम कार्योत्पतिप्राक्कालीनसम्बन्धाश्रयत्वं तद्द्विविधं निमित्तोपादानभेदात्। तत्र निमित्तत्वं नाम कार्योत्पत्त्यनुकूलज्ञानचिकीर्षाकृतिमत्वे सति तद्व्यापाराश्रयत्वं, व्यापाराश्रयत्वञ्च स्वस्यानादिकर्मसंस्कारवशीभूतात्यन्तसङ्कुचितभोगस्मरणानर्हज्ञानधर्माणां चेतनानां कर्मफलभोगादिज्ञानप्रकाशनेन तत्तत्कर्मफलतत्तद्भोगसाधनैः सह योजयितृत्वं। उपादानत्वं नाम परापरक्षेत्रक्षेत्रज्ञादिपदार्थभूत स्वस्वाभाविकीनां सूक्ष्मावस्थापन्नानां शक्तीनां तत्तद्गतसद्रूपकार्याणां स्थूलतया प्रकाशकत्वं। एतदुभयाभिन्नत्वं तत्वम्। अनयोरुपादाननिमित्तयोरेकस्मिन्नाश्रितत्वं तदभिन्नत्वमिति तदर्थः। तथा चोक्तकारणलक्षणस्य ब्रह्मस्वरूपगतत्वेन स्वरूपप्रतिपादनपरत्वमेव नहि परमताभिप्रेततटस्थत्वोपलक्षणादिकल्पनावकाशः। न च लक्षणस्य लक्ष्यभिन्नवस्तुमात्रव्यावर्तकत्वमेव कार्यमिति प्रसिद्धम्। तस्य चोक्तलक्षणेनैव सिद्धत्वाल्लक्षणान्तराकांक्षोपशमत्वेन सत्यादिवाक्योक्तोत्तरलक्षणस्य वैयर्थ्यं विशेषाभावादिति वाच्यम्।

जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वस्य ब्रह्मलक्षणस्य लक्ष्यस्वरूपनिरूपणपरत्वेऽपि कार्यनिरूपितत्वेन तत्सापेक्षत्वात् सत्यादिवा-

क्यस्य तु तदभाववत्वेन निरपेक्षत्वात् तथाभूतविशेषस्य विद्यमान सार्थक्यमेव । तत्र च सत्यत्वमात्रकथनेऽचिद्वर्गेऽतिप्रसङ्गात् । तद्वार फलको ज्ञानपदसन्निवेशः। तत्वे च चेतनेऽतिव्याप्तेरतोऽनन्तपदगुम्फन सत्यत्वज्ञानत्वानन्तत्वैश्चोभयवैलक्षण्यज्ञापकं ब्रह्मलक्षणमिति । न सत्यादीनामेव गुणत्वान्न सत्यत्वादिपर्यन्तधावनम् युक्तं गौरवादि वाच्यम् । सत्यादिस्वरूपवाचकत्वाभावेन गुणपरत्वाभिधानेऽसत्य परिच्छिन्नमेव लक्ष्यं ब्रह्मस्वरूपं भवन्मतेऽभ्युपगतं स्यात्, तस्मादुक्त सिद्धान्तोवलीयान् । जगज्जन्माद्यभिन्ननिमित्तोपादानत्वे सति सत्यत्वा मत्वं जिज्ञास्यब्रह्मणो लक्षणमिति पर्य्यवसन्नम् ।

ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वं प्रकृत्यधिकरणस्थसूत्रै बादरायणेन भगवता साधितम् । तानि—"प्रकृतिश्च प्रतिज्ञा दृष्टान्त परोधात् ।१।४।२३। अभिध्योपदेशात् ।२४। साक्षाच्चोभयाम्नानात् । आत्मकृतेः परिणामात् ।२६। योनिश्च गीयते ।२७।" संक्षेपत एषां सू णामयमर्थः—प्रकृतिरुपादानं निमित्तञ्च ब्रह्मैव, न निमित्तमात्रं कुत प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञा च "येनाश्रुतं श्रुतं भवतीत्यादि यथैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्यादि दृष्टान्तश्च, त ब्रह्मण उपादानत्वानङ्गीकार एवानुपरोधोऽन्यथा बाध इत्यर्थः। न के प्रतिज्ञादृष्टान्ताभ्यां तावद्ब्रह्मण उपादानत्वमवसीयते, किन्तु "बहु प्रजायेये"त्याभिध्योपदेशादपि ब्रह्मण उभयविधकारणत्वम् । स्वस्यैव भवनादुपादानत्वं बहुभवनस्य सङ्कल्पसामानाधिकरण्यान्निमित्तत्वमि "ब्रह्मवनं ब्रह्म स वृक्ष आसीत्, यतोद्यावा पृथिवी निष्टतक्षुः, मनीषि मनसा ब्रवीमिवः ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति" साक्षाच्च तस्य मित्तोपादानोभयरूपत्वमाम्नायते । अत्र हि तक्षणनिर्वर्त्यद्यावापृथि पादानत्वमुक्तम् । ब्रह्माध्यतिष्ठदिति निमित्तत्वम् । तदात्मानं स्वयम तेति सृष्टौ तस्यैव कर्तृकर्मभावश्रवणादपि तस्योभयविधकार निश्चीयते । तदात्मानमिति द्वितीयया कृतिविषयत्वं स्वयमिति कृति प्रतीयते । कुत ? आत्मकृतेः, आत्मविषयिणी कृतिः कारणं तस्मा तत्राव्यक्तरूपेण कर्त्तृत्वं व्यक्तनामरूपत्वेन च कर्मत्वं कार्यकार स्तादात्म्यात् ।

नन्वात्मनः कर्त्तृत्वेन पूर्वसिद्धस्य कथं पुनः कृतिकर्म आह परिणामादिति । परिणामोऽत्र शक्तिविक्षेपरूपो न तु स्वरू

णामस्तस्मान्न विकार सम्भावना। इतश्च ब्रह्म जगत उपादानं निमित्तञ्च यस्माज्जगद्योनित्वेनाम्नायते "कर्त्तारमीशं पुरुषं ब्रह्मयोनिं परिपश्यन्ति धीराः, एष योनिः सर्वस्ये" त्यादिश्रुतिभिः योनिशब्दस्य चोपादाने शक्तिः सुप्रसिद्धा। तस्मात् ब्रह्मणो विश्वं प्रति अभिन्ननिमित्तोपादान-कारणत्वं सिद्धम्। मुमुक्षुभिर्जिज्ञास्येऽनन्तकल्याणगुणादिनिलये स्वभा-वतोऽपास्तसमस्तदोषे जगतोऽभिन्ननिमित्तोपादानकारणे चिदचिद्भिन्ना-भिन्ने मुक्तोपसृप्ये परब्रह्मणि श्रीपुरुषोत्तमे रमानिवासे सर्वेषां वेदा-न्तानां समन्वय इति राद्धान्तः। इत्यात्मपरमात्मतत्वादर्शे प्रथमः परिच्छेदः।

## भगवद्बादरायणसूत्राणां तत्वतोऽयं विमर्शः।

तत्र तावत् 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति वाक्यान्तरप्राप्तं ब्रह्मसाक्षात्कारलक्षणं मोक्षासाधारणोपायं दर्शन मुद्दिश्य तदन्तरङ्गोपायभूतं निदिध्यासनं विधीयते। ब्रह्मसाक्षात्कारस्य "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे। निरञ्जनः परमं साम्यमुपैति, तन्महिमानं पश्यति वीतशोकः" "ततोमां तत्वतोज्ञात्वा विशते तदनन्तरमि" त्यादिवा-क्यैर्मोक्षान्तरङ्गोपायतया सिद्धत्वेन विधेयत्वाभावात्। असिद्धस्यैव विधेयत्वाङ्गीकारात्। तदेव ज्ञानध्यानपराभक्तिध्रुवास्मृत्यपरपर्य्यायभूतं ज्ञानशब्देन सूत्रयामास भगवान्बादरायणः "अथातोब्रह्मजिज्ञासे" ति। श्रवणमननयोर्निदिध्यासनोपायत्वेन विनियोगः, तयोरपि परम्परया मोक्षसाधनोपायत्वात्। तत्र वेदान्तवाक्यानां भगवत्स्वरूपगुणादिप्रति-पादनपरत्वं निश्चित्य तत्प्रतिपाद्यं ध्येयस्वरूपादिकं साक्षातपश्यत आचा-र्य्यस्य मुखात्तदनुभूतवाक्यार्थस्य ग्रहणं 'श्रवणम्'। श्रुतस्योपदिष्टार्थस्य स्वानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्विचारविशेषो 'मननम्'। मननविषयस्यार्थस्य साक्षात्कारासाधारणसाधनमनवरतध्यानं 'निदि-ध्यासनम्'। तथा चोक्तलक्षणश्रवणादिसाध्यनिदिध्यासनस्यात्यन्ताप्राप्त-त्वादपूर्वविधिरेवायम्। मुमुक्षानन्तरं कर्मफलानामनित्यत्वसातिशयत्वा-दिदर्शनाद्धेतोर्नित्यनिरतिशय मोक्षफलकब्रह्मजिज्ञासा मुमुक्षुणा कर्त्तव्ये-ति सूत्रार्थः। परमते न तावच्छुद्धस्य ब्रह्मणोजिज्ञासाविषयत्वमुपपद्यते तस्याविषयत्वाभ्युपगमात्। नाप्युपहितस्य ब्रह्मणोजिज्ञास्यत्वं जिज्ञासया

श्रवणमननाद्यभ्यासजन्योपहितसाक्षात्कारेण तद्विषयकाज्ञाननाशेऽपि शु
निर्विशेषविषयकाज्ञानस्य तादवस्थ्येनानिर्मोक्षप्रसङ्गात् अप्रयोजकत्वाच

किञ्चोपहितब्रह्मज्ञानं मोक्षस्य हेतुर्न वा । नाद्यः, तस्यैव मुक्तो
सृप्यत्वप्रसक्त्या शुद्धब्रह्माभ्युपगमस्याप्रयोजकत्वेन वैयर्थ्यात् । न
द्वितीयः, जिज्ञासाया वैयर्थ्यापत्तेः । तदर्थकभाष्यादिशास्त्रप्रणयन
जलताडनसाम्यापत्तेश्चेति परमते ब्रह्मणो जिज्ञास्यत्वं दुर्घटमिति
जिज्ञास्यस्य ब्रह्मणो जगज्जन्मादिस्थितिलयमोक्षकारणत्वं लक्षणमुक्तम्
"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्य
भिसंविशन्ती"ति श्रुतौ जगज्जन्मकारणत्वस्य स्थितिकारणत्वस्य च नि
त्तकारणसाधारण्यात् । उपादानत्वप्रत्यायनाय प्रपञ्चस्य ब्रह्मणि ल
मोक्षश्च दर्शितः । लक्षणस्य द्वैविध्यं परैरुच्यते, स्वरूपं तटस्थञ्चेति
तत्र स्वरूपाभिन्नं लक्षणमाद्यं यथा "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि या
ल्लक्ष्यमनवस्थितत्वे सति व्यावर्त्तकं द्वितीयं यथा जगज्जन्मादिकर्तृत्वम्
स्वरूपलक्षणेऽतिव्याप्तिवारणाय यावदिति सत्यन्तम् । लक्ष्यावृत्ति
दृशधर्मेऽतिप्रसक्तिवारणाय व्यावर्त्तकपदम् । अत्रायं विमर्शः—सत्
त्वादिकं प्रत्येकं स्वरूपलक्षणं तस्य घटादिसाधारण्यात् । न च सत्
सति ज्ञानत्वं तस्य ज्ञाने परेणाङ्गीकारात् । नापि ज्ञानानन्दत्वं सत्
ज्ञानानन्दत्वसत्यत्वरहितस्य ज्ञानानन्दात्मकस्य शून्यवादिभिरप्यङ्गीकार
नापि मिलितं स्वरूपलक्षणं, वैयर्थ्यात् । स्वरूपं न लक्षणम् । असाधारणधर्म
सर्ववादिसम्मतत्वेन लक्षणत्वात् । अन्यथा स्वरूपस्यैव व्यावर्त्तकत्वे
लक्षणोक्तेर्वैयर्थ्यात् । स्वरूपस्य व्यावर्त्तकत्वादर्शनात् । ननु ब्रह्म
स्वरूपभूतसत्यत्वापेक्षया धर्मधर्मिभावकल्पनामङ्गीकृत्य लक्षणमुपपा
यितुं शक्यते । आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृ
क्त्वेऽपि चैतन्यात्पृथगिवाभासन्ते इति पञ्चपादिकाचार्योक्तेरिति चे
कल्पितस्य व्यावर्त्तकाभावात् । नहि त्वन्मते पारमार्थिकाः सत्यत्वा
धर्मा ब्रह्मण्यभ्युपेयन्ते, तथा सति निर्विशेषश्चिन्मात्रवादभङ्गापत्तेर
कल्पिता न ते व्यावर्तकाः । लक्षणलक्षणे पारमार्थिकासाधारणधर्मस्
निविष्टत्वात् । यदि कल्पितधर्माणामपि व्यावर्त्तकत्वमुररीक्रियते त
यूपे कल्पितस्यादित्यस्यापि सूर्येतरव्यावर्त्तकत्वं स्यान्नत्वेवं, तस्मात्स्व
पस्य धर्मधर्मिकल्पनायामपि न स्वरूपलक्षणोक्तिरुपपत्तिमती ।

अथ कीदृशं ब्रह्म जगत्कारणत्वेनाभिमतमिति जिज्ञासा

मत्राहुः केचित्। शुद्धमेव ब्रह्म विश्वं प्रत्युपादानकारणं, शुद्धब्रह्मणः प्राधान्येन लक्षणीयत्वात्। तस्यैव जन्मादिसूत्रे लक्षणमुच्यते—"अथातोब्रह्मजिज्ञासा" इति पूर्वसूत्रे शास्त्रविषयसमर्पकेण ब्रह्मपदेन शुद्धब्रह्मणएवोपात्तत्वेन तस्यैव लक्षणाकाङ्क्षणाच्च। नैतद्युक्तिमत्, "सदेव सोम्येदमग्र आसीत्, आत्मन आकाशः सम्भूतः, सोऽकामयत एकोऽहं बहुस्याम्, यः सर्वज्ञः सर्ववित्" इत्यादि श्रुत्युपदिष्टानां जगत्कारणत्वसत्यकामत्वसत्यसङ्कल्पत्वादिधर्माणां शुद्धत्वेनाभिमते निर्विशेषचिन्मात्रे ब्रह्मण्यनुपपत्तेः। "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते। मैत्रेय भगवच्छब्दः सर्वकारणकारणे" इति श्रीपराशरवचनेन शुद्धशब्दाभिधेयः सर्वविशेषहीनो मानाविषय इति भवदभिमतपक्षस्य निरस्तत्वाच्च। नाप्युपहितं ब्रह्मोपादानं भवितुमर्हति, असम्भवात्। तथाहि—उपहितं बिम्बरूपं प्रतिविम्बरूपं वा कारणत्वेनाभिप्रेतम्। अत्राहुः केचित् विम्बात्मकमेव तथाहि एकमेव चैतन्यं विम्बत्वाक्रान्तं सदीश्वरचैतन्यं प्रतिविम्बत्वाक्रान्तं जीवचैतन्यञ्चाभिधीयते। विम्बप्रतिविम्बकल्पनोपाधिश्चैकजीववादे अविद्या। अनेकजीववादे अन्तःकरणानि अविद्यान्तःकरणोपाधिप्रयुक्तोजीवपरयोर्भेदः। अविद्याकृतदोषाश्च प्रतिविम्बे जीव एव न विम्बे परमेश्वरे उपाधेः प्रतिविम्बपक्षपातित्वात्। तत्र विम्बरूपमेव जगत्कारणमिति चेन्नानुपपन्नत्वात्। ग्रीवास्थमुखस्य दर्पणप्रदेश इव विम्वरूपचेतनस्य जीवप्रदेशे व्याप्त्यभावात् सर्वान्तर्यामित्वभङ्गप्रसक्तेश्च। नापि प्रतिविम्बरूपं जगत्कारणं, अविद्याकृतदोषाजीव इव कारणेऽपि स्युः। उपाधेः प्रतिविम्बपक्षपातित्वमिति नियमात्। "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्या निश्चितं ब्रह्मण उपादानत्वं प्रधानस्येव परिणामित्वरूपं वा परमाणूनामिवारम्भकत्वं वा? तत्र नाद्यः, ब्रह्मणोनिर्विकारित्वात्। परिणामवादे हि परिणामपरिणामिनोः वास्तवाभेदस्वीकारेण ब्रह्मणः परिणामित्वे परिणामजन्मादयोऽपि ब्रह्मणि प्रसज्येरन्, श्रुतिसिद्धं जन्ममरणविकारराहित्यस्वरूपं भज्येत ततश्च निर्विकारित्वात्तस्य परिणामित्वं न सम्भवति। न द्वितीयः अद्वितीयत्वाद्ब्रह्मणः। ब्रह्मणस्सद्वितीयत्वे हि परमाणुद्वयसंयोगवदसमवायिकारणलाभसम्भवादारम्भकत्वं भवेत्। तस्माद्विवर्त्तोपादानत्वं वाच्यं तच्च भ्रमाधिष्टानत्वमित्यपि वक्तुं न शक्यते। उपादाने मृदादौ भ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठाने च शुक्त्यादावुपादानत्वस्य

व्यवहाराभावात् पारिभाषिकोपादानत्वस्य चानुपादानत्व एव पर्य्यवसानात्। एतेनासत्यरूपान्तरापत्तिर्विवर्त्तः, सत्यरूपान्तरापत्तिस्तु परिणामः, रूपान्तरापत्तिमात्रन्तूपादानत्वं तच्च ब्रह्मणोविवर्त्तरूपविशेषस्याप्युपपन्नम् निर्विकारश्रुतिस्तु तात्त्विकविकाराभावाभिप्रायिका ब्रह्म चाज्ञातरूपेण विवर्त्तते। इत्यज्ञानमपि परिणामितयोपादानान्तर्गतं रूप्यमपि शुक्तिविवर्त्तत्वात्। अज्ञानपरिणामत्वाच्चोभयोपादानकमिति निरस्तम्। त्वयाऽपि मिथ्याभूतस्य मिथ्याभूतमेवोपादानत्वमन्वेषणीयम्। सत्यत्वे कार्यस्यापि कारणस्वभावतया सत्यत्वप्रसङ्गइति बदता सत्यस्यासत्यरूपापत्तेर्निषेधात्। स्वभावत्यागप्रसङ्गाच्च।

किञ्च सत्यस्यासत्यरूपतापत्तौ तदापत्तियोग्यतारूपधर्मोऽवश्यम्भावी, सर्वसामर्थ्यशून्यस्य तथात्वासम्भवात्। तथात्वे च निर्विशेषत्वभङ्गात्। न चोपादानं माया ईश्वरोनिमित्तं शुद्धब्रह्माधिष्ठानमिति वाच्यम्। अभिन्ननिमित्तोपादानत्वाभावेन त्वन्मते तदर्थस्य प्रकृत्यधिकरणादेर्विरोधापत्तेः। अतः परमते ब्रह्मणः कारणत्वं दुर्घटमिति। प्रमाणाधीनत्वात्प्रमेयसिद्धेः प्रमाणादीनां सत्वमभ्युपेयम्। तदनादरे तु लौकिकपरीक्षकव्यवहार एव न सिद्ध्येत्। इदं प्रमाणमिदमप्रमाणमिति प्रमाणव्यवस्था च।

प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतोवादफलस्य तत्वनिर्णयस्य जल्पादिफलस्य विजयस्य चोपपत्तावुन्मत्तादेरपि स्यादिति तदनभ्युपगमस्य फलातिप्रसङ्गहेतुत्वात् प्रमाणादिसत्वाभ्युपगमः प्रमाणाऽप्रमाणव्यवस्थारूपालम्बनाभावे सर्वेषां प्रवृत्तिनिवृत्तिरूपः सर्वोऽपि व्यवहारो भज्येत।

प्रमाणाप्रमाणव्यवस्था नास्तीति वदन् वादी प्रष्टव्यः। किं सर्वस्याप्रमाणत्वादेवमुच्यते।१। उत सर्वस्य प्रमाणत्वात्।२। यद्वा परस्पर बाधात्।३। अथवा सर्वस्य सन्दिग्धत्वात्।४। न तावदाद्यः, सर्वस्याप्रमाणत्वे सर्वमप्रमाणमित्यस्यास्त्वत्प्रतिज्ञाया अप्यप्रमाणत्वं स्यादिति स्वपक्षस्य हान्यापत्तेः। द्वितीये तु सर्वस्य प्रमाणत्वे त्वदुक्तिरप्रमाणमित्यस्मद्वाक्यस्यापि प्रामाण्यं स्यादिति प्रतिपक्षवचनबाधितः स्वपक्षः। अपि च प्रमाणाप्रमाणव्यवस्था नास्तीत्येवं रूपस्त्वत्पक्षो यदि सिद्धस्तर्हि त्वद्वाक्यस्य प्रामाण्यं प्रतिपक्षवाक्यस्याप्रामाण्यमित्येवंरूपा लोकव्यवस्था

सिद्धा स्यात् । यदि न सिद्धा प्रमाणाप्रमाणव्यवस्था त्वत्प्रतिज्ञायाः प्रामाण्यं प्रतिपक्षप्रतिज्ञाया अप्रामाण्यमिति व्यवस्थाया अभावात् त्वत्पक्षः सुतरां न सिद्ध्यतीति । तृतीये तु, प्रमाणेन प्रमाणं बाध्यते उताप्रमाणेन । आद्ये, बाध्येन प्रमाणेन बाधकप्रमाणस्यापि बाधः स्यादिति न तेन प्रमाणबाधः सिद्ध्यति । अन्त्ये, अप्रमाणेन प्रमाणस्य बाधे तेन बाधकेनाप्रमाणेनाप्रमाणस्य बाधनं वा किं न स्यात् । अविशेषात् । नतरामप्रमाणेन बाधः सिद्ध्यति ।

नन्वेवं विकल्पस्त्वत्पक्षेऽपि सुलभः कुत्रचित्प्रामाण्यं वदन् वादी प्रष्टव्यः । तत्प्रामाण्यं किमप्रमाणात्सिद्ध्यति उत प्रमाणात् ? आद्ये, अप्रमाणेन प्रामाण्यवत् तत्राप्रामाण्यमपि सिद्ध्येत् । अविशेषादिति नैकान्तस्तत्र प्रामाण्यं सिद्ध्यति । अन्त्ये, स्वप्रामाण्यं स्वेनैव सिद्ध्यति उतान्येन । आद्ये,असम्भवः स्वस्मिन्स्वस्याप्रवृत्तेः । अन्त्ये तयोःपरस्पर प्रामाण्यग्रहणेऽन्योन्याश्रयः अग्रहणेऽभिमतासिद्धिः । तत्प्रामाण्यस्यान्येन ग्रहणे चक्रकादयः स्युरिति चेन्मैवम् । प्रमाणेनैव प्रामाण्यं सिद्ध्यति, सा च प्रामाण्यसिद्धिः स्वप्रामाण्यमपि गृह्णाति ज्ञानस्य स्वप्रकाशकत्वेन प्रामाण्यस्य स्वतः ग्राह्यत्वान् स्वनिष्ठप्रामाण्यस्य स्वेनैव ग्रहणे दोषाभावस्ततः कारणात्त्वदुक्तं न सम्भवदुक्तिकम् ।

एवञ्च कस्यचित्प्रामाण्ये सिद्धे व्यवस्थितेन तेनाप्रामाण्यस्य बाधोयुक्तः, नत्वप्रमाणेन प्रमाणस्य बाध इति बाधाबाधव्यवस्थाऽपि सिद्ध्यतीति । अन्यथा बाधाबाधव्यवस्था न क्वापि व्यवस्थिता स्यात् । तदीयबाधाबाधव्यवस्थापक्षस्य बाधाबाधव्यवस्थावादिनः परस्परपक्षेण बाधः स्यादिति बाधाबाधव्यवस्थैव सिद्धा स्यादिति नतरां त्वत्पक्षसिद्धिः । नापि चरमः पक्षः साधीयान् । यतस्तव पक्षे सर्वस्यापि सन्दिग्धत्वान्निर्णयासम्भवेन संशयोत्पत्तिः संशयगोचरनिर्णयश्च न स्यात्ध र्मिणः कोटयोश्च निर्णयस्य संशयहेतुत्वात्तवपक्षे निर्णयस्याभावात् । यदि च संशयसिद्ध्यर्थमन्यत्रकोटिद्वयनिर्णयस्तत्र तद्धर्मिनिर्णयश्चाङ्गीक्रियते तर्ह्यन्यत्रापि निर्णयोऽविशेषादङ्गीक्रियताम् । न च संशये कोटयादिनिर्णयो न हेतुर्येन सोऽङ्गीक्रियेतेति वाच्यम् । यतः कोटयादि निर्णयस्य संशयहेतुत्वमन्वयव्यतिरेकसिद्धम् । स्थाणुत्वस्थाणुत्वाभाावसहचरितोर्द्ध्वत्ववानयमिति साधारणधर्मवद्धर्मिज्ञानसत्वेऽयं स्थाणुर्वा

पुरुषो वेति संशयो जायते नान्यथा। सर्वस्य पुरुषस्यापि सर्वत्र पदार्थे संश
एवेत्येतन्न दृश्यते । कुत्रचिन्निर्णयस्यापि दर्शनात्, तस्मात्सर्वत्र सन्देहो
न साधयितुं शक्यते । त्वयोच्यमानः सर्वगोचरः संशयः सन्दिग्धो न
वा । आद्ये, त्वत्परिगृहीतस्य सर्वसंशयस्यासिद्धिः स्यात् । अन्ते
सर्वसन्देहगोचरोनिर्णयोऽभ्युपगतः स्यादिति त्वदीयसन्दिग्धाद्वैतवादस्
भङ्गस्स्यात् ।

ननु सर्वं सन्दिग्धमित्येतदपि सन्दिग्धमेवेति सर्वगोचरसंशये
संशयोऽङ्गीक्रियत इति चेत्तर्हि तदङ्गीकारहेतुस्तन्निर्णयोऽवश्यमेवेष्टव्य
इति बहुकक्षासाधनेऽपि निर्णयस्त्वां न मुञ्चति, प्रमाणव्यवस्थासिद्ध
भवति । सामान्यतः प्रमाणज्ञानेऽपि किमिदं प्रमाणं न वेति विशेष
संशयस्यनिवृत्तिः प्रमाणलक्षणाधीना तस्मात्प्रमाणप्रमेयादीनां लक्षणम
वश्यं वक्तव्यम् । तदुक्तमभियुक्ततरैः “ मानामानविभागतः सामान्येन
व्यवस्थिते । काचित्कसंशयोच्छित्त्यै लक्षणं सम्प्रचक्षते ” इति ।

प्रमाकरणं प्रमाणं तच्चाष्टविधं प्रत्यक्षानुमानोपमानशब्दार्थाप
त्त्यनुपलब्धिसम्भवैतिह्यभेदात् । तत्र विषयेन्द्रियजन्यं ज्ञानं विषये
न्द्रियसम्बद्धं वा प्रत्यक्षप्रमाणं यथायं घट इत्यादि । बाह्याभ्यन्तरैक
तरकरणकं ज्ञानं प्रत्यक्षं तद्द्विविधं बाह्याभ्यन्तरभेदात् । श्रवणादी
न्द्रियकरणं ज्ञानं बाह्यप्रत्यक्षं तच्च पञ्चविधम्, श्रावणं स्पार्शनं चाक्षु
घ्राणजं रासनञ्चेति विवेकः । मनः करणकं ज्ञानमान्तरप्रत्यक्षं तद
द्विविधं लौकिकमलौकिकञ्च तत्राहं सुखी दुःखी चेति लौकिकसुखादि
विषयत्वाल्लौकिकम् अलौकिकप्रत्यगात्मपरमात्मस्वरूपगुणादिविषय
श्चालौकिकप्रत्यक्षं तदपि द्विविधम्-पदार्थध्यानाभिव्यञ्जितं तन्मात्रविष
कञ्चैकं वाक्यार्थवस्तुध्यानाभिव्यञ्जितं प्रत्यगात्मब्रह्मतादात्म्यसम्ब
न्धावगाहिज्ञानं द्वितीयम् । “ मनसैवानुद्रष्टव्यः ” “ ततस्तु तं पश्य
निष्कलं ध्यायमान ” इत्यादि श्रुतेः । लिङ्गपरामर्शोऽनुमानम् । सादृश्य
ज्ञानमुपमानं सादृश्यञ्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं तद्वि
षयकज्ञानमुपमानमिति तदर्थः, तच्च द्विविधं प्रत्यक्षमूलं श्रुतिमूलञ्चेति
यथा चन्द्रवन्मुखमित्यत्र मुखस्य चन्द्रभिन्नत्वं दृष्ट्याह्लादजनकत्वस्
चन्द्रगतभूयोधर्मस्य तत्र सत्वमिति लक्षणसमन्वय इत्याद्यस्योदाहरणम्
अथ द्वितीयं, “निरञ्जनः परमं साम्यमुपैति” मुक्तजीवस्य परतन्त्रसत्वा

च्छिन्नस्य स्वतन्त्रसत्ताश्रयाद्ब्रह्मणो भिन्नत्वम्-मुक्तस्य सार्वज्ञ्यापहतपाप्मत्वादिब्रह्मगतभूयोधर्मवत्वञ्चेतिलक्षणसमन्वय इत्युपमानम् । आप्तप्रयुक्तवाक्यं प्रमाणं, आप्तत्वं नाम भ्रमहेत्वभावसहकृतपदवाक्यप्रमाणवेतृत्वे सति यथार्थवक्तृत्वं, भ्रमहेतवस्तावच्चत्वारः बुद्धिमान्द्यमिन्द्रियापाटवंविप्रलिप्सा दुराग्रहश्चेति । तत्राप्ततमोवेदः स्वतः प्रामाण्यात् । आप्ततरा मनुव्यासादयो वेदार्थस्मर्तारः, तदुक्तीनां श्रुतिसापेक्षत्वात् । श्रुतिस्मृतिव्याख्यातार आप्ताः । उभयसापेक्षत्वात्तन्निर्णयस्य तेषां वाक्यं प्रमाणम् । शास्त्रं नाम श्रुतिस्तन्मूलस्मृतिभारतपाञ्चरात्रवाल्मीकिरामायणादिकम् । "ऋग्यजुः सामाथर्वाश्च भारतं पाञ्चरात्रकम् । मूलरामायणञ्चैव शास्त्रमित्यभिधीयते ॥ यच्चानुकूलमेतस्य तच्च शास्त्रं परं मतम् । अतोऽन्योग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तदि" ति स्मृतेः ।

केचित्पाञ्चरात्रस्य प्रमाण्यं नानुमन्यन्ते वेदविरुद्धार्थाभिधायित्वात् । तन्न विचारचारुयत आपातप्रतिपन्नेऽर्थऽप्रामाण्यशङ्कास्पदत्वं, न वस्तुतः विचार्यमाणे, तथाचेदं प्रमाणमिदमप्रमाणमिति शास्त्रादेव निश्चेतुं शक्यते, नान्यथा । श्रुतिमूलकतया प्रामाण्यं शिष्टैर्गृह्यते तद्विरुद्धञ्च हेयमिति सर्वेषां प्रमाणविदां पन्थाःसमानः । एवञ्च पाञ्चरात्रस्य प्रामाण्यं श्रुतिमूलकतया तत्तुल्यत्वेन मोक्षधर्मे सूत्रकारेण श्रीबादरायणेनैव निर्णीतम् "गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः। य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत स" इत्यादि युधिष्ठिरप्रश्नानां पाञ्चरात्रोक्तप्रक्रियया ह्युत्तरं दत्वाऽऽह "इदं शतसहस्राद्धि भारताख्यानविस्तरात् । आविध्यमतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥ नवनीतं यथा दध्नो द्विपदां ब्राह्मणोयथा । आरण्यकञ्च वेदेभ्य ओषधिभ्योयथाऽमृतम् ॥ इदं महोपनिषदं चतुर्वेदसमन्वितम् । साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम । ऋग्यजुः सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ भविष्यति प्रमाणं वा ह्येतदेवानुशासन"मिति। अयम्भावः पाञ्चरात्रस्याप्रामाण्यं यदुच्यते तत्किं मानाभावाद्वानिषेधाद्वा? नाद्य उक्तलक्षणप्रमाणस्य विद्यमानत्वात् । नापि द्वितीयः, श्रीभारतादिषु पाञ्चरात्रप्रामाण्यनिषेधानुपलब्धेः । न च "कापालं पाञ्चरात्रञ्च यामलं वामनार्हतम् । एवं विधानि चान्यानि मोहनार्थानि तानि तु ॥" इति कूर्मपुराणादौ निषेधो दृश्यते इति शङ्कनीयम् । भारतादिविरुद्धस्मृते-

रनङ्गीकारात् "यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्" इति सूत्रकारप्रतिज्ञावचनात्, भारतस्य तु सर्वैरपि शिष्टैः निःसंशयेन परिग्रहात् न तत्राप्रामाण्यशङ्काकलङ्कावकाशो ऽन्यथा श्रीमद्भगवद्गीताया अपि तथात्वं प्रसज्जेत ।

किञ्च नारायणीयोपाख्याने पाञ्चरात्रप्रतिपाद्यविषयस्य निर्णयौपयिकषड्लिङ्गोपेतवाक्यसिद्धत्वात्प्रामाण्यतमत्वम् । तथाहि– "गृहस्थो ब्रह्मचारी चे" त्यादि राज्ञः प्रश्नोपक्रमः । सर्वाश्रमिणां स्वानुरूपपुरुषार्थोपपत्तये कोदेवोयजनीयः । वैश्वदेवं पैत्र्यञ्च कर्म कथं कर्तव्यं किमात्मको मोक्षः किं सर्वसारइत्युपक्रमः ॥ १ ॥ "एष एकान्तधर्मस्ते कीर्तितो नृपसत्तम । मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभि" रिति वैशम्पायनः । एवं हि स महाभागो नारदो गुरवे मम । श्वेतानां पतिनोक्ताह्येकान्तगतिमव्ययाम् ॥ व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते । पाञ्चरात्रविदोये च यथा क्रमपरा नृपे " ति ।

भीष्मश्च–"मत्तोऽन्यानि च ते राजन्नुपाख्यानशतानि वै । यानि श्रुतानि सर्वाणि तेषां सारोऽयमुद्धृत " इत्युपसंहारः ॥ २ ॥ ये च तद्भाविता लोके ह्येकान्तित्वं समाश्रिताः । नारायणःशाश्वतधर्मगोप्ता, काम्यनैमित्तकं राजन्यज्ञिया परमक्रियाः । सर्वाःसात्वतमास्थाय विधिञ्चक्रे समाहितः पाञ्चरात्र विदो मुख्या तस्य गेहे महात्मनः । प्रायेण भगवत्प्रोक्तं भुञ्जते चाग्रभोजनमि " ति शतशोऽभ्यासः ॥३॥ नारदेन तु सम्प्राप्तः सरहस्यः ससंग्रहः । एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ सात्वतं विधिमास्थाय प्राक्सूर्य्यमुखनिःसृतमि " त्यादिनाऽपूर्वता ॥४॥ " एतदभ्यधिकं तेषां यत्तोजः प्रविशत्युत । अहो ह्येकान्तिनः श्रेष्ठान्प्रीणाति भगवान्स्वयम् ॥ विधिप्रयुक्तां पूजाञ्च गृह्णाति भगवान्स्वयम् । एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् ॥ नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः । सहोपनिषदान्वेदान्ये विप्राः सम्यगाश्रिताः ॥ पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः । तेभ्योविशिष्टां जानामि गतिमेकान्तिनां नृणाम ॥ एकान्तिनोहि पुरुषा दुर्लभा बहवो नृप । यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन ॥ अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः । भवेत्कृतयुगप्राप्तिराशीः कर्मविवर्जितैः ॥ नारायणात्मके मोक्षे ततोयाति परां गतिमि " त्यादि शतशः फलोक्तिः ॥५॥ इदं महोपनिषदं चतुर्वेदसमन्वितम् ।

साङ्ख्ययोगेन तुल्योहि धर्म एकान्तिसेवितः ॥ सर्वेषु च नृपश्रेष्ठज्ञानेष्वेतेषु दृश्यते । यथारामं यथाज्ञानं निष्ठा नारायणः प्रभुः ॥ न चैवमेवं जानन्ति तमोभूता विशाम्पते । तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः ॥ निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम । निःसंशयेषु सर्वेषु नित्यं वसति वै हरिरि" त्यादिनाऽर्थवादः । किञ्च जनमेजयेन पृष्टो वैशम्पायनः, प्रतिकल्पं पञ्चरात्रं श्रीनारायणादाविर्भवति पाखण्डप्राचुर्य्यादिति सम्पूर्णाध्यायेनाह । "यदासीन्मानसं जन्म नारायणमुखोद्गतम् । ब्रह्मणः पृथ्वीपाल तदा नारायणः स्वयम् ॥ तेन धर्म्मेण कृतवान्दैवं पैत्र्यञ्च भारत । फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे ॥ वैखानसेभ्यः सोमस्तु ततःसोऽन्तर्दधे पुनरि" त्यादिना कल्पे कल्पे सम्प्रदायपूर्वकप्रवृत्त्युक्तयोऽत्रोपपत्तय इति । ६ ॥ अथ तन्निष्ठवतां ह्यन्यक्रियावद्भ्यः स्वरूपफललक्षणोक्तेरपि श्रेष्ठत्ववर्णनाच्च, "सहोपनिषदान्वेदानित्यादि जनमेजयोक्तेः । "एकतश्च द्वितश्चैव त्रितश्चैवमहर्षयः । इदंमे समनुप्राप्ता मम दर्शनलालसाः ॥ न च मां ते ददृशिरे न तु द्रक्ष्यति कश्चन । ऋते ह्येकान्तिकं ह्येषां त्वमेवैकान्तिको ममे" ति नारदं प्रति श्वेतद्वीपपतिवचनात् । किञ्च "पञ्चरात्रविदो ये च यथाक्रमपरा नृप । एकान्तिभावोपगतास्ते हरिं प्रविशन्ति वै ॥ यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् । शेषाश्च विबुधश्रेष्ठा दैत्यादानवराक्षसाः ॥ नागाः सुपर्णा गन्धर्वाः सिद्धा राजर्षयस्तथा, हव्यं कव्यञ्च सततं विधियुक्तं प्रयुञ्जते ॥ कृत्स्नं तु तस्य देवस्य चरणावुपतिष्ठते । याः क्रियाः सम्प्रयुक्ताश्च एकान्तिगतिबुद्धिभिः ॥ ताः सर्वाः शिरसा देव प्रतिगृह्णाति वै स्वयम् । तत्रैवाशरीरिणी वागेकतानान्ब्रह्मपुत्रान्प्रति "दृष्टा वः पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः । दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमाः ॥ गच्छध्वं मुनयः सर्वे यथागतमितोऽचिरात् । न स शक्तस्त्वभक्तेन द्रष्टुं देवः कथञ्चन ॥ कालं कालेन महता एकान्तित्वं समागतैः । शक्यो द्रष्टुं सभगवान्प्रभामण्डलदुर्दृश" इति । श्रीनारायणो नारदं प्रति-"ते देवा आश्रमाश्चैव नानातनुसमाश्रिताः, भक्त्या सम्पूजयन्त्येनं गतिं चैषां ददाति सः ॥ ये तु तद्भाविता लोके ह्येकान्तित्वं समाश्रिताः । एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युत ॥ इति गुह्यसमुद्देशस्तव नारद कीर्तितः । भक्त्या प्रेम्णा च देवर्षे अस्मद्भक्त्या च ते श्रुत" इति । ननु "साङ्ख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथे" ति साङ्ख्यादीना-

मध्यादरणेऽपि भगवत्पादशङ्कराचार्यप्रणीतशारीरके भाष्ये तेषां निषेध दर्शनात्तन्न्यायेनास्यापि निषेधो युक्त एव न च साङ्ख्यादौ वेदविरुद्ध भागस्यापि सत्त्वात्तन्मात्रनिषेध इष्ट इति वाच्यम् । श्रुतिविरुद्धभागस्यात्रापि सत्वात्तन्मात्र निषेधोऽत्रापि युक्तस्तथा चात्यभावात् । तथाहि परमकारणाच्छ्रीवासुदेवात्सङ्कर्षणाख्यो जीवो जायते । सङ्कर्षणात्प्रद्युम्न संज्ञं मनो जायते, तस्मादनिरुद्धसंज्ञोऽहंकार इति भगवच्छास्त्रप्रक्रिया तत्र न तावज्जीवोत्पत्तिः सम्भवति " न जायते म्रियते वा विपश्चिदिति श्रुतिविरोधात् । नापि जीवान्मनस उत्पत्तिस्ततोऽहंकारस्येति मनोज्ञम् एतस्माज्जायते प्राणोमनः सर्वेन्द्रियाणि चे" ति परत एव मन आदीनामुत्पत्तिश्रवणात् तस्माद्वेदविरुद्धांशस्य निषेधे चात्यभाव इति चेन्न भगवत्प्रक्रियाज्ञानहीनानां पदवाक्यप्रमाणतत्त्वनिर्णयाशक्तानां स्वप्राङ्गणेऽश्वधावनमात्रत्वात् । तथाहि साङ्ख्यादीनां पौरुषेयत्वेन वेदविरुद्धांशस्यापि सम्भवात्तन्मात्रनिषेधः सूपपन्नः । प्रकृते तु " पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणःस्वयमि" त्यादिनाऽस्य श्रीमुखनिर्गतत्वेन श्रीमद्भगद्गीतावत्कृत्स्नस्यापि वेदार्थरूपत्वेन प्रामाण्यतमत्वान्नोक्तन्यायस्यात्रावकाशः । नहि साङ्ख्यादीनां तत्पठनमात्रेण तत्तुल्यत्वं वक्तुं शक्यम् । उक्तरीत्या तेषां षड्लिङ्गोपेतवाक्यैर्निर्णयाभावान्महद्वैषम्यादुक्तन्यायस्य । नाप्युक्तप्रक्रिया वेदविरुद्धा,तद्व्यवस्थायास्तत्रमीमांसाऽगोचरत्वात् । तथाहि न तावज्जीवोत्पत्तेस्तत्राङ्गीकारस्तस्य नित्यत्वप्रतिपादनादर्थतो निषेध एव "अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणं कर्मणां क्षेत्रं प्रकृते रूपमुच्यते ॥ व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च । स ह्यनादिरनन्तश्च परमार्थेन निश्चित"इति परमसंहितोक्तेः

ननु तर्हि पूर्वापरविरोधादुभयविधवाक्यानामपि हेयत्वमिति चेन्न । उक्तन्यायस्य वेदेऽपि व्यापनात्तत्रापि निषेधः सावकाशस्तथाहि "न जायते म्रियते वा विपश्चित् ।" "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा" इत्यारभ्य "सर्व एवात्मनो व्युच्चरन्ती" तीतरेतरविरोधस्य साम्यात् । न चोत्पत्तिश्रुतेर्हेययोगमात्रविधानपरत्वे तात्पर्य्यादविरोधः । अन्यथा नात्मा श्रुतेरित्यादिशास्त्रबाधादिति वाच्यम् । उक्तन्यायस्यात्रापि साम्यात् । नापि सङ्कर्षणप्रद्युम्नानिरुद्धानां जीवमनोऽहङ्काररूपत्वं सम्भावनार्हमपि तु श्रीवासुदेवाख्यस्य परब्रह्मणो व्यूहात्मत्वमेव तथोक्तं पौष्करसं

हितायाम् "कर्त्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते । क्रमागमैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तदि" ति । तच्च चातुरात्म्योपासनं परब्रह्मोपासनमेवेति सात्वतसंहितोक्तेः । "ब्राह्मणानां हि सद्ब्रह्म वासुदेवाख्ययाजिनां, विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महदि" तिपौष्करेऽपि-"तस्मात्सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम् । अस्मादवाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणेति" । अतः संकर्षणादीनामपि श्रीवासुदेवस्यैव स्वेच्छाव्यूहरूपत्वात् । "चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छयेति" कूर्मोक्तेः । जीवमनोऽहंकारतत्वाधिष्ठातृत्वाच्च तेषां जीवमनोऽहंकारशब्दैः कथनस्याविरोधात् । यथा "ता आप ऐक्षन्त तत्तेज ऐक्षते " त्यत्राबाद्यचेतनेषुईक्षणादिचेतनासाधारणधर्मादेरनुपपत्त्या अबादिशब्दानां तदधिष्ठातृपरत्वं तदन्तरात्मब्रह्मपरत्वं चाभ्युपगम्यते । यथा वा आकाशप्राणज्योतिरादिशब्दानां भूताकाशादौ तत्रोक्तलिङ्गानुपपत्त्या च ब्रह्मपरत्वं सूत्रितं, तद्वत्प्रकृतेपि सूपपन्नम् । एतेन सङ्कर्षणादिभ्यो मनआदिसृष्ट्यनुपपत्तिशङ्कापि निरस्ता । तद्रूपाच्छ्रीवासुदेवादेवोत्पत्त्यभ्युपगमात् । "एतस्माज्जायते प्राणो मन" इति श्रुतेरपि स्वार्थपरत्वसिद्धौ तद्विरोधशङ्काया अपि दूरतो निरस्तत्वात् । एतदुक्तं भवति । सर्ववेदान्तवेद्यो जगज्जन्मादिहेतुर्ब्रह्मेशादिकिरीटकोटीडितपादपीठो हेयधर्मास्पृष्टमहिमदिक्तटः सार्वज्ञ्यवात्सल्यकारुण्याद्यपरिमितस्वाभाविकनित्यकल्याणगुणार्णवो मुमुक्षुध्येयोभगवान्परब्रह्माख्यः श्रीवासुदेव इति तावन्निर्विवादं श्रुतिशतमानसिद्धत्वात् ।

एवञ्च स एव परमश्रेयोज्ञापकानामृग्यजुःसामाथर्वसंज्ञकानां विधिनिषेधादिपञ्चविधवाक्यकदम्बरूपाणां शब्दतोऽर्थतश्च मन्निःश्वासरूपत्वेन दुर्ज्ञेयतया मया विना तद्याथात्म्यस्य वेत्तुमशक्यत्वात्, सुरादिभिरपि तद्याथात्म्यज्ञानाभावे श्रेयसस्तत्साधनादीनाञ्चासिद्धेरिति निश्चित्य तदर्थयाथात्म्योपपत्तये तदधिकारिणां पुंसां स्वानुरूपपुरुषार्थसिद्ध्ये च स्वाश्रितानन्यजनजातमधिकृत्य तेषां स्वरूपगुणादिविषयकतत्वज्ञानोपलब्धये स्वयं तान्वेदान्पाञ्चरात्राख्यशास्त्ररूपेण विशदयाञ्चकार । तथा च सर्वस्यापि वेदार्थस्य स्वयमेव श्रीमुखेन निर्णीतत्वात् सर्वांशेनापि तस्य प्रामाण्यतमत्वमिति । "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । इदं महोपनिषदं चतुर्वेद समन्वित" मित्यादि पूर्वोक्तवाक्यान्यत्रानुसन्धेयानि । तस्मादुक्तप्रमाणैरस्याप्रतमत्वेन तत्राप्रा-

माण्यशङ्कायां औन्मत्तप्रलापत्वनिश्चयाच्छ्रेयोऽर्थिभिरुपेक्षणीयत्वमिति तात्पर्य्यार्थः ।

वृहत्पराशरे च "वैदिकस्तु जपं कुर्य्यात्पौराणं पाञ्चरात्रकं । यो वेद तानि चैतानि यान्येतानि च सा श्रुतिः ॥ पाञ्चरात्रविधानेन स्थण्डिले वापि पूजयेत् । जलमध्यगतो वाऽपि पूजयेज्जलमध्यगम् ॥ द्वादशारं नवव्यूहं पंचरात्रक्रमेण त्विति" । वाल्मीक्युत्तरे सनत्कुमारो रावणं प्रति "पुराणैश्चैव वेदैश्च पञ्चरात्रैस्तथैव च । ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तमिति" । वाराहे च "वेदाढ्ये तु समं दत्तं द्विगुणं तद्विदे यथा । आचार्य्ये पञ्चरात्राणां सहस्रगुणितं भवेत् ॥ सात्वतज्ञानदृष्टोऽहं सात्वतामिति सात्वत" इति । पुनस्तत्रैव "ब्राह्मणक्षत्रियविशां पञ्चरात्र विधीयते । शूद्रादीनाञ्च तच्छ्रोत्रपदवीमुपयास्यति ॥ एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् । पञ्चरात्रसहस्राणि यदि कश्चिद्ग्रहीष्यति ॥ कर्मक्षये तु मां कश्चिद्यदि भक्तो भविष्यति । तस्येदं पञ्चरात्रं तु, नित्यं हृदि च सिद्ध्यति ॥ इतरे राजसैर्भावैस्तामसैश्च समावृताः । भविष्यन्ति द्विजश्रेष्ठ मच्छासनपराङ्मुखाः । कृतं त्रेता द्वापरंच शृणु नारद साम्प्रतम् । यदिदं पंचरात्रेण भजेद्भक्त्या द्विजोत्तमः । प्राप्योऽहं नान्यथा वत्स कल्पकोट्ययुतैरपी"त्यादिना । भीष्मपर्वणि च "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः । सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन य" इत्येतैः प्रमाणवाक्यैरप्यस्य प्रामाण्यतमत्वञ्चेति सिद्धम् श्रुतिसमानप्रामाण्यतमत्वादेतच्छास्त्रमप्रमाणमित्यनुन्मत्तः को वा ब्रूयादिति भावः । एतद्विरुद्धाः स्मृतयो हेयाः श्रुतितन्मूलकस्मृतिविरोधात्, तथोक्तं भगवता जैमिनिना "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति । श्रुतेः स्मृतिविरोधे सत्यनपेक्षं प्रामाण्यं स्यात्स्मृतेश्च बाधः । अविरोधे हि अनुमानं स्मृतिरपि प्रमाणं स्यादिति सूत्राक्षरार्थः ।

किञ्च "यन्मनुरवदत्तदौषध" मिति श्रुतिसिद्धमौषधरूपं मनुवचनञ्च-"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता" इत्यादि । यत्तु साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान् साङ्गेषु वेदेषु प्रतिष्ठामलब्ध्वेति वचनादिदं वेदविरुद्धमिति केषाञ्चित्पदवाक्यप्रमाणमीमांसा-

हीनानामनाकलितश्रुतितदुपबृंहणन्यायस्मृतिकानां मृषा कपोलकल्पितं तदपि निरस्तं, तस्य तत्प्रशंसामात्रपरत्वात् । यथा श्रीनारदेन "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वणं चतुर्थमितिहासपुराणं पंचम" मित्यादिकेन "भगवन्मन्त्रविदेवास्मि नात्मविदि" त्यन्तेन वाक्यसमुदायेन सर्वविद्यास्थानमभिधाय भूमविद्यातिरिक्तसर्वत्रात्मवेदनालाभोक्तिः प्रकृतभूमविद्याप्रशंसार्थिकैव, सर्वविद्यास्वधीयमानासु सतीष्वपि तत्प्रतिपाद्यपरतत्त्वनिर्णयालाभनिमित्तिका वा, अन्येषां गुर्वभिगमनप्रकारसंग्रहणार्थिका वा । न तद्विरुद्धप्रख्यापनार्था । अन्यथा सर्वविद्यास्थानानां सर्वेषामपि बाधप्रसङ्गात् । भूमविद्या अपि साम्न एवैकशाखाविशेषैकदेशत्वेन तत्रैवान्तर्भूतत्वेन निषेध्यत्वविरोधाच्च । तथा प्रकृतेऽपि शाण्डिल्याख्यानवचनस्य तत्प्रशंसार्थकत्वान्न वेदविरुद्धतास्फोटनार्थमिति तात्पर्य्यार्थः ।

तथा च परम संहितायाम् " अधीता भगवन्वेदाः साङ्गोपाङ्गाः सविस्तराः । श्रुतानि च मयाङ्गानि वाकोवाक्ययुतानि च ॥ न चैतेषु समस्तेषु संशयेन विना क्वचित् । श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति ॥ वेदान्तेषु यदा सारं संगृह्य भगवान्हरिः । भक्तानुकम्पया विद्वान्सञ्चिक्षेप यथासुखमिति " एषामर्थः । हे भगवन् साङ्गोपाङ्गा वेदा मया श्रुतास्तदङ्गान्यपि श्रुतानि, तथाऽपि संशयेन विना येन सिद्धिर्भविष्यति तच्छ्रेयोमार्गं न पश्यामि निर्णेतुं न शक्नोमि, तेषां दुरवगाहत्वेन दुर्बोधनार्थकत्वात् । अतो यथा श्रीभगवान्स्वभक्तानुकम्पया तान्संशयनिरासपूर्वकं सौकर्येण वेदोक्ततत्त्वं ग्राहयितुं यथासुखं येन सिद्धिर्भविष्यतीति विद्वान्सर्वज्ञः वेदान्तेषु यत् आसमन्ततः सारं सर्ववेदार्थतत्त्वं संगृह्य स्वासाधारणानुग्रहवशात् संचिक्षेप तद्वदस्वेति शेषः, अतोऽस्य शर्ववेदव्याख्यारूपत्वात् केनाप्यंशेन नात्र शङ्कावकाशः तस्मात्पांचरात्रस्य कार्त्स्न्येन प्रामाण्यतमत्वं वेदवद्बोध्यम् ।

इति पांचरात्रस्य प्रामाण्यसमर्थनम् ।

अपि च वेदोऽपि काण्डद्वयात्मको निरपेक्षतया प्रमाणं स च ऋगादिसञ्ज्ञया चतुर्विधस्तस्य षडङ्गानि, शिक्षाकल्पो व्याकरणं निरुक्त छन्दो ज्योतिषमिति सञ्ज्ञकानि । तथा चाम्नायते मुण्डकश्रुतौ "तत्रापरा ऋग्वेदोयजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पोव्याकरणं निरुक्तं

छन्दोज्योतिषमिति । "छन्दः पादौ शब्दशास्त्रञ्च वक्त्रं कल्पः पाणी ज्योतिषं चक्षुषी च । शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट्" चेति तद्व्याख्यारूपवचनंचात्रानुसन्धेयम् । तत्र शिक्षा वर्णनिर्णयपरा, कल्पः सूत्रग्रन्थः अनुष्ठेयश्रौतस्मार्त्तक्रमप्रतिपादनपरः, व्याकरणं स्वरवर्णपदादिसमर्थनपरम्, निरुक्तं पूर्वार्थप्रतिपादकम्, छन्दोऽनुष्टुप् त्रिष्टुवादिकम्, ज्योतिःशास्त्रञ्चाध्ययनानुष्ठानादिकालनिर्णयपरमिति विवेकः । इति शब्दनिर्णयः ।

---

## अर्थापत्तिः ।

उपपाद्यज्ञानेनोपपादकज्ञानसमर्थनमर्थापत्तिः । यथा देवदत्तं दिवाऽभुञ्जानं पीनञ्च दृष्ट्वा तर्क्यते—दिवाऽभुञ्जानस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमतोरात्रिभुञ्जान एवायमिति । अत्र तथाभूतपीनत्वमुपपाद्यं, तस्य ज्ञानं करणं पीनत्वज्ञानं विना रात्रिभोजनज्ञानस्यानुपपन्नत्वात् रात्रिभोजनाभावे पीनत्वस्यानुपपत्तिरिति भोजनं तदुपपादकं तस्य ज्ञानञ्चात्र साध्यमिति विवेकः । सैवान्यथाऽनुपपत्तिशब्दाभिधेया, सा द्विधा प्रत्यक्षमूला श्रुतिमूला चेति । तत्र प्रत्यक्षप्रमाणगोचरोपपाद्यविषयकज्ञानकरणिका प्रथमा; देहादिबुद्धिपर्य्यन्तः पदार्थो यद्यनात्मा न स्यात्तर्हि ध्वंसाभावप्रतियोग्यपि न स्यात् । प्रत्यक्षगृहीतध्वंसाभावप्रतियोगित्वान्यथाऽनुपपत्त्या देहादेरनात्मत्वम् । श्रुतिप्रमाणगोचरोपपाद्यविषयकज्ञानकरणिका द्वितीया, आत्मा यदि देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणो न स्यात्तर्हि घटादिवचेतनोपि न स्यात् "एतस्मान्मनोमयादन्य आत्मा विज्ञानमय" इति श्रुतेः । इत्यर्थापत्तिः ।

## अथानुपलब्धिः ।

अभावज्ञानकरणं ज्ञानमनुपलब्धिः । अतीतप्रतीतिविषयरूपोपलब्धिस्तदभावोऽनुपलब्धिः । घटाभावानुभूतौ तस्यासाधारणकारणत्वात्करणत्वमित्यर्थः । सा च योग्यतावैशिष्ट्येन ज्ञातैव प्रमाणं नान्यथा । अत्रेद यदि स्यादिति तर्कितेन प्रतियोगिसत्त्वेन प्रसञ्जित

उपलब्धिरूपः प्रतियोगी यस्याः सा योग्यानुपलब्धिः सैवाभावग्रहणे कारणभूतेत्यर्थः।

अत्र स्फीतालोकवति भूतले यदि घटः स्यात्तर्हि भूतलवदुपलभ्येत, आलोकाभावे तु तादृशापादनायोगेन विषयाभावग्रहो न जायते अभावस्य चातुर्विध्यं प्रागभावादिभेदेन बोद्धव्यम्। शते दशकं सम्भवतीति बुद्धौ सम्भावना सम्भवः। अज्ञातवक्तृकं पारम्पर्यप्रसिद्धमैतिह्यमिति प्रमाण निरूपणम्।

( प्रामाण्यस्य स्वतस्त्वविचारः )

अथ प्रत्यक्षादि प्रमाणानां प्रामाण्यं स्वतो ग्राह्यं परतो वेति मीमांसते। प्रामाण्यं परतो ग्राह्यमिति तार्किकाः। स्वतो यदि ज्ञाने प्रामाण्यं ग्राह्यं स्यात्तदाऽनभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात् ज्ञानग्रहे प्रामाण्यनिश्चयात्। अनिश्चये वा न स्वतः प्रामण्यग्रहः ज्ञाना ग्रहे धर्मिज्ञानाभावान्न संशयः। एतदुक्तं भवति ज्ञानं ज्ञातं चेत् तद्वृत्तिप्रामाण्यस्य ज्ञातत्वात् संशयोऽनुपपन्नः। यदि ज्ञानं न ज्ञातं तदा धार्मिज्ञानाभावे नितरां संशयासम्भवः, अतो ज्ञानप्रामाण्यमनुमानेन गृह्यते। इदं ज्ञानं प्रमा सम्वादिप्रवृत्तिजनकत्वात् गङ्गायां तज्जलहरणप्रवृत्तिवत्। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा, गन्धवति पृथिवीत्व प्रकारकज्ञानत्वात्। स्नेहवति जलत्वप्रकारकज्ञानवदित्यादिप्रयोगाणां जागरूकत्वादितिवदन्ति । प्रामाण्यं स्वत एव गृह्यते न तु परतः। प्रामाण्यं नाम तद्याथात्म्यं, तत्त्वञ्च तद्वति तत्प्रकारक ज्ञानत्वम्। यथा पृथिवीविशेष्यकं यज्ज्ञानं तद्गन्धवत्त्वप्रकारकं तदेव प्रमात्वम्। स्वतस्त्वपक्षेऽपि ज्ञानस्य स्वप्रकाशकत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यत इति प्रभाकराः।

स्वप्रकाशकत्वं नाम व्यवसायस्य प्रामाण्यविषयकत्वम्। प्रामाण्याश्रयव्यवसायेन प्रामाण्यं गृह्यते, ज्ञाने गृह्यमाणे तन्निष्ठज्ञानत्वादि धर्मवत्तन्निष्ठप्रामण्यस्यापि ग्रहे बाधकाभावात्तन्मते सकलज्ञानमयं घटो घटमहं जानामीत्याकारकमित्याशयः। ज्ञानस्यातीन्द्रियतया प्रत्यक्षाः

सम्भवेन स्वजन्यज्ञाततालिङ्गकानुमितिसमाग्री स्वनिष्ठप्रामाण्यनिश्चायिका, ज्ञातता च घटो ज्ञात इति प्रतीतिसिद्धो ज्ञानजन्यो विषयसमवेतः प्राकट्यापरनामातिरिक्तपदार्थविशेषस्तल्लिङ्गेन प्रामाण्यानुमितिः । इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारक ज्ञाततात्वात् । या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा घटे घटत्वप्रकारिका ज्ञाततेति प्रयोग इति भट्टमतानुयायिनः । अनुव्यवसायेन प्रामाण्यं गृह्यत इति मुरारिमिश्रादयः । तेषामयमाशयः । इदं रजतमिति व्यवसायस्येदन्त्वरजतत्वस्वप्रकाराश्रयधर्मिविषयत्वेऽनुव्यवसाय एव मानमिति तस्य तद्विषयकत्वमावश्यकं, तथा सति व्यवसायविषयैर्याबद्भिः प्रकारैर्विशेषित एव धर्मिविषयता विशेषणतयानुव्यवसायविषयो भवति तदविशेषितस्य धर्मिणस्तथा भाने धर्म्यंशेऽनुव्यवसायो निष्प्रकारक एव स्यात् प्रकारान्तरस्योपनायकविरहेणैवाभानात् । तथा चेदं रजतं जानामीति तदाकारो न स्यात् । इदमंशयुक्तव्यवसायरूपप्रत्यासत्तिघटितसामग्रीबलाच्च विषयिता विशेषणतापन्ने धर्मधारिदन्त्वरजतत्ववैशिष्ट्यमनुव्यवसायविषयः । एवं व्यवसायस्येदंत्वरजतत्वप्रकारकत्वे अनुव्यवसाय एव मानमिति तदपि तस्य विषयः । एवमिदन्त्व विषयकत्वरजतत्वविषयकत्वाभ्यामिदन्त्वप्रकारकत्वरजतत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावोऽपि बाधाभावघटितसामग्रीबलाद्विषय इति धार्मितावच्छेदकेदन्त्वांश इव रजतत्वांशेऽपि प्रामाण्यावगाहित्वमनुव्यवसायस्यावर्जनीयम् । अत एवेदन्त्वरूप धर्मितावच्छेदकांशे न प्रामाण्यसंशयइति । एतेषां मते तज्ज्ञानविषयकज्ञानेन प्रामाण्यं गृह्यते । तस्य ज्ञानं तज्ज्ञानं तदेव विषयो यस्येति षष्ठीतत्पुरुषगर्भबहुव्रीहिः । आश्रयत्वं षष्ठ्यर्थः । तत्पदं घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वादिपरं, तथाच घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वाश्रयज्ञानविषयकज्ञानेनेत्यर्थः । तादृशाश्रयविषयकं ज्ञानं गुरुमतेऽयं घट इति व्यवसाय एव । भट्ट मते ज्ञातता लिङ्गकानुमितिः, तदप्यपेशलम् । अनुव्यवसायानंगीकारात् । अयं घटो घटमहं जानामीत्याकारक एव ज्ञानं प्रथमतो जायते, तदनन्तरानुव्यवसायान्तरकल्पने प्रमाणं नास्ति । वह्निज्ञानस्य दाहसमर्थविषयत्वं न दाहसमर्थोऽयमिति व्ययसायगम्यं तस्य ज्ञानाविषयत्वात् । नापि तदनुव्यवसायगम्यं पुरोवर्त्तिदाहसमर्थस्य तदगोचरत्वात् । व्यवसायोपनीत

दाहसमर्थस्य च भाने तदसामर्थ्यात्। अन्यथा व्यवसायोपनीतस्य पुरोवर्तिनि वह्नित्वस्यानुव्यवसायविषयत्वे स्वतः प्रामाण्यग्रहापत्तेः। वस्तुतस्तु यावत्स्वाश्रयीभूतप्रमासामग्रीमात्रग्राह्यत्वं स्वतस्त्वम्। स्वं प्रमात्वम्।

इदं ज्ञानं प्रमेत्यनुमितिसामग्रीग्राह्यत्वमादाय सिद्धसाधनवारणाय यावदिति सामग्री विशेषणम्। न च तादृशयावत्सामग्रीजन्यग्रहोऽप्रसिद्धः शाब्दानुमित्यादिसामग्रीजन्यत्वस्य कुत्रापि ग्रहेऽसम्भवादिति वाच्यम्। तादृशसामग्रीत्वव्यापकस्य ग्राहकताकत्वस्य विवक्षितत्वादिति प्राहुः, तदसत्। स्वत्वस्यानुगतस्याभावात्। स्वपदस्य दृष्टान्तपरत्वे बाधात्। पक्षीभूतप्रामाण्यपरत्वे साध्याप्रसिद्धेः तादृशग्राहताकत्वव्यापकत्वस्यैव सम्यक्त्वेन सामग्रीपदवैयर्थ्यापत्तेश्च। परे तु यावदितिचरमग्रहविशेषणं, तथा च स्वाश्रयीभूतप्रमाग्राहकसामग्रीजन्ययावद्ग्रहविषय इत्यर्थः। तद्ग्राहकात्मादिजन्ययावद्ग्रहविषयत्वाप्रसिद्धेः सामग्रीति। न चैक एव यत्र ज्ञानग्राहकसामग्रीजन्योग्रहस्तत्र साध्याप्रसिद्धेर्यावत्त्वमपि दुर्वचमिति वाच्यम्, यावत्पदस्य व्यापकतापरत्वात्। तथा च विषयितासम्बन्धेन तादृशसामग्रीजन्यग्रहत्वव्यापकमित्यर्थः। व्यापकत्वञ्च विषयितासम्बन्धावच्छिन्ना या तद्ग्रन्निष्ठान्योऽन्याभावप्रतियोगितावच्छेदकता तच्छून्यत्वम्। अथ सामग्रीपदस्य यावत्कारणवाचितया तज्ज्ञानग्राहकसामग्रीजन्यग्रहस्याप्युक्तक्रमेणाप्रसिद्धिः। न च सामग्रीपदं प्रागभावपरमिति वाच्यम, प्रागभावस्य परैरनभ्युपगमादितिचेन्न। तज्ज्ञानग्राहकसामग्रीजन्यगृहत्वपदेन तज्ज्ञानग्रहमात्रवृत्तिकार्यताप्रतियोगिककारणतानिरूपितकार्यताश्रयग्रहवत्वस्य विवक्षितत्वात्। तादृशी च कारणता विषयादेस्तद्व्यक्तित्वेन कारणतामादायैव प्रसिद्धा। न चैवं तज्ज्ञानमात्रवृत्तिकार्यताश्रयग्रहत्वमेव सम्यक् व्यर्थमधिकमिति वाच्यम्। यथा सन्निवेशे वैयर्थ्याभावादन्यथा तज्ज्ञानग्राहकसामग्रीजन्यस्य तज्ज्ञानग्रहरूपतया यावत्तज्ज्ञानग्रहविषयस्यैव सम्यक्त्वेन सामग्रीजन्यत्वविशेषणस्यापि वैयर्थ्यापातादिति प्राहुः।

न च यदि सामान्यसामग्रीतः प्रमायां स्वतोग्राह्यत्वमुररीक्रियते तदाऽप्रमापि प्रमा स्यात् ज्ञानसामान्यसामग्रीग्राह्यत्वाविशेषादिति वाच्यम्। दोषाभावस्यापि तत्र विशेषणत्वाङ्गीकारात्। तथा च दोषा-

भावत्वविशिष्टनिरुक्तसामान्यसामग्रीग्राह्यत्वम् स्वतस्त्वम् । भ्रमस्य दोषजन्यतया दोषाभावघटितसामान्यसामग्रीजन्यत्वाभावान्नाप्रमायां प्रमात्वप्रसङ्गः । न च ज्ञानसामग्रीसत्त्वेऽपि विशेषादर्शनादि पित्तादेरनुविधानादप्रमायां दोषो हेतुरिति चेत्तर्हि यत्र विशेषदर्शनपित्ताद्यभावादिस्तत्रैव विषये प्रमा तदभावन्नेति प्रमायामागन्तुककारणापेक्षेति कथं न परतस्त्वमिति वाच्यम् । आगन्तुकभावहेत्वपेक्षायां परतस्त्वाभ्युपगमात् । दोषाभावागन्तुककारणमादाय प्रमायां परतस्त्वं दुर्वारं, तद्वारणाय भावेति । लक्षणे मात्रशब्दोऽन्यनिरपेक्षत्ववाचकस्तथा च दोषाभावे सत्यन्यनिरपेक्षत्वे सति य । वत्स्वाश्रयीभूतप्रमाग्राहकसामग्रीग्राह्यत्वं तया प्रामाण्यं गृह्यते । यथा चक्षुषा रूपादिमद्द्रव्यगृह्यमाणे तेनैवान्यनिरपेक्षतया तद्गतद्रव्यत्वघटत्वादीनां ग्रहोऽपि निर्विवादस्तद्वत् ।

न च प्रामाण्यस्य स्वतस्त्वे प्रामाण्यसंशयो न स्यादिति वाच्यं । दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् संशयोपपत्तेः । किञ्च येषां मते अनुव्यवसायज्ञानं तद्ग्राह्यञ्च ज्ञानप्रामाण्यं तेषां मते परतस्त्वप्रवेशोदुर्वारः । आगन्तुकभावरूपहेत्वन्तरापेक्षायाअङ्गीकारात् तेनैव स्वतस्त्वपक्षभङ्गः । अप्रामाण्यन्तु इदं रज्जौ सर्पज्ञानमप्रमाणं विपरीतप्रवृत्तिजनकत्वात् , शुक्तिरजतप्रवृत्तिवदित्यनुमानेनगृह्यते तस्य तदभाववति तत्प्रकारकत्वलक्षणस्य दोषमात्रप्रयोज्यत्वयोगेन दोषाभावे सत्यन्यनिरपेक्षत्वेसति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वाभावादिति प्रामाण्यस्वतस्त्वनिरूपणम् ।

न तावद्ब्रह्मणः प्रत्यक्षप्रमाणविषयत्वं सम्भावनार्हम् , अतीन्द्रियत्वात् । यद्यपि ब्रह्मणः सर्वव्यापकत्वेनेन्द्रियेष्वपि सत्वाविशेषात् कथं तत्सन्निकर्षानर्हत्वं तथापि तस्य व्यापकत्वेन सर्वत्र सत्वेऽपि करणानां तत्प्रकाश्यत्वे तत्प्रकाशकत्वं वक्तुमशक्यम् । न तावत्प्रमाण विषयभावे पदार्थसद्भावमात्रं प्रयोजकं, किंतु प्रामाणनिष्ठा तद्ग्रहणार्हा तच्छक्तिरेव । अन्यथा क्षीरादिपाने रसनेन्द्रियेण तन्माधुर्य्ये गृह्यमाणे तत्समानाधिकरणरूपादेरपि ग्रहणापत्तेः । तस्य तत्र सद्भावसाम्यात् । एवं ब्रह्मणः सर्व सत्वेपि करणानां तद्ग्रहणायोग्यताभावान्न तद्विषयत्वमित्यर्थः । यथा वा खद्योतानां सूर्यप्रकाशकत्वायोगस्तत्प्रकाश्यत्वात्तद्वत्प्रकृतेऽपि बोध्यम् । " अणोरणीयान् , तस्य भासा सर्वमिदं विभाति "

इत्यादयः श्रुतयो ब्रह्मणोऽतीन्द्रियत्वे सर्वप्रकाशकत्वे च प्रमाणत्वेनानुसन्धेयाः । नाप्यनुमानगोचरं ब्रह्म हेतुदृष्टान्तविरहात् । नेन्द्रियाणि नानुमानम् । नैषा मतिस्तर्केणापनेयेति" श्रुतेः । "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदिति मनुवचनात् । श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् । निश्चयात्साधयेदर्थं प्रमाणान्तरमेव चेति" स्मृतेः । "तर्काप्रतिष्ठानादिति" सूत्राच्च । नाप्युपमानविषयो ब्रह्म, तस्य सादृश्याभावात् तथाहि सदृशज्ञानप्रयोज्यं सादृश्यं यथा गोसदृशो गवय इति । ब्रह्मसदृशपदार्थान्तराभावेन तत्सादृश्यज्ञानासिद्धेः । "न संदृशे तिष्ठति रूपमस्य, न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादि श्रुतेः । नाप्यर्थापत्तिप्रमाणवेद्यं ब्रह्म, तस्य पीनत्वादिज्ञानवदुपपाद्यज्ञानासिद्धेः । किञ्चार्थापत्तेस्तर्करूपतया तद्विषयत्वस्यानुमाननिराकरणेनैव निरासो बोध्यः । नैषा मतिस्तर्केणापनेयेति श्रुतिश्च । ४ । नाप्यनुपलब्धिगोचरत्वं ब्रह्मणः सम्भावनार्हम् । तस्या अभावज्ञानकरणत्वात् । ब्रह्मणस्तु केवलान्वयित्वेनाभावत्वावच्छिन्नाप्रतियोगित्वात् । अभावस्य ज्ञानेऽनुपलब्धिप्रमाणप्रवृत्तिस्तदभावे प्रवृत्तेरेवासम्भवात् कुतस्तद्विषयता प्रत्याशेतिभावः । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इत्यादि श्रुतेस्तस्य केवलान्वयित्वे मानत्वात् । तस्माच्छास्त्रैकवेद्यमेव ब्रह्मेति तात्पर्यवानाह भगवान् सूत्रकारः "शास्त्रयोनित्वात्" इति शास्त्रमेव योनिर्ज्ञानकारणं ज्ञापकं प्रमाणं यत्र तच्छास्त्रयोनि तस्य भावस्तत्वं तस्मादितिविग्रहः । इतरप्रमाणाविषयत्वे सति शास्त्रैकप्रमाणगोचरं ब्रह्मेति यावत् । सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्र एकी भवन्ति तन्त्वौपनिषदं पुरुषं पृच्छामः । ना वेदविन्मनुते तं बृहन्तमित्याद्यन्वयव्यतिरेकश्रुतिभ्यः । "वेदैश्च सर्वैरहमेव वेद्यो, वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते । नमामः सर्व बचसां प्रतिष्ठा यत्र शाश्वतीत्यादिस्मृतिभ्यश्च ।

नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां विधिना त्वेकवाक्यत्वात् । स्तुत्यर्थेन विधीनां स्युरित्यादिभिः सर्वज्ञेन जैमिनिना सर्वस्यापि वेदस्य क्रियापरत्वेन सूत्रितत्वात्तदन्तःपाति वेदान्तभागस्यापि कर्मण्येव समन्वयो युक्तस्तथात्वे च कथं शास्त्रैकप्रमाणगम्यं ब्रह्मेत्युक्तसिद्धान्तसम्भवः शास्त्रस्य तद्विषयकत्वाभावात् । तथाहि पञ्चप्रकारवाक्यराशि-

रूपोवेदः। विधिमन्त्रनामधेयनिषेधार्थवादरूपः। तत्र विधिर्नाम प्रयोजनवदर्थविधानेनार्थवान्। स चाप्राप्तमर्थं विधत्ते यथाऽग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्राप्राप्तप्रयोजनवद्धोमरूपमर्थं विधत्ते होमेन भावयेदिति वाक्यार्थः। यत्र प्रकारान्तरेण प्राप्तं कर्म तदुद्देशेन गुणमात्रं विधत्ते। यथा दध्ना जुहुयादित्यत्र होमस्याग्निहोत्रवाक्यप्राप्तत्वात् तदुद्देशेन दधिमात्रगुणविधानम्। दध्ना होमं भावयेदिति वाक्यार्थः। यथाहुः—"सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादतेति"। सर्वत्रेत्यत्र धातोरिति योजनीयम् विधिशक्तेर्गुणे उपसंक्रमात्। यत्र तूभयमप्यप्राप्तं तत्र विशिष्टं विधत्ते, यथा सोमेन यजेतेत्यत्र "न चेदन्येन शिष्टा" इति सूत्रात्। अन्येन चेद् यदि शिष्टा उपदिष्टा न स्युस्तदा विशिष्टाविधानमिति सूत्रार्थः। सोमयागयोरुभयोरप्यप्राप्तत्वात् सोमविशिष्ठयागविधानम्। सोमवता यागेनेष्टं भावयेदित्यर्थः। न चोभयविधाने वाक्यभेद इति वाच्यम्, विशिष्टस्यैकत्वात्। विशिष्टविधौ मत्वर्थलक्षणा सोमपदेन मत्वर्थो लक्ष्यते। सोमवतेति मत्वर्थलक्षणां विना सोमस्यान्वयासम्भवात्। किञ्च यजेतेत्यत्र अस्त्यंशद्वयं यजिधातुः प्रत्ययश्च। प्रत्ययेऽप्यंशद्वयम्, आख्यातत्वं लिङ्त्वंच। आख्यातत्वं दशसु लकारेषु वर्त्तते, लिङ्त्वञ्च पुनर्लिङ्येव। तत्राख्यातलिङ्त्वाभ्यां भावनैवोच्यते। तत्र भावना नाम प्रवृत्तेर्भवितु र्भवनानुकूलो भावुकव्यापारविशेषः प्रेरणाख्यः। प्रवृत्तिहेतुत्वेन सर्वलोकानुभवसिद्धः। राज्ञा प्रेरितो बालेन प्रेरितोऽहं मित्रेण प्रेरितोऽहमिति प्रवर्त्तना इति वदन्ति, सा च प्रवर्त्तकराजादिनिष्ठा। तत्रोत्कृष्टस्य निकृष्टं प्रति प्रवर्त्तना आज्ञा प्रेषणा चोच्यते निकृष्टस्योत्कृष्टम्प्रति प्रार्थना याञ्चाऽध्येषणेति चोच्यते। समस्य समं प्रति उत्कर्षनिष्कर्षोदासीन्येन प्रवर्त्तनानुज्ञानुमतिश्चोच्यते। ते चाज्ञादयो ज्ञानविशेषा इच्छाविशेषाश्चेतनधर्मा लोके प्रसिद्धाः। वेदे तु विधिना प्रेरितः करोमीति व्यवहर्त्तारो भवन्ति। तत्र स्वयमचेतनत्वादपौरुषेयत्वाच्च वैदिकस्य विधेर्न चेतनधर्मेणाज्ञादिना प्रवर्त्तकता सम्भवति।

अतः स्वधर्मेणैव साऽभ्युपगन्तव्या, गत्यन्तरासम्भवात्। स एव धर्मश्चोदना प्रवर्त्तना प्रेरणा विधिः उपदेशः शब्दभावनेति चोच्यते। प्रवर्त्तना हि प्रवृत्तिहेतुर्व्यापारः। विधिशब्दस्य चाख्यातत्वेन

दशलकारसाधारण्येन पुरुषप्रवृत्तिरूपार्थभावनां प्रति वाचकत्वं तज्ज्ञानहेतुत्वमित्यर्थः । सा च ज्ञातैवानुष्ठातुं शक्यत इति शब्दभावनाधीहेतोरपि शब्दस्य तद्धेतुत्वं परम्परया भवत्येव ज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात् । ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने मानाभावात् । ज्ञानजनकश्च व्यापारो विधिज्ञानं विधिनिष्ठशक्तिज्ञानं शक्तिविशिष्ट विधिज्ञानञ्च । तत्राद्ययोरन्यतरस्य शब्दभावनात्वं, तृतीयस्य तु तत्र कारणत्वमिति विवेकः । तथा च विधिना स्वज्ञानं जन्यते प्रवर्त्तनात्वेनाभिधीयतेऽपीति विधिज्ञानमेव शब्दभावना । तस्याञ्च पुरुषप्रवृत्तिरूपार्थभावनैव भाव्यतयाऽन्वेति, करणतया च प्रवृत्तिवाचकशक्तिमद्विधिज्ञानमेव । भावनासाध्यस्यापि फलावच्छिन्नां प्रति करणत्वं, फलकरणत्वादेव यागस्यैव स्वर्गभावनां प्रति न विरुद्ध्यते । तथा च पुरुषः स्वप्रवृत्तिं भावयेत् । केनेत्याकांक्षायां पुरुषप्रवृत्तिवाचकशक्तिमत्तया ज्ञानेन विधिशब्देनेति करणांशपूर्णम् । इयं गौः क्रय्येति लौकिकविधौ बहुक्षीरा जीवद्वत्सा स्त्र्यपत्या समांसमीनेत्यादि लौकिकार्थवादवत् । नन्वाख्यातत्वेन विधिशब्दादुपस्थिता पुरुषप्रवृत्तिर्भाव्यतयाऽन्वेतीति निर्विवादः

करणन्तु कथमन्वेति तस्यानुपस्थितत्वादिति चेच्छ्रूयताम् । विधिशब्दस्तावच्छ्रवणेनोपस्थापितः, तस्य पुरुषप्रवृत्तिवाचकशक्तिरपि स्मरणेनोपस्थापिता । तदुभयवैशिष्ट्यं तन्निष्ठा ज्ञानता च मनसेति वाचकशक्तिमत्तया ज्ञातो विधिशब्द उपस्थित एव; अनेन यच्छक्नुयात्तद्भावयेदिति प्रतिशब्दं स्वाध्यायविधितात्पर्य्याच्छब्दातिरिक्तेनापि मानेनोपस्थितं शाब्दबोधे भासत एव । यथा ज्योतिष्टोमादिनामधेयं,यथा वा लिङ्गविनियोज्यमन्त्रः । तदुक्तम्, अनुपस्थितविशेषणा विशिष्टबुद्धिर्न भवति नत्वनभिहितविशेषणेति संक्षेपः । स च विधिर्द्विविधः, अभिधानाभिधेयभेदात् । तत्र कृतिसाध्यत्वे सतीष्टसाधनत्वमभिधेयविधित्वम् । अयमेव विधिर्लिङर्थः । एतेन भावनानियोगवादो निरस्तो बोध्यः, प्रमाणाभावात् । अभिधानविधिश्चतुर्धा—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिराद्यः । यथाऽग्निहोत्रं जुहोतीत्यत्र कर्मणः करणत्वेनान्वयः । होमेनेष्टं भावयेदिति न तु होमं कुर्यादिति । तथात्वे च साध्यस्यसाध्यान्तरान्वयायोगेनाधिकारवाक्यगतफलसम्बन्धो न स्यात् ।

करणत्वेन होमेनेष्टं भावयेदित्यन्वये किं तदिष्टमित्याकांक्षायां फलविशेषसम्बन्धो घटते । ननूत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं शाब्दबोध इति चेन्न । विधिश्रुतेरेवेष्टबोधकत्वात् । सा हि पुरुषार्थे पुरुषं प्रवर्त्तयन्ती कर्मणः फलसम्बन्धं बोधयति, तस्मादुक्तविधौ कर्मणः करणत्वेनान्वयः । १ । अङ्गसम्बन्धबोधको विधिः विनियोगविधिः । यथा दध्ना जुहोतीति तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते । दध्ना होमं भावयेदित्येतस्य विधेः सहकारिभूतानि षट् प्रमाणानि । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि । एतत्सहकृतेन विधिनाङ्गत्वं परोद्देश्यप्रवृत्तकृतिव्याप्यत्वरूपं पराऽर्थ्यापरपर्यायं ज्ञाप्यते । तत्र पदान्तरनिरपेक्षो रवः श्रुतिः सा त्रिधा–विधात्री, अभिधात्री, विनयोक्त्री च । लिङाद्यात्मिका विधात्री, व्रीह्यादि श्रुतिरभिधात्री । यस्य च शब्दस्य श्रवणादेव सम्बन्धप्रतीतिः साविनियोक्त्री सा त्रिविधा-विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपाचेति । तत्र विभक्तिश्रुत्याऽङ्गत्वं, यथा 'व्रोहिभिर्यजेतेति' तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् । 'व्रीहीन्प्रोक्षतीति' द्वितीयाविभक्त्या श्रुत्या प्रोक्षणस्य व्रीह्यङ्गत्वं तच्च प्रोक्षणमपूर्वसाधनं न तु व्रीहिस्वरूपसाधनमानर्थक्यात् । "इमामगृभ्णन्रशनां ऋतस्य अश्वाभिधानीमादत्ते" इत्यत्र द्वितीयया श्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम् । 'आहवनीये जुहोती' त्यत्राहवनीयस्य सप्तमीश्रुत्या होमाङ्गत्वमेवमन्योऽपि विनियोगो विभक्तिश्रुत्या द्रष्टव्यः । 'पशुना यजेत' त्यत्रैकत्वपुंस्त्वयोः सामानाभिधानश्रुत्या कारकाङ्गत्वम् । यजेतेत्याख्याताभिहितसङ्ख्याया भावनाङ्गत्वम् । समानाभिधानश्रुतेरेकपद श्रुत्या च यागाङ्गत्वम् । न चामूर्त्तस्य कथं यागाङ्गत्वमिति वाच्यम् । कर्त्तृपरिच्छेदद्वारा तदुपपत्तेः कर्त्ता चाक्षेपलभ्यः । आख्यातेन भावनोच्यते । सा कर्त्तारं विनाऽनुपपन्ना कर्त्तारमाक्षिपतीति बोध्यम् । इति श्रुति विचारः ।

सामर्थ्यं लिङ्गम्, यत्र सामर्थ्यादर्थ निर्णयस्तल्लिङ्गम् । "सामर्थ्यं सर्वं भावानां लिङ्गमित्यभिधीयते" इति बचनात् । तेन श्रुतेरङ्गत्वम् । यथा "बर्हिं देवसदनं दामी"तिमन्त्रस्य कुशलवनाङ्गत्वम् । स हि लवनं प्रकाशयितुं समर्थः, तच्च द्विधा सामान्यसम्बन्धबोधकप्रमाणान्तरापेक्षं, तदनपेक्षंचेति । यत्र यदन्तरेनुष्ठानं न सम्भवति तस्य तदङ्गत्वम् । तद-

पेक्षं केवललिङ्गात्। यथार्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्। नह्ययर्थज्ञानमात्रेण कर्मानुष्ठानं सम्भवति यदन्तरेण यत् सम्भवति तस्य तदर्थत्वं तदनपेक्षं यथोक्तस्यमन्त्रस्य लवनाङ्गत्वम्। लवनं हि उपायान्तरेण कर्त्तुं शक्यमतो न मन्त्रो लवनस्वरूपार्थः सम्भवति, किन्त्वपूर्वसाधनीभूतलवनप्रकाशनार्थः तत्वञ्च सामर्थ्यमात्रादवगम्यते। लवनप्रकाशनमात्रे सामर्थ्यात्। अतोऽवश्यं प्रकरणादिसामान्यसम्बन्धबोधकं स्वीकार्यम्। दर्शपौर्णमासप्रकरणे हि मन्त्रपाठादेवमवगम्यते। अनेकमन्त्रेण दर्शपौर्णमाससम्बन्धिकिञ्चित्प्रकाश्यतेऽन्यथा प्रकरणपाठवैयर्थ्य प्रसङ्गात्। किन्तदपूर्वसम्बन्धिप्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते। तद्धि बर्हिः संस्कारद्वाराऽपूर्वसम्बन्धीति सामर्थ्यान्मन्त्रस्य तदर्थत्वे सति नानर्थक्यम्। तस्माद्बर्हीति मन्त्रस्य प्रकरणाद्दर्शपौर्णमाससम्बन्धितयाऽवगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम्।

॥ इति लिङ्गविचारः ॥

समभिव्याहारो वाक्यम्। समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम्। यथा "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" अत्र न द्वितीयादिविभक्तिः श्रूयते, केवलं पर्णताजुह्वोः समभिव्यापारमात्रं तस्मादेव पर्णताया जुह्वङ्गत्वम्। न चानर्थक्यं जुहूशब्देनापूर्वलक्षणात्। तदयं वाक्यार्थः—पर्णतया अवदत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदिति। एवञ्च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेत्यवगम्यते, इति न पर्णताया वैयर्थ्यमितिवाक्यनिर्णयः॥

उभयाकांक्षा प्रकरणं, यथा– "प्रयाजादिषु समिधोयजतीत्यत्र" हि दृष्टविशेषस्य निर्देशात्। समिद्यागेन भावयेदिति किमित्युपकार्याकांक्षया दर्शपौर्णमासाभ्यां स्वर्गं भावयेत्। कथमित्यत्रोपकारकाकांक्षया प्रयाजानां दर्शपौर्णमासाङ्गत्वं सिद्ध्यतीति लक्षणसमन्वयः। तदिदं प्रकरणं क्रियाया एव विनियोजकं न द्रव्यगुणयोः। तयोस्तु क्रियायोगाद्विनियोजकं कुत इति चेच्छृणु। यजेत स्वर्गकाम इत्यत्राख्यातांशेनार्थीभावनाऽभिधीयते। भावयेदिति सा चांशत्रयमपेक्षते। किम्भावयेत् केन भावयेत्। कथं भावयेदिति। तत्र भाव्याकांक्षायां स्वर्गो भाव्यतयाऽन्वेति। स्वर्गं भावयेदिति। करणाकांक्षायां समानपदोपात्तो

यागः करणतयाऽन्वेति यागेन स्वर्गं भावयेदितिः ततः कथमिति कथ-म्भावाकांक्षा जायते । तस्याञ्च सत्यां यत्सन्निधौ पठितमश्रूयमाणफलञ्च क्रियाजातं तदेवोपकार्य्याकांक्षया इतिकर्त्तव्यत्वेनान्वयमनुभवितुं योग्यम् क्रियाया एक लोके कथम्भावान्वयदर्शनात् । नहि कुठारेण छिन्द्यात्क-थमित्यपेक्षायां हस्त इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति । किन्तर्हि हस्तेनोद्यम्य निपात्येति उच्चार्यमाणे उद्यमननिपतन एव हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सार्वजनीनमेतत् । किञ्च कथ-म्भावाकांक्षा नाम करणगतप्रकारांक्षा थमुनः प्रकारवाचित्वात् । सामान्यस्य भेदको विशेषः प्रकारः सामान्यञ्च क्रियारूपमेवाख्यातेनो-च्यते । 'यजेत स्वर्गकाम' इत्यस्यायमर्थः । यागेन तथा कर्तव्यं यथा स्वर्गो भवतीति । क्रियासामान्यस्य च विशेषः क्रियैव भवति । नहि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति । एवञ्च करणगत क्रियाविशेषाकांक्षापरनामधेयकथम्भावाकांक्षायां क्रियैवान्वतीतियुक्तम् । स च करणगतक्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तः क्रियारूप एवेतियुक्तं तस्य प्रकरणेन ग्रहणात् । तस्य च करणगत त्वं तदुप कारकत्वमेव । तेन विना यागेनापूर्वाजननात् । न हि उद्यननिपातन-व्यतिरेकेण कुठारेण द्वैधीभावो जायते । तत्सिद्धं कथं भावाकांक्षायां क्रियान्वेतीति । अतएव द्रव्यदेवतयोर्यागसम्पादनद्वाराऽन्वय इति साम्प्रदायिकैरुक्तमिति प्रकरणविचारः ॥ ४ ॥

देशसामान्यं स्थानम् , तच्च द्विविधम्–पाठसादेश्यमनुष्ठानसादे-श्यञ्चेति । यमाहुः । "तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः । पाठा-नुष्ठानसादेश्याद्विनियोगस्य करणमिति । पाठसादेश्यमपि द्विविधं यथासङ्ख्यपाठः सन्निधिपाठश्च । तत्रैन्द्राग्नमेकादशकपालं निर्वपेत् वैश्वानरं द्वादशकपालमिति । एवं क्रमविहितेष्टिष्विन्द्राग्नी रोचनादिवे त्यादीनां याज्यानुवाक्यायुगलानां मन्त्राणां यथासङ्ख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं विनियोगः स यथासङ्ख्यपाठात् । प्रथम पठितमन्त्रस्य हि वैयर्थ्याकांक्षायां प्रथमतोविहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । यानि तु वैकृताङ्गानि प्राकृताङ्गानुवादेन विहितानि सन्दंशपतितानि तेषां विकृत्यर्थत्वं सन्निधियाठात् । तेषांहि कैमर्थ्य काङ्क्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सम्बद्ध्यते उपस्थित त्वात् । पशुधर्माणामग्निषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपसद

ह्नि अग्निषोमीयः पशुरनुष्ठीयते। तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां कैसर्थ्याकांक्षायामनुष्ठेयत्वेनोपस्थितं पशवपूर्वमेव भाव्यत्वेन सम्बद्धयते। अतो युक्तं तेषामनुष्ठानसादेश्यात्तदर्थत्वमिति संक्षेप इति स्थानविचारः ॥ ५ ॥

अथ यौगिकः शब्दः समाख्या, सा द्विधा-वैदिकी लौकिकी च। होतृचमस इत्यत्र होतुश्चमस भक्षणाङ्गत्वं वैदिक्या समाख्ययाऽवगम्यते। अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या चावगम्यते। आध्वर्यवमिति समाख्याविचारः ॥ ६ ॥

एतेषां पूर्वपूर्वमेव प्राबल्यमुत्तरोत्तरस्य दौर्बल्यं बोध्यमिति प्रमाण संग्रहः। एवं निरूपितानि श्रुत्यादिषट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपौर्णमासाभ्यां यजेतेत्येवं रूपेण यानि विनियुज्यन्ते तान्यङ्गानि तानि द्विविधानि-सिद्धरूपाणि क्रियारूपाणि च। तत्र सिद्धानि जातिद्रव्यसङ्ख्यादीनि, तानि दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि, गुणकर्माणि प्रधानकर्माणि च। तान्येव सन्निपत्योपकारकाणि। आरादुपकारकाणीति चोच्यन्ते। तत्र कर्माङ्ग द्रव्याद्युद्देशेन विधीयमानं सन्निपत्योपकारकं यथाऽवघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थञ्च। दृष्टार्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति इदमेवाश्रयीकर्मेत्युच्यते। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् यथा प्रयाजादि। एतद्द्विविधमप्यङ्गजातं न यागस्वरूपप्रयुक्तं स्वरूपे आनर्थक्यात्। तदन्तरेणापि तत्सिद्धेः किन्त्वपूर्वप्रयुक्तमेव। न हि तदन्तरेणापूर्वं भवतीत्यत्र किमपि प्रमाणमस्ति तस्यादृष्टत्वात्। तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूप उपयोगादुत्पत्त्याऽपूर्वार्थत्वम्। आरादुपकारकाणान्तु स्वरूप उपयोगात्परमापूर्वार्थत्वमिति विनियोगविधिः।

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैक वाक्यतामापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन् विलंबे प्रमाणाभावात्। अविलम्बापरपर्य्यायं प्रयोगप्राशुभावं विधत्ते। स चाविलम्बो नियते क्रमे आश्रयणे भवति। अन्यथा हि किमेतदनन्तर-

मेतत्कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते । तत्र क्रमो नाम विततिविशेषः पौर्वापर्य्यरूपो वा । तत्र च षट् प्रमाणानि, श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिभेदात् । तत्र क्रमपरं वचनं श्रुतिः, तद्द्विविधं—केवलक्रमपरम्, तद्विशिष्टपदार्थपरञ्चेति । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम् । वेदिकरणादेर्वचनान्तरेण विहितत्वात् । वेदो दर्भमुष्टिः । वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् । अत्र भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् । यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः, यथाऽग्निहोत्रयवागूपाकयोः अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते, स चायं पाठक्रमाद्बलवान् । यथा पाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधो ऽदृष्टार्थत्वञ्चस्यात् । नहि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्टप्रयोजनमस्ति । अर्थपदार्थबोधवाक्यानां यः क्रमः पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतानि अर्थप्रत्ययं जनयन्ति। यथार्थप्रत्ययश्च पदानामनुष्ठानात् । स च पाठो द्विविधः, मन्त्रपाठो ब्राह्मणपाठश्चेति । अथ प्रकृतौ नाना देशानां पदार्थानां विकृतौ वचनादेकस्मिन्देशेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानम् । इतरयोस्तु पश्चादयं यः क्रमः स स्थानक्रमः । स्थानं नामोपस्थितिः । यस्य देशेऽनुष्ठीयन्ते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । तथा हि ज्योतिष्टोमे त्रयः पशुयागाः— अग्निषोमीयः, सवनीयः, अनुबन्ध्यश्चेति । ते च भिन्न देशाः, अग्निषोमीयः औपवसत्थ्येह्नि, सवनीयः सूत्याकाले, अनुबन्ध्यस्त्वन्ते । साद्यस्क्रोनाम सोमयागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः तत्र त्रयोऽपि पशुयागाः साद्यस्क्रे चोदकप्राप्ताः तेषाञ्च तत्र साहित्यं श्रुतं 'सह पशूनालभेत' इति । तच्च साहित्यं सवनीयदेशे । तस्य प्राधान्यप्रत्यासत्तेः स्थानातिक्रमसाम्याच्च । सवनीय देशेऽनुष्ठाने क्रियमाणे अग्निषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति । अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानाति क्रममात्रम् ।

अनुबन्ध्यस्य तु स्वस्थानातिक्रममात्रं सवनीयस्यानतिक्रमश्च

स्यात् । एवमनुबन्ध्यदेशेऽग्निषोमीयस्य सवनीयस्य द्रष्टव्यः । तथा च सवनीयदेशे सर्वेषाममुष्ठाने कर्त्तव्ये सवनीयस्य प्रथममनुष्ठानम् । आश्विनग्रहग्रहणानन्तरं हि सवनीयदेशे प्रकृतौ । आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति । आश्विनग्रहग्रहणानन्तरं तस्य विहितत्वात् ! तथा च साद्यस्क्रेऽप्याश्विनग्रहग्रहणेकृते सवनीय एवोपस्थितो भवतीति युक्तम् । तस्य स्थानात्प्रथममनुष्ठानम्, इतरयोस्तु पश्चादित्युक्तम् ।

अथ प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः । येन क्रमेण प्रधानानि क्रियन्ते तेनैव चेत् क्रमेण तेषामङ्गान्यानुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैः तुल्यं व्यवधानं भवति । व्युत्क्रमेण त्वनुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानम् । अन्येषामत्यन्तव्यवधानं स्यात् तच्चायुक्तं प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः । अतएव प्रयाजशेषेणादौ आग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः । आग्नेयैन्द्रयागयोः पौर्वापर्य्यात् । अत्र द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यम् एकान्तरितव्यवधानं भवति । आग्नेयहविरभिघारणाग्नेययागयोरैन्द्रयागहविरभिघारणेन व्यवधानात्ऐन्द्रहविर्घारणैन्द्रयोगयोश्चाग्नेययागेन व्यवधानात् । अतश्चादौ आग्नेयहविरभिघारणम् । तत ऐन्द्रस्य हविषः तत आग्नेययागस्तत ऐन्द्रो याग इत्येव क्रमो मुख्यक्रमात्सिद्धो भवति । यदि त्वादौ ऐन्द्रहविषोभिघारणं तत आग्नेयस्य क्रियते तदा याज्यानुवाक्यस्य क्रमवशादादावाग्नेयस्यास्यानुष्ठानादाग्नेययाग तदङ्गहविरभिघारणयोरत्यन्तव्यवधानं स्यात् । तच्च न युक्तम्, अतोयुक्तः प्रयाज शेषाभिघारणस्य मुख्यक्रमात्क्रम इति । अथ सहप्रयुज्यमानेषु प्रधानेषु सन्निपतितानामङ्गानामावृत्त्यानुष्ठाने कर्त्तव्ये द्वितीयादिपदानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः । यथा प्राजापत्याङ्गेषु प्राजापत्यो हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्यस्य तृतीयानिर्देशात् सेति कर्तव्यताका एककालेन विहिता अतस्तेषां तदङ्गानां चोपकरणनियोजनप्रभृतीनां साहित्यं सम्पाद्यम् । तत्र प्राजापत्यानां सम्प्रतिपन्नदेवताकत्वेनैकस्मिन्कालेऽनुष्ठानादुत्पद्यते साहित्यम् । तदङ्गानांचैकस्मिन्कालेऽनुष्ठानमशक्यम् । नह्यनेकेषां पशूनामुपकरणमेक-

स्मिन्काले कर्त्तुं शक्यम् । अतः साहित्यमव्यवधानेनानुष्ठानात्सम्पाद्यम्। एकस्योपकरणं कृत्वाऽपरस्योपकरणमिति तत्सिद्धं प्रथमानुष्ठितपदार्थ क्रमाद्यो द्वितीयपदार्थ क्रमः स प्रवृत्तिक्रम इति । तदेवं निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधि व्यापारः ।

अथ फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं नाम कर्मजन्यफलभोक्तृत्वम् । स च 'यजेत स्वर्गकाम' इत्येवं रूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवते पुरोडाशमष्टधा कपालं निर्वपेत् । इत्यादिभिस्त्वग्निदाहादौ निमित्ते कर्मविदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयफलस्वाम्यं प्रतिपाद्यते । तच्च फलस्वाम्यं तस्यैव योधिकारिविशेषणविशिष्टः । अधिकारिविशेषणञ्च तदेव यत् पुरुषविशेषणत्वेन श्रुतम् । अतएव राजा राजसूयेन स्वाराज्यकामो यजेतेत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधता न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते किन्तु राज्ञः सतः । तत्कामस्येव राजत्वस्यापि अधिकारिविशेषणत्वश्रवणात् । किञ्चित्पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति । यथाऽध्ययनविधिसिद्धा विद्या अग्निसाध्येषु कर्मसु आधानसिद्धा अग्निमत्ता। सामर्थ्यञ्च एतेषां पुरुषविशेषविशेषणत्वेनाश्रवणेऽपि अधिकारिविशेषणत्वमस्त्येव । उत्तरक्रतुविधीनां ज्ञानापेक्षशक्तेरभावेनाध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः । अतएव शूद्रस्य न यागादावधिकारः तस्याध्ययनविधिसिद्धज्ञानाभावात् । आधानसिद्धाग्न्यभावाच्च । अध्ययनस्योपनीताधिकारित्वात् । उपनयनस्य चाष्टवर्षं ब्राह्मणमुपनयेदित्यादिना त्रैवर्णिकाधिकारत्वात् ।

तदेवं निरूपितं चतुर्विधभेदनिरूपणविधेः प्रयोजनवदर्थपर्य्यवसानम् । मन्त्राणाञ्च प्रयोगसमवेतार्थस्मारकतयार्थवत्वं न तु तदुच्चारणमदृष्टार्थम् । दृष्टे सम्भवति अदृष्टस्यान्याय्यत्वात् । न च दृष्टस्य प्रकारान्तरेणापि सम्भवान्मन्त्राम्नानस्यानर्थक्यमिति वाच्यम् । मन्त्रैरेव स्मर्त्तव्यमिति विध्याश्रयणात् । साधनद्वयस्य पक्षे प्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः । तथाहुः—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिस-

ङ्क्ष्य ति गीयते " इति। अस्यार्थः—यस्ययदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो: विधिः सोऽपूर्वविधिः। यथा—'यजेत स्वर्गकाम' इति। यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते किन्त्वनेन विधिनेति भवत्ययमपूर्वविधिः। पक्षे प्राप्तस्याप्राप्तांशपूरको यो विधिः स नियमविधिः। यथा—व्रीहीनवहन्तीत्यनेन विधिनाऽवघातस्य न वैतुष्यार्थत्वं बोध्यतेऽन्वयव्यतिरेकसिद्धत्वात् किन्तु नियमः स चाप्राप्तांशपूरको वैतुष्यस्य नानोपायसाध्यत्वात्। यस्यां दशायामवघातं परित्यज्योपायान्तरं ग्रहीतुमारभ्यते तस्यां दशायामवघातस्याऽप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते।

अतश्च नियमविधावप्राप्तांश पूरणात्मको नियम एव वाक्यार्थः। उभयस्य युगपत्प्राप्तौ इतरव्यावृतिपरो विधिः परिसङ्ख्याविधिः। यथा—"पञ्च पञ्चनखा भक्ष्या" इति इदं वाक्यं न भक्षणविधिपरं तस्य रागतः प्राप्तत्वात्। नापि नियमपरं पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षे प्राप्त्यभावात्, किन्तु अपञ्चनखाभक्षणस्याप्राप्तत्वात्। तत्परमेवेदं वाक्यम्। अपञ्चनखा न भक्ष्या इति वाक्यार्थः। सा परिसङ्ख्या द्विधा श्रौती लाक्षिणकी चेति। तत्र यथात्र ह्येवावपन्ति इत्यत्र श्रोती। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। 'पञ्चपंचनखा भक्ष्या' इति तुलाक्षिणकी, इतरनिवृतिवाचकपदस्याभावात्। अतएवैषा त्रिदोषग्रस्ता। दोषत्रयंच श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। श्रुतस्य पंचनखभक्षणस्य हानादश्रुतापञ्चनखभक्षणस्य निवृति कल्पनात्। प्राप्तस्यापंचनखभक्षणस्य बाधनात्। तत्र दोषत्रये दोषद्वयं शब्दनिष्ठम्। प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति विवेकः। तस्मान्मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणान्न मन्त्राम्नानस्यानर्थक्यमिति सिद्धमतो युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनार्थवत्वम्। तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशने प्रयोजनं सम्भवति तदा तत्रैव विनियोगः। येषान्तु न सम्भवति तेषां यत्र सम्भवस्तत्रोत्कर्षः। येषां तु क्वापि न सम्भवति तदुच्चारणस्य त्वगत्याऽदृष्टार्थत्वं सर्वथाऽपि तु तेषां नानर्थक्यम्। इति मन्त्रव्यवस्था।

अथ नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्वम्। तथाहि—'उद्भिदा यजेत पशुकाम' इत्यत्रोद्भिच्छब्दो यागनामधेयं तेन विधेयार्थ

परिच्छेदः क्रियते। अनेन हि वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते। यागसामान्यस्य चाविधेयत्वात् याग विशेष एव विधीयते। तत्र कोऽसौ विशेष इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति विज्ञायते। उद्भिदा यागेनेति सामानाधिकरण्येनान्वयात् । तस्य यजिना सामानाधिकरण्यं न नीलोत्पलवत्। तत्र हि उत्पलशब्दस्यार्थादुत्पलत्वादन्यो नील शब्दस्य वाच्यार्थोऽस्ति नीलगुणः। लक्षणयातु नीलशब्दस्य द्रव्य परत्वेन सामानाधिकरण्यम्। किन्तर्हि वैश्वदेव्यामिक्षाशब्दवत्।

वैश्वदेवीशब्दस्य देवतातद्धितत्वात् तस्य च सास्य देवतेति सर्वनामार्थे स्मरणात् सर्वनाम्नांचोपस्थितविशेषवाचित्वेन विशेषपरत्वम् तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायामामिक्षापदसान्निध्यादामिक्षारूपोविशेष इत्यवगम्यते। यथाहुः--'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः। आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणमिति। तथा श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना प्रतीयते। तदर्थस्तद्धितेनैव त्रयाणामेकवाच्यतेति। तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यम्। एवं सामान्यस्याभिधेयत्वाद्यज्यवगतयागविशेष समर्पकत्वेन नामधेयस्य यजिसामानाधिकरण्यम् तस्मान्नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्वम् यथाहुः। तदधीनत्वाद्यागविशेषसिद्धेरिति नामधेयानां निर्णयः।

अनर्थहेतुभ्यः सकाशात्पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषानुबन्धित्वं। तथाहि—यथाविधयः प्रेरणामभिदधतः स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्त्येवं न कलञ्जं भक्षयेदित्यादयो निषेधा अपि निवर्त्तनामभिदधतः स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादे रनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्त्तयति। ननु कथं निषेधानां निवर्त्तनाप्रतिपादकत्वं यावता न भक्षयेन्न हन्तव्य इत्यादावव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्त्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयते ततश्च यथा यजेतेत्यादौ यागकर्त्तव्यता वाक्यार्थ एवं निषेधेषु तद्धात्वर्थवर्जनकर्मता वाक्यार्थो न निवर्त्तनेति चेन्मैवम्। अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात्। नह्यन्योपसर्जनमन्येनान्वेति। मा भूद्—राजपुरुषमानयेत्यत्र राज्ञ

आनयनान्वितत्वं ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वयः। नापि कलञ्जादिपदार्थैरन्वयस्तेषामपिकारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञर्थेनान्वयायोगात्। एकहायन्या इवारुण्येन, अतश्चान्वयायोगात् नञर्थः प्रत्ययार्थे न सम्बद्ध्यते तस्य प्राधान्यात् क्रयभावने वारुण्यादीनि। तत्रापि नाख्यातांशवाच्ययाऽर्थीभावनया। तस्यापि लिङ्त्वाद्यंशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितत्वात्। अतो लिङ्त्वांशेन नञ् सम्बद्ध्यते। तस्य सर्वापेक्षया प्राधान्यात्। नञश्चैष स्वभावो यत् स्वसम्बन्धिप्रतिपक्षबोधकत्वम्। नास्तीत्यत्र ह्यस्तीति सत्वशब्देन सम्बद्ध्यमानो नञ् सत्वप्रतिपक्षमसत्वं गमयति तदिह लिङर्थस्तावप्रवर्त्तना। अतस्तेन सम्बद्ध्यमानो नञ् प्रवर्तनाप्रतिपक्षं निवर्तनां गमयति। विधिवाक्यश्रवणे अयं मां प्रवर्तयतीति प्रवर्तनवन्निषेधश्रवणे अयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापारप्रवर्तनायाः प्रतीतेः। अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः, एवञ्च विधिनिषेधयोर्भिन्नार्थत्वं सिद्धम्भवति। हननादिवर्जनकर्त्तव्यतावाक्यार्थपक्षे तु कर्त्तव्यताया एवोभयत्र प्रतिपाद्यत्वात् तयोरेकार्थत्वं स्यात्। तच्च न युक्तम् यथाहुः "अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः। दृश्यते तादृगेवेदं विधानप्रतिषेधयोरिति। इति निषेधविचारः।

अथार्थवादः। यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यं, तथार्थवादानामपि तदुपात्तत्वाविशेषादानर्थक्यानुपपत्तेः। तेषां स्वार्थप्रतिपादने प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्य्यवसानं वक्तव्यम्। ते चार्थवादा द्विविधाः—विधिशेषा निषेधशेषाश्च। तत्र 'वायव्यं श्वेतमालभेते'त्यादि विधिशेषाणां 'वायुर्वै क्षेपिष्ठा देवते'त्यादीनामर्थवादानां विधेयार्थस्तावकतयाऽर्थवत्त्वं; 'बर्हिषि रजतं न देयमि'त्यादिविशेषाणां 'सोऽरोदी'दित्यादीनामर्थवादानान्तु निषेध्यनिन्दकतयाऽर्थवत्त्वम्। अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते। तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्त्तव्यत्वेनान्वेतीति। ननु किं प्राशस्त्यं न तावत्फलसाधनत्व? तस्य हि यागेन स्वर्गं भावयेदित्यर्थभावनान्वयवशेन विधिवाक्यादेव लभ्यत्वात्। नान्यत्प्रवृत्तावनुपयोगादिति चेदुच्यते। बलवदनिष्टाननुबन्धित्वं प्राशस्त्यं, तच्चानिष्टहेतुत्वज्ञानाल्लभ्यते। इष्टहेतावपि कलञ्जभक्षणादावनिष्टहेतुत्वस्यापि दर्शनात्। विहितश्येनफलस्य च शत्रुवधस्यानिष्टानुबन्धित्वं दृष्टम्। अतो यावत्साधनस्य फलस्य चानिष्टाहेतुत्वं

नोच्यते तावदिष्टहेतुत्वेन ज्ञानेऽपि तत्र पुरुषो न प्रवर्तते। अतएवोक्तम्—"फलतोऽपि च यत्कर्म नानर्थो नानुबद्धयते। केवलं प्रीतिहेतुत्वात्तद्धर्म्म इति कथ्यत" इति। अतः फलतो वानर्थाननुबन्धित्वरूपप्राशस्त्यबोधनेनार्थवादा विधिशक्तिमुत्तम्भयन्ति। क उत्तम्भः स्वतः फलतो वाऽर्थानुबन्धित्वशङ्कायाः प्रवृत्तिप्रतिबन्धिकाया विगमः।

इदमेव च विधेः प्रवृत्तिजनने साहाय्यमर्थवादैः क्रियते। इति विधिरर्थवादसाकाङ्क्षः। एवमर्थवादा अप्यभिधया गौण्या वा वृत्त्या भूतमर्थं वदन्तोऽपि स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिसाकाङ्क्षाः। सोऽयं नष्टाश्वदग्धरथन्यायेन सम्प्रयोगः। यथैकस्य दग्धस्य रथस्य जीवद्भिरश्वैरन्यस्याविद्यमानाश्वस्य सम्प्रयोगः परस्परस्वार्थवत्त्वाय, तथाऽर्थवादानां प्रयोजनांशो विधिना पूर्य्यते। विधेश्च शब्दभावनाया इतिकर्त्तव्यत्वांशोऽर्थवादैरिति। तदिदमुभयोः श्रवणे पूर्णमेव वाक्यम्। एकस्य श्रवणे त्वन्यस्य कल्पनया पूरणीयम्। यथा वसन्ताय कपिञ्जलानालभेत इति विधावर्थवादांशोऽश्रुतोऽपि कल्प्यते। प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्याद्यर्थवादे विध्यंशः। विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरितिसूत्रात्। विधिना स्तुति साकाङ्क्षेण प्रयोजनाकाङ्क्षाणामर्थवादानामेकवाक्यत्वाद्विधीनां विधेयानां स्तुत्यर्थेन स्तुतिप्रयोजनेन स्तुतिरूपेण प्रयोजनसाकाङ्क्षेण लाक्षणिकेनार्थेन वा नर्थक्याभावादर्थवादा धर्मे प्रमाणानि स्युरिति सूत्रार्थः। किञ्चार्थवाद स्तावत् त्रिविधः। गुणवादोऽनुवादो भूतार्थवादश्च। विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति। तत्रादित्यो यूपः यजमानः प्रस्तर इति गुणवादो विधेयगुणपरत्वात्। अग्निर्हिमस्य भेषजमित्यनुवादः, प्रत्यक्षप्रमाणसिद्धवस्तुपरत्वात्। वज्रहस्तः पुरन्दर इति भूतार्थवादः। यथाभूतार्थप्रतिपादनपरत्वात्। इत्यर्थवादनिर्णयः।

'अथातो धर्मजिज्ञासे'त्यस्मिन्नुपक्रमसूत्रे तावद्वेदस्याध्ययनकरणकभावनाविधिभाव्यस्य फलवदर्थपरत्वमुक्तम्। 'चोदनालक्षणोऽर्थो धर्म इतिद्वितीयसूत्रे चोदनाप्रमाणमिति वेदप्रामाण्यव्यापकं कार्यमिति कार्यपरत्वं शास्त्रस्यावसितम्। तत्र वायुर्वै क्षेपिष्ठादेवतेत्याद्यर्थवादानां धर्मे प्रामाण्यमस्ति नवेति संशये पूर्वपक्षमाह—आम्नायस्ये ति। वेदस्य

क्रियार्थत्वात्' क्रियाएवार्थो विषयः प्रतिपाद्योयस्य स क्रियार्थस्तस्य भावस्तत्वं तस्मादिति हेतोः । अर्थवादानां प्रामाण्यं नास्ति किं तर्हीत्याशङ्क्याह । अतदर्थाना मिति । न सा क्रियाऽर्थो येषां तेऽतदर्था अर्थवादादयस्तेषामानर्थक्यमर्थ शून्यत्वमेवास्तु तथैव वेदान्तानामपि । नहि 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविध्युपात्तानां निष्कलब्रह्मपरत्वे प्रामाण्यंयुक्तमितिप्राप्ते सिद्धान्तमाह । 'विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु'रिति वायुर्वै क्षेपिष्ठेत्यादीनामर्थवादानां 'वायव्यंश्वेतमालभेते'त्यादि विधिवाक्यैरेकवाक्यत्वात् । तद्विधेयार्थानां स्तुत्यर्थेन स्तुत्यर्थरूपेण द्वारेण प्रामाण्यं स्युरिति वायुर्वै क्षिप्रगामिनी देवता तद्देवताकं कर्म क्षिप्रमेवफलं दास्यतीत्यर्थः । एवञ्च वेदान्तानामपि अध्ययनविध्युपात्तत्वेनाप्रामाण्यायोगादुक्तन्यायेन क्रत्वर्थप्रतिपादनेन नैराकाङ्क्ष्यं बोध्यम् । तथैव ब्रह्मविद्याया अपि तदङ्गत्वेन परम्परया कर्माङ्गत्वं समञ्जसम् । तत्र त्वं तत्पदार्थपराणां वाक्यानां कर्मकर्तृदेवतास्तावकत्वं तज्ज्ञानस्य परविद्याख्यफलस्तावकत्वमिति कर्ममीमांसका वदन्ति तेषां मतं निराकुर्वन्नाह भगवान्वादरायणः—'तत्तु समन्वया'दिति । तुशब्दः पूर्वपक्षनिषेधार्थः । प्रागुपदर्शितप्रकारेण वेदान्तशास्त्रैकवेद्यं ब्रह्मैव, कुतः समन्वयात् । सर्वशास्त्रस्य तत्रैव मुमुक्षुजिज्ञास्ये जगदभिन्ननिमित्तोपादानकारणे शास्त्रयोनौ जीवप्रधानकालनियन्तरि ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठे निखिलदोषगन्धाघ्रातमाहात्म्ये सार्वज्ञ्याद्यनन्तगुणनिलये परब्रह्मणि पुरुषोत्तमे मुक्तोपसृप्ये **समन्वयात्** शक्यत्वेनान्वयः समन्वयस्तस्मात् । "यतो वा इमानि भूतानि जायन्ते, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, 'नारायणात् प्राणो जायते, 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः, तस्य ध्यानान्तःस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् ता इमाः प्रतना आपस्तत्र ब्रह्मा चतुर्मुखोऽजायत । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रः, सर्वे वेदा यत्पदमामनन्ति, अन्तः प्रविष्टः शास्ता जनानाम् । यं सर्वे देवा नमन्ति, य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यसङ्कल्पः यः सर्वज्ञः सर्ववित्, ब्रह्मविदाप्नोति परम, प्रधान क्षेत्रज्ञपतिः, अक्षरात्परतः पर" इत्यादि श्रुतिभ्यः ।

यदुक्तं सर्वस्य वेदस्य क्रियापरत्वं तत्तुच्छम् । सर्वस्यापि धर्म-

जातस्य ब्रह्मविविदिषयैव मोक्षासाधारणोपायभूततयोपक्षीणत्वस्य श्रवणात् । कर्मण एव मोक्षसाधनविद्योत्पादकत्वेन तदङ्गत्वं वक्तुं समञ्जसम् । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" त्यादि श्रुतेः । यदुक्तं क्रत्वर्थकर्तृप्रतिपादनेन नैराकाङ्क्ष्यं वेदान्तानामित्यप्येतेन परास्तम् । प्रत्युत कर्मण एव जिज्ञासोर्विशेषणत्वेन तदधिकारित्वसम्पादनेनैव नैराकाङ्क्ष्यात् । वेदान्तशास्त्रं न कर्मपरं, कर्मणो जिज्ञासोत्पादन एवोपक्षीणत्वात् । रूपादिप्रकाशने चक्षुरादिवदित्यनुमानात् । ननु कारकाणां सर्वेषामपि कर्मसाधनत्वं तावदविवादम् । तथा च कर्त्तुरपि कारकत्वाविशेषात् क्रियाङ्गत्वे कथं वाऽनुपपत्त्यवकाशः । न च ब्रह्मण आप्तकामतया तद्भिन्नत्वात्कर्मकर्तृत्वाभावादुक्तसिद्धान्तभङ्ग इति वाच्यम् । ब्रह्मणस्तथात्वेऽपि तद्भिन्नत्वाभावात् तत्त्वमस्यादिवाक्यैः क्षेत्रज्ञस्य क्रत्वङ्गभूतस्य कर्त्तुस्तत्वविधानेन स्तूयमानत्वात् । न तद्भिन्नं किमपि ब्रह्मशब्दाभिधेयमस्तीति चेन्न बालभाषितत्वादिति पूर्वाचार्य्यैः परास्तत्वात् । तथाहि बालानामतत्वे तत्वप्रेक्षावतां तमःपिहितबुद्धीनां सच्छास्त्राचार्य्यसंस्कारजन्यज्ञानहीनानां पशुसदृशानां वाग्विसर्गत्वादित्यर्थः । "स्रवा ह्येते अदृढा यज्ञरूपा अन्तवदेवास्य तद्भवति मृत्वा पुनर्मृत्युमापद्यतेऽद्यमानाः स्वकर्मभिरि"त्यादिश्रुतिपरिनिन्दिते ह्यनत्वभूते कर्मणि तत्वमिति प्रेक्षा येषां । "अधर्मं धर्ममिति या मन्यते तमसा वृतां । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी"ति लक्षणसमन्वयात् । तमःपिहितधियां ज्ञानहीनानां "ज्ञानेन हीनाः पशुभिः समाना" इत्यादि लक्षणसम्पन्नानां वाग्विसर्गः । तथा च "अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः । जङ्घन्यमाना अपि यन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धा" इत्यादिका । तस्य सर्वकर्मकर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्याच्च । "यदामीत्तदधीनमासीत्, तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतेः स्वातन्त्र्यस्य पराङ्गत्वासम्भवात् । नहि स्वमुखेनैव श्रुतिभिर्निन्दिते कर्मणि तस्य समन्वयो वक्तुं शक्यः । अदृष्टश्रुतत्वात् । किन्तु स्तुतिविषय एव तथात्वं, तथा च स्तुतिविषयस्तु परब्रह्मभूतः श्रीवासुदेव एव स एव सर्वशास्त्रान्वयभूमिः । ननु यथा ब्रह्मणः स्तुतिः श्रूयते तथा कर्मणोऽपि । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतमि"त्यादिना श्रूयमाणत्वात तुल्य एव न्याय इति चेन्न । यतः, वेदविषयः

स यः सर्वत्र स्तूयते न तु क्वापि निन्द्यते । कर्मणस्तु स्तुतिनिन्दयोरुभयोर्विषयत्वदर्शनान्न तत्वयोगः । "यथेह कर्मचितो लोकः क्षीयते" इत्यादि निन्दाश्रवणात् ।

यदुक्तं ब्रह्मविद्याया अपि स्तावकत्वेन कर्माङ्गत्वं तत्तुच्छतरं बाधितत्वात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । तमेव विद्वानमृत इह भवति, ब्रह्मविदाप्नोति परम्, तरति शोकमात्मवित्, तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति, तथा विद्वान्नामरूपाद्विमुक्तः, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवास्तदा देवमविज्ञाय दुःखस्यान्तं निगच्छती"त्याद्यन्वयव्यतिरेकभावावधारणोपनिषद्वाक्यशतेभ्यः "पुरुषार्थोऽतः शब्दादि"ति बादरायणसूत्राच्च । ननूक्तश्रुतीनां क्रत्वङ्गकर्तृस्वरूपयाथात्म्यप्रतिपादनत्वेन कर्तृसंस्कारद्वारेणात्मज्ञानस्य कर्माङ्गत्वमुक्तमेव । फलश्रवणस्य त्वर्थवादमात्रत्वात् । तदुक्तं "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादःस्यादि"ति सूत्रेण । अत्र द्रव्ये फलश्रुतिः "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"त्याद्याः । संस्कारे फलश्रुतिः "यदाङ्क्ते भ्रातृव्यस्य चक्षुरेव वृङ्क्ते"इत्याद्याः । कर्मणि फलश्रुतिः "कर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते"इत्याद्या इति । यथान्येषु द्रव्यादिषु पर्णमयी द्रव्ययजमानाञ्जनादिसंस्कारप्रयाजादिरूपेषु अपापश्लोकश्रवणादि श्रुतिरर्थवाद इति यावत् ।

तथा चात्रानुमानं तत्वज्ञानं कर्माङ्गम् फलशून्यत्वे सति कर्माङ्गाश्रयत्वात् पर्णतादिवदिति । न च कर्मणि आत्मज्ञानस्याप्रयोजकत्वमिति शङ्क्यम् । आत्मनोदेहादिव्यतिरेकज्ञानमन्तरेण परलोकगामित्वानिश्चयाज्ज्योतिष्टोमादौ प्रवृत्तिरेव न स्यात् । तस्मात्क्रतुप्रवृत्त्यर्थमौपनिषद्ज्ञानस्योपकारकत्वात् कर्माङ्गत्वं सिद्धम् । न च कर्त्तुरात्मनोऽन्यो मुमुक्षुवेद्यो मुक्तोपसृप्यो वेदान्तवाक्यैरुपदिश्यते इति वाच्यम् । वेदान्तेष्वेव ब्रह्मज्ञानस्य कर्मप्राधान्यं सूचयद्भिस्तदुपबृंहितसामानाधिकरण्यनिर्देशो न वेदान्ता एव देहातिरिक्तप्रत्यक् स्वरूपयाथात्म्य वेदनपरा इत्यवश्याङ्गीकर्त्तव्यत्वात् ।

किञ्च "जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे यक्ष्यमाणो ह वै

भगवन्तोऽहमस्मी"त्यादि श्रुतिभ्यो जनककैकयादीनां परविद्यावतां कर्माचारदर्शनात् । लिङ्गान्यत्र प्रमाणानि । "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति, तं विद्याकर्मणी समन्वारभेत" इति विद्याकर्मणोः समुच्चयश्रवणाच्च । आचार्य्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे इत्यादि वेदज्ञानवतः कर्मसु विनियोगदर्शनात् । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथोऽस्ति न कर्म लिप्यते नरे । यावज्जीवमग्निहोत्रं जुहोती"त्यादि श्रुतेः । आत्मवित्सामान्यनिर्देशश्चेति चेन्न । यतः कर्मकर्त्तुः प्रत्यगात्मनोऽधिकमनवधिकानन्तकल्याणगुणं हेयसम्बन्धशून्यमतिशयसाम्यरहितं श्रीवासुदेवं श्रुतयो बोधयन्ति । "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादि"ति सिद्धान्तसूत्रात् । "एष सर्वेश्वर एष भूतपाल एष भूताधिपतिः स कारणं कारणाधिपाधिपः, न चास्य कश्चिज्जनिता न चाधिपः । एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः । यः सर्वज्ञः स सर्ववित्, यस्य ज्ञानमयं तपः, सत्यसङ्कल्प"इत्यादि श्रुतिभ्यः । "अहं सर्वस्य प्रभवोमत्तः सर्वं प्रवर्त्तते । तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च । पिताऽहमस्य जगतो माता धाता पितामहः । गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेत्यादि स्मृतेश्च । एतैर्धर्म्मैः सार्वज्ञ्याचिन्त्यानन्तस्वाभाविककल्याणगुणरूपैस्तथाभूतधर्माश्रयस्याखिलावद्यास्पृष्टमाहात्म्यसीम्नः परब्रह्मणः वेदान्तैः प्रतिपाद्यमानत्वात्, नहि तादृशानां धर्माणां प्रत्यगात्मनि कथमपि कदाऽपि सम्भवोऽस्ति, असम्भाव्यत्वात् । तथा भूतोपनिषद्वेद्यपरब्रह्मज्ञानस्य कर्मानुपयोगात् प्रकरणाद्यभावाच्च कर्माङ्गत्वं कल्पयितुमशक्यम् । फलवत्सन्निधावफलं तदङ्गं प्रयाजादिवदिति न्यायात् । परमात्मज्ञानस्य तु स्वप्रकरणगतेनैव फलेन निराकाङ्क्षत्वान्नान्यशेषत्वम् । न च तत्त्वमस्यादिना तस्यैव तत्ता विधानादुक्तार्थासिद्धिरिति वाच्यम् । तस्य तदात्मकत्वादिभिस्तदपृथक् सिद्धत्वात् एकत्वोक्तिरविरुद्धा न स्वरूपत इति प्रागेवोक्तत्वात् । तस्माद्ब्रह्मविद्यायामविद्याक्लेशाद्यशेषहेयसम्बलितस्य प्रत्यगात्मनो गन्धोऽपि नास्ति । श्रीपुरुषोत्तमपरत्वमेवाखिलवेदान्तशास्त्रस्य । तत्र प्राप्त्यैकप्रयोजनश्चोपनिषज्ज्ञान-

मिति। नाप्युक्तलिङ्गानां तत्र प्रामाण्यं तेषामन्यपरत्वेनोक्तार्थसाधकत्वाभावात्। तथा हि, न तावद्ब्रह्मविदां कर्मानुष्ठानस्य विद्यायाः कर्माङ्गत्वे लिङ्गत्वमनैकान्तिकत्वात्। "किमर्था वयमध्येष्यामहे किमर्थं वयं यक्ष्यामहे। एतद्वै पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे," इत्यादि विपरीतश्रवणात्। नापि "यदेव विद्यया करोती"ति श्रुतिस्तत्परेति वक्तुं शक्यते। प्रकृतप्रतिपादितोद्गीथविद्यामात्रविषयत्वात्। यदेवेत्यत्र यच्छब्दस्यानिश्चितविशेषस्योद्गीथमुपासीतेति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्। नहि यत्करोति तद्विद्ययेति सम्बन्धः। नापि तं विद्याकर्मणी इति श्रुतेस्तत्परत्वं विद्वत्सम्भावनार्हं विभक्ताधिकारित्वात्। शतवत्। यथा शततमाभ्यां दीयतामित्युक्ते विभज्य दीयते, पञ्चाशदेकस्मै। तथा विद्या अन्यस्मै कर्म चान्यस्मै। इत्यर्थः। यद्वा विभक्तफलत्वात्। विद्या स्वफलार्थं समारभ्यते, कर्म स्वफलार्थमिति बोध्यम्। यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं रत्नार्थं शतमिति विभागः प्रतीयते। तद्वत्प्रकृतेऽपि बोध्यम्। नाप्याचार्य्यकुलादित्यादिश्रुतिरुक्तार्थपरा वेदाध्ययनमात्रवतः पुरुषस्य तद्विषयत्वात्। न परविद्यावतः, अध्ययनशब्दस्याक्षरराशिग्रहणमात्र एव पर्य्यवसानात्। नापि यावज्जीवश्रुतिरुक्तार्थे नियामिका तया च विद्यायाः कर्माङ्गत्वं निर्णेतुं शक्यम्। विशेषाभावात्। तस्या अज्ञविद्वत्सामान्येन नियतविद्वद्विषयकत्वाभावात्। ननु सामान्यविषयकत्वेऽपि विदुषोऽपि तदन्तःपातित्वान्नियमस्य तादवस्थ्यमेवेति चेन्न। ब्रह्मविद्यास्तुतये कर्मणोऽनुज्ञामात्रत्वात्। यावज्जीवं जीवति विदुषि कर्म कुर्वत्यपि विद्यासामर्थ्यात् कर्मलेपाय न भवतीति विद्यासामर्थ्यद्योतनार्था यावज्जीवश्रुतिरित्यर्थः। "यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेव विदि पापं कर्म न श्लिष्यत" इत्यादि श्रुतेः। "सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्। इति मां योऽभिजानाति कर्मभिर्न स बध्यते। ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा"। इत्यादि स्मृतेश्च। अथ किं प्रजया करिष्याम इत्यादिना विदुषां कर्मत्यागस्यापि श्रवणात्। यदि कर्माङ्गत्वं विद्याया अभ्युपगतं स्यात्तर्हि विरोधाद्गार्हस्थ्यत्यागविधानानुपपत्तेः। संसारमूलकस्य कर्मणोऽविद्योपमर्दकत्वाश्रवणाच्च न विद्याङ्गं कर्माङ्गं भवति। तस्याः स्वातन्त्र्येणैव मोक्षहेतुत्वात्। "क्षीयन्ते चास्य कर्माणि

तस्मिन्दृष्टे परावर" इत्यादि श्रुतेः। "ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः। यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे" त्यादिस्मृतेश्च।

ननु तथाऽपि प्रत्यगात्मानं विना कर्मणि अदृष्टस्वर्गादिफलके यागादिरूपे प्रवृत्तेरेवासम्भवात्, अन्यथा कर्मश्रुतेर्बाधप्रसङ्गश्च। तथाऽपि वैदिकस्यानिष्ट एव, तस्माज्ज्ञानस्य कर्माङ्गत्वमङ्गीकार्यमिति चेदुच्यते। ज्ञानं द्विविधं देहादिव्यतिरिक्तप्रत्यगात्मविषयकं प्रत्यगब्रह्मात्मविषयकञ्चेति। तत्राद्यस्य कर्माङ्गत्वाभ्युपगमान्नोक्तदोषावकाशः। उत्तरस्योक्तलक्षणशास्त्रात्कर्मबाधकत्वेन प्रत्यगात्मनो देहाद्यचेतनवर्गवैलक्षण्यज्ञानस्य कर्माङ्गत्वेऽपि भगवतः पुरुषोत्तमस्य ततोऽत्यन्तविलक्षणत्वात् न कथमपि पराङ्गत्वशङ्कावकाशः। "नित्यो नित्यानां चेतनश्चेतनानां बहूनां यो विदधाति कामान्। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः। अक्षरात्परतः पर" इत्यादि विवेचकश्रुतिभ्यः। "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इत्यादि स्मृतेश्च। "अधिकन्तु भेदनिर्देशात्, सर्वोपेता चे" त्यादिसूत्रेभ्यः। तस्मात्सिद्धं परब्रह्मण्येव सर्वेषां शास्त्राणां समन्वयः। इति समन्वयाधिकरणस्य विमर्शः।

## अथेक्षत्यधिकरणस्य विमर्शः।

ईक्षत्यधिकरणेन च साङ्ख्याभिमतायाः प्रकृतेर्जगत्कारणत्वं निरस्तम्। तथाहि सर्वत्र वेदान्तवाक्येषु सृष्टिप्रकरणे ईक्षापूर्विकैव सृष्टिः श्रूयते "तदैक्षत बहु स्यां प्रजायेय, स ऐक्षत लोकान्नु सृजा, स इमांल्लोकानसृजत, स ईक्षाञ्चक्रे स प्राणमसृजत" इत्यादि श्रुतिभ्यः। अतश्चेतनस्य सर्वज्ञस्य सत्यसङ्कल्पस्य परब्रह्मण एव जगज्जन्मादिकारणत्वं वाच्यम्, नत्वचेतनस्य प्रधानस्य, तस्मिन्नीक्षणस्यानुपपन्नत्वात्। न च शुष्कपङ्कां कृषिमालक्ष्य कृषिर्वृष्टिं प्रतीक्षते, इत्यादिव्यवहारेषु अचेतनानामपि चेतनवदुपचारदर्शनादेवमचेतनप्रधानेऽपि चेतनवदीक्षणमौपचारिकोऽस्त्विति वाच्यम्। यतः "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेति सर्वस्य प्रपञ्चस्य सदात्मकत्वोक्तिः। तदुद्देशेन सत आत्मत्वोक्तिश्च अचेतने प्रधाने न घटते। एवञ्च सर्वस्य प्रपञ्चस्यात्मभूतं

तेजःप्रभृतिशरीरकं सदेव । 'तत्तेज ऐक्षत' त्यादिषु ईक्षितृत्वेन विवक्षितमिति न गौणेक्षणंप्रायःपाठशङ्काऽपि । अपि च मुमुक्षोः श्वेतकेतोः 'तत्त्वमसी' ति सदात्मकत्वानुसन्धानमुपदिश्य तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये इति तत्फलतया शरीरपातानन्तरं मोक्ष उपदिश्यते । न च प्रधाननिष्ठस्य मोक्ष इति साङ्ख्यानामप्यभिमतं तेषां मुमुक्षूणां हेयमेव तदभिमतम् । अतो हेयत्वावचनादपि न सत्प्रधानं सर्वविज्ञानप्रतिज्ञाविरोधादपि न प्रधानं सच्छब्दाभिधेयम् । सत्प्रधानमिति पक्षे स्वाप्ययसङ्कीर्त्तनं न घटते अपि च सच्छब्दाभिधेयस्य सर्वज्ञसर्वशक्तित्वसर्वाश्रयत्वनामरूपव्याकरणत्वादीनां श्रुतत्वात्तदेव जगत्कारणं तस्मात्सिद्धं ब्रह्मणः जगत्कारणत्वं नत्वचेतनस्य प्रधानस्येति । सर्वासूपनिषत्सु चेतनैककारणत्वस्यावगतेः समानत्वाच्च चेतनब्रह्मैव कारणम् । इतीक्षत्यधिकरणस्य विमर्शः ।

# अथानन्दमयाधिकरणस्य विमर्शः ।

तैत्तिरीया आनन्दवल्ल्यां "ब्रह्मविदाप्नोति" परमित्युपक्रम्य, किं तद्ब्रह्म कीदृशं तद्वेदनं कीदृशं तद्वेदनफलमित्याकाङ्क्षायां "सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति मन्त्रेण ब्रह्मणः स्वरूपं तद्वेदनप्रकारं तत्प्राप्यं फलं स्वरूपञ्चोपवर्ण्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यादिना तस्मादेव ब्रह्मण आकाशादिसकल जगदुत्पत्तिमुक्त्वा तस्य सुखप्रतिपत्त्यर्थं अन्नमयप्राणमयमनोमय विज्ञानमयकोशचतुष्टयमनुक्रम्याम्नायते "तस्माद्वा एतस्माज्ज्ञान मयादन्योऽन्तरात्माऽऽनन्दमयस्तेनैष पूर्णः" इत्यानन्दमयमुपक्रम्य तस्मिन्नेव प्रस्तुतजगत्कारणबुद्धिस्समापिता । तदनन्तरं तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मेति आत्मान्तरोपदेशाभावात् । अत्र विज्ञानमयशब्दवाच्याज्जीवादन्यत्वेनोत्कृष्टत्वेनांतरत्वेन जीवान्तर्यामित्वेन च प्रतिपादितः परमात्मा वासुदेव एव निरतिशयानन्दमय शब्दाभिधेयः । नहि प्रत्यगात्मनः स्वस्मात्स्वस्योत्कृष्टत्वं स्वान्तर्यामित्वञ्च घटते । येन प्रत्यगात्मा आनन्दमयशब्देन निर्दिष्टः स्यात् । अत्र जीव ब्रह्मणो र्भेदस्तात्विक एव न तु काल्पनिकस्तथात्वे श्रुतेरतत्वावेदकत्वेना-

प्रामाण्यं प्रसज्येत । अपि च "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" निरतिशयदशाशिरस्कत्वेनाभ्यस्यमानो महानन्दो जीवेऽल्पसुखभागिनि, असम्भाव्यमानस्तदितरमीश्वरमाश्रयमासाद्य निर्वृणोति । एवम्भूतमहानन्दमयभागानन्दमय ईश्वर एव न प्रत्यगात्मा । जीवस्याप्येवम्भूतानन्दोऽभ्युपेयत इत्युक्तमिति चेत्सत्यमुक्तं दुरुक्तं तु तत् "युवास्यात्साधु युवाध्यायकः आशिष्ठोद्रढिष्ठोबलिष्ठः, तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्, स एको मानुषानन्द" इत्युक्तलक्षणमानुषानन्दप्रभृति प्राजापत्यानन्दान्तसकलप्राणिवर्गानन्दजातादधिकततया ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्द इति कीर्त्तितस्य, आनन्दमयानन्दस्य पूर्ववाक्येषु तदपेक्षयाऽतिक्षुद्रानन्दभोक्तृत्वेन कीर्त्तिते जीववर्गे संभावनानर्हत्वात् ।

किञ्च "कोह्येवान्यात् कः प्राण्यात्, यदेष आकाशोऽनन्दो न स्यात् । एष ह्येवानन्दयातीति" जीवानन्दयितृभावव्यपदेशः । "सोऽकामयत बहुस्यां प्रजायेयेति" हिरण्यगर्भादिजीवासंभावितप्रधानानपेक्षस्वतन्त्रसृष्टिकामनाव्यपदेशः। "रसोवैसः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति" जीवास्वादनीयत्वव्यपदेशश्चातएवसङ्गच्छते । ब्रह्मविदाप्नोति परम्" इति ब्राह्मणवाक्येन यद्विहितं तदेव मन्त्रेण निश्चितं तदेव परब्रह्म जीवस्वरूपाद्विलक्षणमानन्दमयशब्दवाच्यं जीवप्राप्यतया निर्दिष्टं ब्रह्मैव न जीव इति प्रधानस्येव जीवस्यापि न सद्विद्यानन्दवल्ल्यादिकारणवाक्यप्रतिपाद्यत्वमिति । अत्र केचित् । परमार्थतः सर्वज्ञात्परमेश्वरादन्यो द्रष्टा श्रोता वा प्रत्यगात्मा नास्ति "नान्योऽतोऽस्ति द्रष्टा" इत्यादि श्रुतेर्जागरूकत्वात् । कथं तर्हि 'ब्रह्मविदाप्नोति परमिति' श्रुतिनिर्दिष्टः प्रत्यगात्मपरमात्मनोः प्राप्यप्राप्तृत्वव्यपदेश उपपद्येत लौकिकदृष्ट्येति ब्रूमः । यथा घटाकाशादुपाधिपरिच्छिन्नात्तदनुपहित आकाशोऽन्यः । ईदृशश्च विज्ञानात्मपरमात्मनोर्भेदमाश्रित्य भेदशास्त्राणां प्रवृत्तिर्न परमार्थतः, क्षेत्रज्ञ एव शुद्धस्वरूपो मान्त्रवर्णिक इति वदन्ति तन्न विचारुचारु । प्रागभिहिता ये विद्वत्प्राप्यत्वजगज्जन्मादिकर्तृत्वपारमार्थिकमुख्यनितृत्वादिधर्म्मा ब्रह्मणोऽसाधारणास्तेषां तदितरस्मिन्ननुपपत्तेः । न च 'नान्यतोऽस्ति द्रष्टा' इति वाक्यस्य विरोध आपद्येत इति वाच्यम् ।

तस्य प्रत्यगात्मनि स्वातन्त्र्येण द्रष्टृत्वभोक्तृत्वादीनां निषेधपरकत्वात्। अन्यथा 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इत्यादि स्वाभाविक द्रष्टत्वं प्रत्यगात्मनः प्रतिपादयन्त्यः श्रुतयो व्याकुप्येरन्। द्रष्टुर्जीवात्मनः दृष्टेः ज्ञानस्य विपरिलोपो नास्तीति श्रुत्यर्थः। एतेन द्रष्टुरूपाया दृष्टेरिति सामानाधिकरण्येनार्थवर्णनं निरस्तम्। न द्रष्टेर्द्रष्टारं पश्येदित्यत्रेवात्रापि वैयधिकरण्येनान्वयस्य युक्तत्वात्। सामान्यवाक्येभ्योऽभ्यासवाक्यानां बलीयस्त्वस्य सर्ववादिसम्मतत्वात्। तस्माल्लौकिकत्वं भेदस्येत्यभिधानं न शास्त्रयुक्तिसिद्धम्। नापि घटाकाशादिवदुपाधिकृतो भेद इत्यपि वक्तुं शक्यते। "ब्रह्मविदाप्नोति परम्" इत्युपक्रमे "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इत्युपसंहारे विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः, "यं लब्ध्वाऽऽनन्दी भवति। अस्तीति ब्रह्मेति वेद्वेद। भीषाऽस्माद्वातः पवते" इत्याद्यभ्यासेन च भेदस्य स्वाभाविकत्वनिर्णयात्।

उपक्रमोपसंहारादीनामर्थनिर्णायकत्वस्य सर्ववादिसम्मतत्वात् हि प्राप्यप्राप्तृभावाभ्यां वेतृवेद्यत्वभावाभ्यां निकृष्टोत्कृष्टत्वाभ्यां लब्धव्यलब्धृत्वाभ्यां भयकर्तृभीतत्वाभ्याञ्चोपक्रमादिभिर्निर्दिष्टो भेदो नित्यत्वम्भजते अतो जीवब्रह्मणोर्भेदः स्वाभाविकः। ये च घटाकाशादिवदुपाधिकृतं प्रत्यगात्मपरमात्मनोर्भेदं व्यपदिशन्ति, त एवं प्रष्टव्याः। बुद्ध्युपाधिपरिच्छिन्न ईश्वर एव जीव शब्दाभिधेयः। स सक्रियो निष्क्रियो वा? नान्त्यः, गत्याद्यनुपपत्तेः। नापि चाद्यः ईश्वराभिन्नत्वेन विभुत्वात्।सुतरांगत्यनुपपत्तेः तस्मादुभयथाऽप्यनुपपत्तेः।

ननु स्वरूपतो ब्रह्मण आकाशवन्निष्क्रियत्वेऽपि उपाधेः परिच्छिन्नत्वात्सक्रियत्वं तत्क्रियाश्चेतनेऽध्यारोप्य घटगतीस्तदवच्छिन्नाकाशेऽस्य घटाकाशश्चलतीति वत् देवदत्तश्चलतीति व्यावहारिकगत्याद्युपपत्तिरिति चेन्न। तथात्वे क्षणे क्षणे गमनादिक्रियासु बन्धमोक्षौ स्याताम्। पूर्वदेशे वियोगेनोत्तरदेशनिष्ठस्य शुद्धस्य सर्वस्येश्वरांशस्यासादनादिकर्मादिविकारहीनस्योपाधिना बन्धः। पादविक्षेपयुक्तस्य गमनादिकर्मादिबद्धस्य ज्ञानादिसाधनहीनस्यैवाकस्मान्मोक्षः स्यादिति। आनन्दमयाधिकरणमन्यथा व्याचक्षाणाः केचित्स्वबुद्ध्योत्प्रेक्षितपरिकल्पनाय क्लिश्यन्ति। नानन्दमयस्य ब्रह्मत्वं, कुतः? स वा एष पुरुषोऽ-

न्नरसमयः, तस्माद्वा एतस्मादन्नमयादन्योऽन्तरात्मा प्राणमयः” इत्यादिना विज्ञानमयपर्य्यन्तविकारार्थमयट्प्रवाहपतितत्वात् । अन्यथाऽस्मादेकस्यैव प्रवाहान्यार्थकल्पनेऽर्द्धजरतीयन्यायापत्तेस्तस्मादानन्दमय इत्यत्रापि विकारार्थकमयट् प्रत्ययः। किञ्च “प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः। आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा” इति प्रियशिरस्त्वाद्यवयवयोगाद्विकृत एवानन्दमयपदार्थः।

किञ्च प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासान्नानन्दमयस्यातोनानन्दमयं ब्रह्मेति। किञ्च मयट् प्राचुर्य्येऽपि दुःखाल्पस्य तत्र प्रतीतिर्दुर्वारा, प्राचुर्य्यस्य लोके प्रतियोग्यल्पसापेक्षत्वात। तथा सति आनन्दप्रचुरोऽल्पदुःख इत्युभयात्मकआनन्दमयपदार्थोऽभ्युपगतः स्यात्। ईदृशश्च क्षेत्रज्ञ एवेति। किं प्रकृतं ब्रह्मानन्दमयवाक्ये पुच्छवाक्ये चोच्यते। किन्त्वेकत्र। नाद्यः, तथा सति तदेव ब्रह्मानन्दमयआत्माऽवयवी तदेव च ब्रह्म पुच्छं प्रतिष्ठाऽवयव इत्यसामञ्जस्यं स्यात् । यदि द्वितीयोऽन्यनरपरिग्रहरूपकल्पस्तत्र तु युक्तं ब्रह्म पुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मनिर्देश आश्रयितुं ब्रह्मशब्दसंयोगात्। नानन्दमये ब्रह्मशब्दसंयोगाभावादिति। किंच “ब्रह्म पुच्छं प्रतिष्ठा” इत्यनन्तरमुक्तम् “असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति”। अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते । “ब्रह्म पुच्छं प्रतिष्ठा” इत्यत्र ब्रह्मण एव स्वप्रधानत्व मिति न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता। प्रियमोदादिविशेषस्यानन्दमयस्य सर्व्वलोकसिद्धत्वात । कथं पुनः स्वप्रधानं सद्ब्रह्मानन्दमयस्य पुच्छत्वेन निर्दिश्यते । नैष दोषः पुच्छवत्पुच्छं प्रतिष्ठा परायणमेकनीडं लौकिकानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वम् । “एतस्यानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति” इति श्रुत्यन्तरात्। अपि चानन्दमये ब्रह्मण्यवगम्यमाने सति सविशेषं ब्रह्मेत्यङ्गीकृतं स्यात्। इह तु वाक्यशेषे “यतो वाचो निवर्त्तन्ते अप्राप्य मानसा सह” इत्यादिना निर्विशेषस्य श्रवणात। अतो ‘ब्रह्म पुच्छं प्रतिष्ठा’ वाक्यपठितब्रह्म प्रतिपत्तव्यम्। आनन्दमयश्च विकृत एवेत्यादियुक्त्याभासैरधिकरणसूत्राण्यन्यथैव योजयन्ति इति पूर्वपक्षः।

## ( अत्र सिद्धान्तः ) ।

अत्रोच्यते, स्वमतिपरिकल्पितोऽयं पक्षस्तथाहि । एकप्रवाह-पतितत्वादेकरूपेण भवितव्यमिति नियममङ्गीकृत्य विकारार्थकमयट्-प्रवाहे पतितत्वादानन्दमयघटकीभूतमयटोऽपि विकारार्थक इति प्रागभिहितं तन्न प्रमाणसरणिमधिरोढुमर्हति । यतः यद्यत्रविकारार्थकमयटः प्रवाहस्स्यात्तदा तदन्तः पातित्वात् आनन्दमय इत्यत्रापि मयट्प्रत्ययस्य विकारार्थत्वं कल्पयितुं शक्यते । तदेवात्र नास्ति, तथा हि । अन्नमये मयटो विकारार्थत्वेऽपि न प्राणमयादिषु विकारार्थता पञ्चवृत्तेः प्राणस्यैकत्वेन प्रकृतिविकारासम्भवात् ततः स्वार्थे मयट् । यद्वा प्राणोऽपानोव्यान उदानः समान इति प्राणवृत्तेः प्राचुर्य्यात् प्राणमय इत्यत्रापि प्राचुर्य्यार्थकमयट् प्रत्ययः । यदि विज्ञानमयपदवाच्यस्य प्रत्यगात्मनोविकारित्वं स्यात्तदा तस्य स्वरूपहानिः स्यात् । "न जायते म्रियते, अजो नित्यः, नित्यो नित्यानाम, अजोह्येक" इत्यादि वेदान्तवचनानां बाधः प्रसज्येत । अतोविज्ञानमय इत्यत्रापि प्राचुर्य्यार्थकमयट् प्रत्ययो नतु विकारार्थकः । न च कथं जीवात्मनो विज्ञानप्रचुरत्वं संसारित्वादिति वाच्यम् । तद्विज्ञानधर्मस्य बद्धावस्थायां सङ्कुचितत्वेऽपि "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वादि"त्यादि शास्त्रेण स्वाभावाकित्वविवक्षया संसारिणोऽपि जीवस्य विज्ञानप्रचुरत्वसम्भवात् । मनोमय इत्यत्रापि मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणवृत्तीनां प्राचुर्य्यात् प्राचुर्य्यार्थकमयट् । तस्माद्विकारार्थप्रवाह एव नास्ति, कुतस्तत्पातशङ्का ? कुतस्तरामर्द्धजरतीयन्यायापातप्रसङ्गश्च ?

प्रत्युत प्राचुर्य्यार्थकविज्ञानमयपदसन्निधानात्सुतरां प्राचुर्य्यार्थावगमः । पौनः पुन्येन पठितस्य सन्निहितशब्दस्यैकत्राभ्यस्यमानस्यैकार्थपरत्वमिति नियमएव तावन्न सम्भवति । "पौर्णमास्यां पौर्णमास्यां यजेत" इत्यत्र पाठस्य साम्यसन्निधानत्वयोः सतोरपि सप्तम्यन्तस्य कालवाचित्वेन तृतीयान्तस्य कालयुक्तकर्म्मवाचित्वेन च भिन्नार्थस्य पूर्वकाण्डे निर्णयस्य दर्शितत्वात् भगवता जैमिनिना, तस्मात् मयटोविकारार्थप्रवाहरूपस्य हेतोः स्वरूपासिद्धत्वम् । "ब्रह्म पुच्छं प्रतिष्ठा" इत्यत्र ब्रह्मणः पुच्छमिति षष्ठ्याऽवयवावयवीभावसम्बन्धस्य प्रतिपत्तेः सम्बन्धस्य द्विनिष्ठतया प्रतिष्ठातद्भावेन च व्यतिरेकावगमाद्विकृतादा-

नन्दमयादन्यद्ब्रह्मेति यदाशङ्कितं तदपि न सम्यक् यतः "अन्नमयं पुरुषविधः" इति वाक्यस्मरणार्थं पुरुषविधत्वेन रूपितं स्वस्मादनतिरिक्तैः स्वावयवैः पुच्छप्रतिष्ठात्वरूपण दर्शनादस्मिन्प्रकरणेऽत्रापि पुच्छप्रतिष्ठात्वेन रूपितञ्च ब्रह्म । आनन्दमयादनतिरिक्तः षष्ठीनिर्देशः समुदायतदेकदेशनिबन्धनतयोपपन्नस्तथा च प्रियमोदप्रमोदशब्दवाच्यशिरः पक्षतारूपितानामिष्टवस्तुदर्शनजन्यलब्धोपभोगजन्यसुखविशेषरूपाणांभगवद्विभूतिलक्षणतदंशानामवयवत्वोक्तिः सूपपन्ना । सर्वस्यापि प्राणिसुखजातस्य तदानन्दांशता "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादि श्रुतेः। प्रत्यगात्मन आनन्दहेतुभूतं ब्रह्मण आनन्दं परार्थमित्यानन्दमयस्य ब्रह्मण अंशित्वं प्रत्यगात्मनामानन्दस्यांशत्वं तत्रावयवत्वविधानं न विरोधमावहतीति । यदुक्तमानन्दमयस्यैव ब्रह्मत्वे तस्यावयविभावापत्तावसामञ्जस्यं स्यादिति तदपि न युक्तम् । अवयविनोरेकार्थत्वस्येष्टत्वात् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमतएव रक्तः पटो भवतीत्यत्रैकार्थता, तथा प्रकृतेऽपि पुच्छशिरः प्रभृत्यवयवावयविब्रह्मणोरेकार्थत्व सम्भवति । न च पुच्छब्रह्मणोर्भेदाभावेन तस्यैवात्मत्वेन पुच्छत्वेन निरूपणं कथमिति वाच्यम् । एकस्यैव ब्रह्मणःपुच्छत्वविशेषेण पुच्छत्वम् । आनन्दत्वेन रूपेणात्मत्वमित्युपपत्तेः । अंशांशिनोर्विभूतिविभूतिमतोश्चाभेदस्याविरुद्धत्वात् ।

यच्चोक्तं ब्रह्मपुच्छमित्यानन्दमय इत्यनयोर्वाक्ययोर्ब्रह्मशब्दसंयोगासंयोगाभ्यामपि नानन्दमयवाच्यं ब्रह्मेति तदपि तुच्छं, यथाऽऽनन्दमयवाक्ये ब्रह्मशब्दासंयोगस्तथा 'ब्रह्मपुच्छमि'ति वाक्ये आनन्दशब्दासंयोगस्य तुल्यत्वात् । 'ब्रह्म पुच्छमि'त्यत्र ब्रह्मशब्दस्य संयोगः, आनन्दमय इत्यत्रासंयोग इत्येकः पक्षः । आनन्दमयवाक्ये ब्रह्मपदस्य संयोगो न श्रूयते, तथा 'ब्रह्मपुच्छमि'त्यत्रापीत्यपरः पक्षः । अनयोर्मध्ये यस्मिन्पक्षे सूत्रकाराभिमतता स एव पक्षोबलीयान्, स एव पक्षोविद्वद्भिर्माननीयोऽन्यथा तद्विरोधः प्रसज्येत । तथा च सूत्रितत्वेनाभ्यस्तत्वेन चानन्दपदस्यैव सूत्रकृदभिमतत्वाद्बलीयस्त्वं तद्विरोधश्च तव पक्षे एव सद्दोषमावहति । यदि ब्रह्माभ्यास एव सूत्रकृदभिप्रेतः स्यात्तर्हि ब्रह्म पुच्छं प्रतिष्ठाऽभ्यासादिति सूत्रितं स्यान्नतु तथा दृश्यते । किन्त्वानन्दमयं प्रतिज्ञायाभ्यासश्च हेतुतयोक्तस्तथात्वे च प्रतिज्ञाहेत्वोः सूत्रितयोर्हानिरसूत्रितस्य

च कल्पना स्यात्। इति तर्कबलेनापि स्वपक्षस्य सामञ्जस्यं परपक्षस्यासामञ्जस्यम्।

किञ्च भृगुवल्ल्यामपि प्राणाद्युपासने उत्तरोत्तरजिज्ञासायास्तदवस्थत्वादानन्दस्य ज्ञानानन्तरमुपदेशसमाप्तेश्चानन्दस्य बलिष्ठत्वम्। कथं तर्ह्यानन्दरूपस्य ब्रह्मण आनन्दमयत्वम्। आनन्दस्यानन्दप्रचुरत्वाभावान इति चेदानन्दस्वरूपस्यैव ब्रह्मणः प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षादिधर्म्मभूतानन्दमयत्वस्याप्युपपत्तेः। आनन्दमये आत्मशब्दस्य व्याख्यानसमाप्तिः, तर्ह्यात्मशब्देन निर्द्दिष्टव्यं तथा न कृतमपितु ब्रह्मशब्देन निर्दिष्टम्। तस्मादानन्दमयस्य न प्राधान्यम्। अतः पुच्छं ब्रह्मैव प्रधानप्रतिपाद्यम्। असन्नेव स भवतीति श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोगुणदोषाभिधानादि प्रागभिहितं तदपि न रमणीयम्। गुणिमात्रनिर्द्देशेऽपि गुणप्रतीतिसुकरा सर्वज्ञस्यानन्दगुणवत एव प्रस्तुतत्वात्। ब्रह्मात्मानन्दमयशब्दानामेकार्थे निश्चिते, आनन्दमयशब्दनिर्द्देशेन तद्गुणानामानन्दादीनां बोधो न दुर्घटः। अपि च प्रकरणस्थपूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावादयमपि श्लोको न पुच्छप्रतिपादनपरः। "विज्ञानमानन्दं ब्रह्म। आनन्दो ब्रह्म" इत्यादिवचनैर्ब्रह्मण आनन्दरूपस्योक्तत्वात्। आनन्दस्य च प्रसिद्धत्वान्न तस्य सद्भावासद्भावज्ञानशङ्कायुक्तेति चोदिते तस्यानन्दरूपस्य ब्रह्मणोऽविदितत्वापरिच्छिन्नानन्दत्वादेव हि तत्रयोपपादनीयम्। तद्वदत्रापि। आनन्दमयस्य ब्रह्मत्वे प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षत्वधर्मेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानशङ्का युक्तैवेति।

यदप्युक्तमानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यं निर्विशेषन्तु वाक्यशेषे श्रूयते। इति, तदतितुच्छम्। यतः, सैषानन्दस्य मीमांसेति गुणभूतानन्दस्योत्तरोत्तरवाक्यैराधिक्यं निर्धार्य "आनन्दं ब्रह्मणो विद्वान्" इति गुणगुणिनोः पृथक्पाठ एव कण्ठरवेण ब्रह्मणः सविशेषत्वं ज्ञापयति। न च 'यतोवाचोनिवर्त्तन्ते" इति वाक्यशेषेण ब्रह्मणोनिर्विशेषत्वं वक्तुं शक्यम्। तस्य वाक्यस्य ब्रह्मानन्दस्यान्येषामानन्दवत्परिच्छेदवारणपरत्वात्। अन्यथा तत्रैवोत्तरार्द्धे "आनन्दं ब्रह्मणोविद्वान्न बिभेति कथञ्चन" इति भेदनिर्द्देशो वेदनक्रियाविषयत्वनिर्द्देशश्च विरुद्ध्येत। नहि युष्मत्पक्षे धर्म्मधर्म्मिभावेन निर्द्देशः

सङ्गच्छते । वेदनविषयत्वन्तु सुतरामनवगमः । यच्चोक्तमानन्दप्रचुरत्वे दुःखाल्पत्वमपि गम्यते । तदपि तुच्छतरम् । यत्र प्रचुरानन्दता तत्रैव प्रतियोगिनः दुःखगताल्पत्वस्यापेक्षेति नियमाभावात् व्यधिकरणचन्द्रवृत्त्यल्पप्रकाशापेक्षयाऽपि सूर्य्यप्रकाशस्य प्राचुर्य्यमिति प्रागेवाभिहितत्वात् । इतरथा एकस्मिन्नेव धर्म्मिणि दुःखाल्पत्वप्रचुरानन्दत्वयोरभ्युपगम्यमाने तमः प्रकाशयोरिव विरोध आपद्येत ।

प्रतिशरीरंप्रिय शिरःपक्षादीनां भेदादानन्दमयोभिद्यते न तु ब्रह्मेति यदाशङ्कितं तदपि न । आनन्दमयस्य ब्रह्मणः स्वस्मादनतिरिक्तैः प्रियादिभिरानन्त्यस्य प्रदर्शितत्वात । यच्चोक्तं नानन्दमयस्याभ्यासः श्रूयते, प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासादिति तदप्यसाधु "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र यथा ज्योतिश्शब्दस्य ज्योतिष्टोमयरत्वं पूर्वकाण्डे निर्णीतम् । तद्वदिहापि प्रातिपदिकस्यानन्दपदस्यानन्दमयपरत्वं युक्तमेव । गुणिनं विना गुणस्य स्थित्यनुपलब्धेः । किञ्च मयटो विकारार्थत्वे कोवाऽऽनन्दमय इति विवेचनीयम्, चेतनोऽचेतनो वा । नाद्यः, तस्य निर्विकारत्वादेकरसत्वाच्च । नान्त्यः, जडत्वादितरथा घटादीनामप्यानन्दाश्रयत्वापत्तेस्तेषामपि जडत्वसाम्यात् । तस्मात्प्राचुर्य्यार्थ एव मयट् आनन्दमयश्च परमात्मा परब्रह्मपुरुषोत्तमः श्रीकृष्ण एवेति सिद्धम् । अपि च यत आनन्दमयोब्रह्मैव, अतएव तस्योपक्रमे जीवोपास्यत्वनिर्देशः "योवेद निहितं गुहायामि"ति ।

जीवासम्भावितविविधदृष्टृत्वरूपसार्वज्ञ्यनिर्देशः । "सह ब्रह्मणा विपश्चिते"ति वाक्यशेषे च । कोह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाती"ति प्रचुरानन्दमयस्य परमात्मनः जीवानन्दयितृत्वं व्यपदिश्यते । अत आनन्दयितव्याज्जीवादानन्दयिता अन्य एव । "सत्यं ज्ञानमनन्तं ब्रह्मे"ति मन्त्रात् । "तस्माद्वा एतस्मादन्योऽन्तरात्मा आनन्दमय" इति ब्राह्मणाच्चानन्दमयः परमात्मेति निश्चीयते । "सोऽकामयत बहु स्यां प्रजायेये"ति हिरण्यगर्भादिजीवासम्भावितप्रधानानपेक्षस्वतन्त्रसृष्टिकामनाव्यपदेशः । "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति जीवास्वादनीयत्वव्यपदेशश्च । परमात्मनि पुरुषोत्तमे प्रत्यगात्मनः सम्बन्धस्य शासनाच्चानन्दमयोब्रह्मैव । एतैरप्युपक्रमोपसंहारगतहेतुभिरानन्दमयो न जीवः

किन्तु ब्रह्मैव । प्रधानस्येव जीवस्यापि न सद्विद्यानन्दवल्ल्यादिकारण वाक्यप्रतिपाद्यत्वमिति सिद्धम् । इत्यानन्दमयाधिकरणस्य तत्त्वतो विमर्शः ॥ आनन्दमयोऽभ्यासात् । १३ । विकारशब्दान्नेति चेन्न प्राचुर्य्यात् । १४ । तद्धेतुव्यपदेशाच्च । १५ । मान्त्रवर्णिकमेव गीयते ।१६। नेतरोऽनुपपत्तेः । १७ । भेदव्यपदेशाच्च । १८ । कामाच्च नानुमानापेक्षा । १९ । अस्मिन्नस्य च तद्योगं शास्ति । २० । इत्यानन्दमयाधिकरणस्थानि सूत्राणि ।

अन्तराधिकरणेषु—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै स सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक् च साम च गेष्णावित्यादिना आदित्यादण्णोरन्तः श्रूयमाण उपास्यः पुरुषोऽभिहितः । स चाकर्म्मनिमित्तातिरमणीयदिव्यमङ्गलविग्रहवत्वेन जीवे क्वचिदप्यसम्भावितेन अयं मण्डले श्रूयमाणः पुरुषो जीवादन्यः पुण्डरीकाक्षत्वलिङ्गेन भगवान्पुरुषोत्तम एव । तत्रैवापहतपाप्मत्वस्योपासकसर्वपापमोचयितृत्वसत्यसङ्कल्पत्वसर्वाधारत्वसर्वात्मकत्वादिरूपस्वाभाविकधर्म्माणामुपपद्यमानत्वात् । नन्वेवम्भूतो विग्रहः कथमकर्म्मनिमित्त इत्यभ्युपगन्तव्यं शरीराणां कर्म्मजन्यत्वनियमस्य लोके दृष्टत्वात् इति चेदुच्यते । इहैव पापाभावत्वेनोक्तस्य पुण्यपापोभयारब्धं शरीरं तावद्वक्तुमशक्यं, पुण्यमात्रारब्धमुच्यते चेदपि लोकदृष्टस्य पुण्यपापोभयारब्धत्वनियमस्य "न ह वै स शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वावसन्तं न प्रियाप्रिये स्पृशत" इति श्रुत्युपबृंहितस्योल्लङ्घनमनिवार्य्यम् । "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः । न तस्य प्राकृता मूर्त्तिः, जगतामुपकाराय न सा कर्म्मनिमित्तिजे" त्युपबृंहणानुसारेण भगवतो दिव्यमङ्गलविग्रहोऽप्राकृतोऽकर्म्मनिमित्त इत्येवं न्यायविद्भिरभ्युपगन्तुं युक्तं लोकदृष्टनियमादुक्तब्राह्मणस्य बलवत्वात् । "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यत्तत्तदचिन्त्यस्य लक्षणमिति" स्मृतेर्जागरूकत्वाच्च । 'य आदित्ये तिष्ठन्नित्याद्यन्तर्य्यामिब्राह्मणे भेदव्यपदेशाच्च नादित्यमण्डलान्तर्गतः पुरुषो जीवः किन्तु तदतिरिक्तं ब्रह्मेत्यभ्युपगन्तव्यमित्युपवर्णितम् । इत्यन्तराधिकरणस्य निष्कर्षः ।

अस्य लोकस्य का गतिरिति पृष्टं दाल्भ्यं प्रति 'आकाश इति होवाचेति जैवालेरुत्तरमुपक्रम्य श्रूयते-"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशोह्येवैभ्यो ज्यायानाकाशपरायणमित्यत्र" सर्वभूतोत्पत्तिस्थितिलयकारणत्वञ्चेतनानां परमप्राप्यत्वरूपं परायणत्वं सर्वतो ज्यायस्त्वादिकञ्च ब्रह्मलिङ्गतयोपन्यस्तं, तानि लिङ्गानि भूताकाशे नोपपद्यन्ते । अतोऽत्रयमाकाशो भूताकाशादन्यः परमात्मैवेत्याकाशाधिकरणे निर्णीतम् ।

## आकाशस्तल्लिंगात् १।१।२३ ॥

छान्दोग्ये कस्यचिद्राज्ञः क्रतौ समागतस्य उषस्तेः प्रस्तावभक्तिदेवताप्रश्ने तामजानेन प्रस्तोत्रा 'कतमा सा देवते' ति पृष्टस्य उषस्तेः प्राण इति होवाचेति' उत्तरमुपक्रम्य श्रूयते-"सर्वाणि ह वा भूतानि प्राणमेवाभिसम्विशन्ती" ति, अत्र सर्वभूतोत्पत्तिकारणत्वं परमात्मव्यतिरिक्ते प्राणवायावसम्भवात् प्राणोऽपि परमात्मैवेति प्राणाधिकरण उपन्यस्तम् ।

## अतएव प्राण. ।२४। इति प्राणाधिक०।६।

छन्दोगास्समामनन्ति—"अथ यदतः परोदिवोज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषुनुत्तमेषूत्तमेषु लोकेष्विदं वाव तदिदमस्मिन्नन्तः पुरुषे ज्योतिरि"ति । ज्योतिरिह प्रसिद्धज्योतिरतिरिक्तं ब्रह्मैव पूर्वत्र "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी"ति सर्वभूतपादत्वाभिधानात् । तस्य प्रसिद्धज्योतिष्वसम्भवात् । पूर्वत्र यस्य सर्वभूत पादत्वमभिहितं तदेवेह ज्योतिश्शब्देन परामृश्यते, द्युसम्बन्धप्रत्यभिज्ञानेनावगमात् । जाठरैक्योपदेशस्तु फलाय तदात्मकत्वानुसन्धानार्थः । ननु पूर्वत्र "गायत्री वा इदं सर्वमि"त्युपक्रम्य 'सैषा चतुष्पदेति' तस्याश्चतुष्पादत्वाभिधानात् गायत्रीच्छन्दोऽभिधानपरोऽयं मन्त्रः । अतो नैतद्गतेन सर्वभूतपादत्वाभिधानेन तथाभूतपरमात्मसिद्धिरिति मैवम् । न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दसस्सर्वभूतपादत्वासम्भवात् । अपि तु ब्रह्मणि गायत्रीसादृश्यानुसन्धानमिह फलायोपदिश्यते । अस्ति "पादोऽस्य सर्वाभूतानी"ति चतुष्पदत्वेनाम्नातस्य ब्रह्मणश्चतुष्पदया गायत्र्या सादृश्यम् । अस्ति चतुष्पदाऽपि गायत्री । दिवि दिव इति

निर्देशभेदेऽपि अर्थाविरोधात्। 'वृक्षाग्रे स्थिते श्येने, वृक्षात्परतः श्येन' इत्यत्रापि व्यपदेशदर्शनात्। 'एतावानस्य महिमे'ति मन्त्रप्रत्यभिज्ञापित पुरुषसूक्तप्रतिपाद्यम्। 'आदित्यवर्णं तमसस्तु पारमि'ति निरतिशयदीप्तियुक्तदिव्यमङ्गलविग्रहवत्त्वेन तत्र प्रतिपन्नं यत्परमपुरुषाख्यं परब्रह्म तदेवात्र निरतिशयदीप्तियुक्तं ज्योतिरिति निर्दिश्यते। ज्योतिश्चरणाभिधानात्।२५। छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथाहि दर्शनम्।२६। भूतादिपादव्यपदेशोपपत्तेश्चैवम्।२७। उपदेश भेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्।२८। इति ज्योतिरधिकरण० ॥ १० ॥

कौषीतकीनामुपनिषदि—"प्रतर्दनोह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे"त्युपक्रम्य 'वरं वृणीष्वे' त्युक्तवति इन्द्रे "मनुष्याय हिततमं वरं त्वमेव जानासि। अतस्तादृशं वरं त्वमेव विचिन्त्यमह्यं देही"ति प्रार्थितस्येन्द्रस्य बचनं श्रूयते-"स होवाच प्राणोऽस्मि प्रज्ञात्मा तं-मामायुरमृतमुपास्वेति" वाक्ये निर्दिष्टाः प्रज्ञात्मत्वानन्दत्वाजरत्वामृतत्वादयो ब्रह्मणोऽसाधारणधर्म्माः प्रसिद्धेन्द्रे कथमपि नोपपद्यन्ते। अपि तु तस्मादर्थान्तरभूते परब्रह्मण्येव अत इन्द्रप्राणनिर्दिष्टः परमात्मैव भवितुमर्हति। ननूपक्रमे 'मामेव विजानीहीति' इन्द्रस्सावधारणस्वात्मानमेवोपास्यमुपदिदेश, तदुपपत्त्यर्थं 'त्वाष्ट्रमहनमिति' महामहिमवत्वेन स्वात्मानं तुष्टाव। तस्मादुपक्रमे जीवविशेष एवोपास्य इति निर्णये सति तदनुसारेणैवौपसंहारिकमानन्दाजमृतत्वश्रवणं स्तावकतया नेतव्यमिति चेन्नैवम्। यतः सकलजीवासम्भाविताध्यात्मसम्बन्धभूयस्त्वमस्मिन्प्रकरणे दृश्यते। तथाहि हिततमत्वसाध्वकर्म्मकारयितृत्वभूतमात्राप्रज्ञामात्राशब्दोदितचेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वादयः परमात्मासाधारणधर्म्माः बहवः सन्ति, ते सर्वेपि धर्म्माः प्रसिद्धेन्द्रे नोपपद्यन्तेऽतः परमात्मैवेन्द्रप्राणशब्दवाच्यः। कथन्तर्हीन्द्रेण 'मामुपास्वे' त्युपदिष्टम्? "ऐतदात्म्यमिदं सर्वमि"त्यादिशास्त्रदृष्ट्या परब्रह्मणः सर्वान्तर्य्यामित्वं सर्वात्मत्वं निश्चित्य तस्यान्तर्य्यामिणमुपास्यत्वाभिप्रायेण तथोपदिष्टम्। यथाऽहमादिपदानां तत्तच्छरीरावच्छिन्नपरमात्मपर्य्यन्तत्वं जानता वामदेवेन स्वान्तर्य्यामिणः स्वात्म्याभिप्रायेणाहं मनुसूर्य्यादिसर्वात्मभाव उपदिष्टः। तथाहि श्रूयते—"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे--अहं मनरभवं सूर्यश्चे"ति।

ननु "न वाचं विजिज्ञासीत वक्तारं विद्यात्" "त्रिशीर्षाणं त्वाष्ट्रमहनं यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरि" त्यादिजीव-मुख्यलिङ्गानामत्रसत्वात्कथमिहाध्यात्मसम्बन्धभूयस्त्वामिति चेदुच्यते:- परमात्मन एव त्रिविधोपासनं विवक्षितं, तत्रानन्दोऽजरोऽमृत इति स्वरूपेणोपासनम् । जीवलिङ्गवाक्यैर्जीवान्तर्यामितयोपासनं मुख्य-प्राणलिङ्गैः प्राणात्मकचिदन्तर्यामितयोपासनम् । अन्यत्रापि त्रिविधो-पासनं दृश्यते, यथाऽऽनन्दवल्ल्यां 'सत्यं-ज्ञानमनन्तम्ब्रह्मे' ति स्वरू-पेणोपासनं भोक्तृभोग्यलक्षणचेतनाचेतनान्तरात्मतयोपासनञ्च । तथा हि श्रूयते-"तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् । निरुक्तञ्चानिरुक्तञ्चानिलयनञ्चनिलयनञ्च विज्ञानञ्चाविज्ञानञ्चे ति । तस्मादिहेन्द्रप्राणशब्दनिर्दिष्टः परमात्मेति । प्राणस्तथाऽनुगमात् । २९ । न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् । ३० । शास्त्र-दृष्ट्या तूपदेशोवामदेववत् । ३१ । जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपा-सात्रैविध्याश्रितत्वादिह तद्योगात् । ३२ । इतीन्द्रप्राणाधिकरणस्थानि सूत्राणि द्रष्टव्यनि ।

## इतीन्द्रप्राणाधिकरणम् ॥ ११ ॥

आत्मपरमात्मतत्वादर्शे प्रथमाध्यायस्य प्रथमपादस्यविमर्शः ॥ छन्दोगास्समामनन्ति "सर्व्वङ्खल्विदम्ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषोभवति तथेतः प्रेत्य" भवति स क्रतुङ्कुर्व्वीत मनोमयः प्राणशरीरोभारूपः सत्यसङ्कल्प इत्या-दिश्रुत्युक्तं सर्वोपादनत्वप्रयुक्तं सर्व्वात्मकत्वविशुद्धमनोग्राह्यत्वप्राणा-धारत्वनियन्तृत्वप्राणानधीनस्थितिमत्वमनोऽनधीनवत्वादिकं जीवव्यावृ-त्तमीश्वरलिङ्गं 'सर्वत्रप्रसिद्धयधिकरण उपन्यस्तम् । ते सर्वे धर्म्मा ब्रह्मण्योपपद्यन्ते नेतरस्मिन्प्रत्यगात्मनि । जगज्जन्मादिहेतुकतादात्म्यस्य प्रसिद्धत्वेनोपदेशात् । प्रत्यगात्मनस्तु सर्वतादात्म्यनिर्देशो नोपपद्यते तस्य प्रतिशरीरं भिन्नस्यान्योन्यतादात्म्यासम्भवात् । तस्मान्मनोमयत्वा-दिगुणकः परमात्मैवात्रोपास्यत्वेन निर्दिष्टः । तत्र सत्यकामत्व-सत्यसङ्कल्पत्वदिव्याप्राकृतस्वभोग्यभूतसर्वविधगन्धवत्वादयोऽसाधारणाः वक्तुमिष्टा गुणाः श्रुत्युपदिष्टाः । तेषां ब्रह्मण एव स्थानार्हता न तु जीवस्य, तथा "एतमितः प्रेत्याभिसम्भवितास्मी" ति प्रकृतस्य ब्रह्मण

उपासकप्राप्यतया निर्देशः । "एष मे आत्माऽन्तर्हृदय" इति षष्ठी-निर्दिष्टादुपासकात् प्रथमान्तेन तस्य व्यतिरेकनिर्देशश्च । "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्जुन तिष्ठती" त्यादिस्मृतिश्च हृदयदेशस्थितमुपास्यं ब्रह्म जीव इति पक्षे नोपपद्यते ।

ननु ब्रह्मे ति पक्षेऽपि "एष मे आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वे ति अल्पोकस्त्वाणीयस्त्वपदेशो नोपपद्यते । मैवं ध्यानार्थमणीयस्त्वमुपदिश्यते न पुनरणीयस्त्वमेवास्य स्वरूपमिति व्योमवच्चैष व्यपदेशोद्रष्टव्यः । अतएव ज्यायान्पृथिव्या ज्यायानन्तरीक्षाज्ज्यायान्दिवः ज्यायानेभ्योलोकेभ्य" इति तस्य स्वाभाविकमहत्वमपि श्रूयते । एवञ्चेत्तर्हि जीवस्येव परस्यापि शरीरान्तर्वर्त्तिचेतनत्वाविशेषात् तत्प्रयुक्तसुखदुःखभोगः प्राप्नुयादिति चेन्न हेतुविशेषात् । नहि शरीरान्तर्वर्त्तिचेतनत्वमात्रं सुखदुःखभोगहेतुः । अपि तु कर्म्मपारवश्यमपि तच्चापहतपाप्मनः परमात्मनो न शक्याशङ्कम् । तस्मादिहोपास्यं ब्रह्म परमेवब्रह्मे ति सिद्धम् । सर्वत्र प्रसिद्धोपदेशात् । १ । विवक्षितगुणोपपत्तेश्च । २ । अनुपपत्तेस्तु न शारीरः । ३ । कर्म्मकर्तृव्यपदेशाच्च । ४ । शब्दविशेषात् । ५ । स्मृतेश्च । ६ । अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च । ७ । सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । ८ ।

## सर्वत्र प्रसिद्ध्यधिकरणम् । १ ।

कठवल्लीषु श्रूयते-"यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इति । यस्य परमात्मनो ब्रह्मक्षत्रमोदनं भक्षणद्रव्यं यस्य मृत्युरुपसेचनं ब्रह्मक्षत्रलक्षणौदनमदनोपकरणं यत्र यस्मिन्प्रकारे स्थितः तं प्रकारं कोवेदेत्यर्थः । अत्रात्ता परमात्मैव सकलचराचरसंहर्त्तृत्वलिङ्गात् । "महान्तं विभुमात्मानं मत्वा धीरो न शोचती" त्यादिना प्रकृतस्य परमात्मनो 'यत्र स' इति तत्पदेन परामर्शादप्येवमवसीयते । नह्यग्नेर्जीवस्य वा कृत्स्नजगदत्तृत्वमुपपद्यते 'अनश्नन्नि' ति कर्म्मफलभोगप्रतिषेधात् । अत्ता चराचरग्रहणात् । ६ । प्रकरणाच्च ।१०। इति अत्रधिकरणम् ।।२।।

ऋतम्पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदोवदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" इति। ऋतं सत्यमावश्यकं कर्म्मफलं पिबन्तौ भुञ्जानौ 'सुकृतस्य लोके' सुकृत साध्ये लोके वर्त्तमानौ परस्य ब्रह्मणोऽर्द्धं स्थानमर्हतीति परार्द्धं हृदयं तस्मिन्परमे श्रेष्ठे गुहा नभोलक्षणा तां प्रविश्य स्थितौ, छायातपशब्दाभ्यां ज्ञाज्ञौ लभ्येत इति ब्रह्मविदोवदन्ति। पञ्चाग्नयः पंचग्निनिष्ठाः त्रिर्नाचिकेताऽग्निश्चितो यैस्ते त्रिणाचिकेतास्तेऽपि वदन्तीत्यर्थः। गुहां हृदयलक्षणां प्रविष्टौ आत्मानौ चेतनावेव न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ, ऋतम्पिबन्ताविति चोच्यते तस्मिन्प्रकरणे जीवपरयोरेवगुहाप्रवेशव्यपदेशदर्शनात्। तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गव्हरेष्ठमि" ति परस्य परमात्मनः स्वानन्यजनेच्छया गुहाप्रवेशव्यपदेशो गृह्यते। या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ति या भूतेभ्यः व्यजायत "इति जीवस्य। अत्र कर्म्मफलान्यत्तीति यौगिकेनादितिशब्देन जीव उच्यते, न तु देवमाता पृथिवी वा तयोरस्मदादिगुहाप्रवेशाभावात्। एवञ्च 'ऋतम्पिबन्ता' ति व्यपदेशः छत्रिन्यायेनाजहल्लक्षणया योज्यः। न च जीवपरयोः प्रकाशरूपत्वात् छायातपत्वनिर्द्देशानुपपत्तिः। अज्ञत्वसर्वज्ञत्ववैलक्षण्येन तदुपपत्तेः "ज्ञाज्ञौ द्वावजावीशानीशा" वित्यादिश्रुतेः। "आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च" त्यत्रैव प्रकरणे जीवस्य रथित्वेन बुद्धेः सारथित्वेन च शरीराकाररथरूढत्ववर्णनात् बुद्धिजीवाविति तु न युक्तम्। "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि" ति तयोः प्राप्तृप्राप्यभावनिर्द्देशात् प्राप्यस्य रथ एव प्राप्तत्वे कस्य प्राप्तये रथारोहः कल्प्यते। जीवपरमात्मात्मनोरेव, उपास्योपासकभावेन प्राप्यप्राप्तृभावेन च विशेष्यमाणत्वात् गुहाप्रविष्टत्वेनात्र जीवपरमात्मानौ गृह्येत इति सिद्धम्। गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्॥ ११॥ विशेषणाच्च॥ १२॥ इति॥

## गुहा प्रविष्टाधिकरणम्॥ ३॥

छन्दोगाः समामनन्ति "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति' तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा

सिञ्चति वर्त्मनी ह्येव गच्छति एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयान्ति य एवं वेद एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भातीति । य एषोऽक्षण्यन्तः पुरुषो दृश्यते दिव्यदृष्ट्या एष आत्मा परमात्मा इति होवाच एतदमृतं स्वतो नित्यमुक्तमभयं स्वतोभयरहितमेतद्ब्रह्म गुणपूर्णमेतस्मिन्भगवति न किमपि स्पृशति । असङ्गोऽसाविति" यावत् । यत्स्थानत्वाच्चक्षुषोऽप्यसङ्गत्वं किन्तस्येति भावेन चक्षुषोऽसङ्गत्वमाह । तद्यदिति । यद्यस्मादेवासङ्गः पुरुषोऽक्षणि विद्यते तत्तस्मादस्मिंश्चक्षुषि यदि सर्पिर्वोदकं वा कश्चित्सिञ्चति तर्हि वर्त्मनी पक्ष्मणी प्रत्येव गच्छति न चक्षुः स्पृशतीत्यर्थः । अत्र परमात्मैवाक्षिपुरुषत्वेन निर्दिष्टः । एतदमृतमेतमभयमित्यादिनोच्यमाणामृतत्वाभयत्वादिगुणानां परमात्मन्येवोपपत्तेः । 'यश्चक्षुषि तिष्ठन्नि'त्यादि श्रुत्या स्थानादेर्व्यपदेशाच्च 'कं ब्रह्म खं ब्रह्मे' ति प्रकृतस्य सुखविशिष्टपरमात्मन उपासनास्थानस्य गुणान्तराणाञ्च विधानार्थं 'स एषोऽक्षणि पुरुष इत्यभिधानादप्यक्षिपुरुषः परमात्मा । "यद्वाव कं तदेव खं यदेव खं तदेव कमि" त्युभयथा विशेषणविशेष्यभावोक्तिः । अनवच्छिन्नसुखस्वरूपं ब्रह्म सुखात्मकानवच्छिन्नवस्तुस्वरूपञ्च ब्रह्मेति उभयथो उपासनासिद्ध्यर्थमिति सर्वमनवद्यम् । श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यस्य श्रुत्यन्तरप्रसिद्धा अर्चिरादिगतिः तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीम् । उपकोसलायाक्षिपुरुषं श्रुतवते, "तेऽर्चिषमभिसम्भवन्तीत्यादिना "एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त" इत्यन्तेन यदाचार्य्य उपदिदेश, ततोऽप्यक्षिपुरुषः परमात्मा । न तु प्रतिविम्बादिः । नहि तस्य नियमेनोपासनाकालेषु चाऽक्षण्यवस्थानमस्ति न वा तस्मिन्निरुपाधिकममृतत्वादिकं सम्भवति । अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥१४॥ सुखविशिष्टाभिधानादेव च ॥१५॥ अतएव च तद्ब्रह्म ॥१६॥ श्रुतोपनिषत्कगत्यभिधानाच्च । ॥१७॥ अनवस्थितेरसम्भवाच्च नेतरः ।१८

## इत्यन्तराधिकरणम् ॥४॥

बृहदारण्यकेऽन्तर्य्यामिब्राह्मणे "य इमंच लोकञ्च परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीत्युपक्रम्य यः पृथिव्यां तिष्ठन्

पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरोयमयत्येष ते आत्माऽन्तर्य्याम्यमृत" इति निर्दिश्यमानः परब्रह्मरूपएवान्तर्यामी विवक्षितः। तस्यैव एषत इति निर्दिश्यमानं जीवाद्व्यतिरिक्तत्वं स्वाभाविकामृतत्वञ्च सङ्गच्छते, अतो न देवतादिपरिग्रहः नाऽपि प्रधानस्यापि अन्तर्य्यामिशब्दवाच्यत्वम् । "अदृष्टोद्रष्टाऽश्रुतो" इति वाक्यशेषे सर्वात्मत्वसर्वनियन्तृत्वादीनां चेतनधर्म्माणामभिधानात् प्रधानवज्जीवोऽपि नान्तर्य्यामी भवितुमर्हति सर्वनियन्तृत्वनिरुपाधिकामृतत्वाद्यसम्भवात् । अपिचैनं जीवं काण्वा माध्यन्दिनाश्च उभयेऽपि अन्तर्य्यामिणो भेदेनाधीयते। "यो विज्ञाने तिष्ठन् विज्ञानादन्तर" इत्यादि काण्वा अधीयते। तत्र स्थाने 'य आत्मनि तिष्ठन्नित्यादिना माध्यन्दिनाः तस्मादन्तर्य्यामी परमात्मैव न जीवः ।

अन्तर्य्याम्यधिदैवादिलोकादिषु तद्धर्मव्यपदेशात ।१६।

न च स्मार्त्त मतद्धर्म्माभिलापाच्छरीरश्च ॥२०॥ उभयेऽपि भेदे नैनमधीयते ॥२१॥ इति अन्तर्य्याम्यधिकरणम् ॥५॥

"अथ परा यया तदक्षरमधिगम्यते यतदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुरश्रोत्रं तदपाणिपादं नित्यं विभु सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः"। अत्र भूतयोन्यक्षरं तावद्ब्राह्मैव। भूतयोनिविवरणार्थे ' यथोर्णनाभिरिति मन्त्रे "तथाऽक्षरात्सम्भवतीह" विश्वमितिविश्वशब्दस्य चेतानाचेतनात्मकसकलप्रपञ्चपरत्वात्, चेतनवर्गे च ब्रह्मकार्यत्ववत् प्रकृतिकार्य्यत्वाभावात् । नायमक्षरशब्दः परमात्मानं परामृशति। "अक्षरात्परतः परे" ति श्रुतावक्षरशब्देन परमात्मनः प्रतिपत्त्या 'तत्परतः पर' इत्यभिधानस्यासङ्गत्वापत्तेः। नहि भूतयोनेरक्षरात्परमात्मनः परतः परत्वं कश्चिदस्ति येन तदभिधानमुपपद्येत। नायं दोषः यया तदक्षरमधिगम्यते' इत्युपक्रमवाक्ये तु अक्षरपदावाच्यं परब्रह्मैव नहि पराख्यविद्यया ब्रह्माभिन्नमधिगन्तुं शक्यते । तेन वाक्येनाक्षरं परमात्मानमभिधाय पुनस्तद्गुणस्वरूपप्रतिपादनाय 'अक्षरात्परतः पर' इत्यभिधानं कृतम् अक्षरात् स्वांशभूताज्जीवात्परतः स्वशक्तेः प्रधानाच्च परस्तयोर्नियन्ता परमात्मेति तदर्थः।

यद्वाऽक्षरात्प्रधानात्परः समष्टिपुरुषः तस्मात्परतः पुरुषात्परः

परमपुरुष इत्यर्थः । "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तत्वतो ब्रह्म विद्यामि" त्यक्षरपुरुषपदसामानाधिकरण्यादयमर्थो निश्चीयते । किञ्च 'सर्वगतमिति विशेषणं प्रधानात्पुरुषाच्च भूतयोन्यक्षरं परमात्मानं व्यावर्त्तयति । 'अक्षरात्परतः पर' इत्यादिना भूतयोन्यक्षरस्य परमात्मनः प्रधानपुरुषाभ्यां भेदव्यपदेशाच्च भूतयोन्यक्षरशब्दनिर्दिष्टं परमात्मैव नेतरौ प्रधानपुरुषौ, "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्र" इत्यादिना परमात्मनोरूपोपन्यासात् ।

अदृश्यत्वादि गुणको धर्म्मोक्तेः । २२ । विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ । २३ । रूपोपन्यासाच्च । २४ । इत्यदृश्यत्वादिगुणकाधिकरणम् ॥ ६ ॥

त्रैलोक्यात्मकरूपोपन्यासादक्षरवद्वैश्वानरोऽपि परमात्मेति निर्णयायास्याधिकरणस्यारम्भः । एवं ह्युपाख्यायते—औपमन्यवादयः पञ्च महर्षयः को न आत्मा किम्ब्रह्मेति मीमांसित्वा निश्चयमलभमानाः, वैश्वानरोपासनापरमुद्दालकं गत्वा तेनापि तस्याकृत्स्नवेदिना "अश्वपतिः कैकेयो वैश्वानरमुपास्ते तमभ्यगच्छामे" त्युक्त्वा उद्दालकषष्ठास्तमभिजग्मुः । स च तेषां ज्ञानं परीक्ष्य वक्तव्यशेषं वक्ष्यामीत्यभिसन्धाय 'औपमन्यव कं त्वमात्मानमुपास्त इत्यादिना तान्षडपि ऋषीन्क्रमेण पृष्ट्वा तैः 'दिवमेव भगवो राजन्नित्यादिभिर्यथाक्रमं द्युसूर्य्यानिलाकाशजलावनिषु वैश्वानरबुद्ध्या स्वैरूपास्यमानतयोक्तेषु दिवादयो वैश्वानरम्प्रति मूर्द्धचक्षुःप्राणमध्यस्थानपादावयवत्वेनोपास्याः, न तु वैश्वानरत्वेनेति व्यस्तोपासनाः प्रतिषिद्ध्य समस्तोपासनाविषयस्य वैश्वानरस्य प्रागुपक्षिप्तं द्युमूर्द्धत्वादिविशिष्टं रूपमेकीकृत्योपदिदेश, 'मूर्द्धैव सुतेजा' इत्यादिनेति तस्माद्वैश्वानरः परमात्मेति न शक्यनिर्णय इत्येवं प्राप्ते सिद्धान्तः—

परमात्मेति शक्यनिर्णय एव । 'को न आत्मा किम्ब्रह्मे'ति जीवात्मनामात्मभूतं परमात्मानं जिज्ञासमानैस्तदभिज्ञ इति राजानमुपसन्नैः प्राचीनशालादिभिः पृष्टेन राज्ञोपदिष्टत्वात् । 'किं ब्रह्मे'ति प्रक्रान्तस्य ब्रह्मशब्दस्यैव स्थाने उत्तरत्र सर्वत्र वैश्वानरशब्दप्रयोगात् सोऽपि ब्रह्मैवाभिदधाति । 'स सर्वेषु लोकेषु' इत्यारभ्य "एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते" इत्युच्यमानं सर्वपापप्रदाहफलञ्च तत्पक्ष एव घटते नान्य-

था । द्यु प्रभृतिपृथिव्यन्तत्रैलोक्यात्मकं शरीरमिहोपदिश्यमानम् ।'अग्नि मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ" वितिश्रुतौ परमात्मनः प्रसिद्धं रूपं प्रत्यभिज्ञापयद्वैश्वानरं परमात्मानमवगमयति । स्यादेतत्, उक्तहेतुभिर्वैश्वानरः परमात्मेति न शक्यनिर्णयः शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च जाठरइत्यपि प्रतीतेः । अग्नि शब्दस्तावद्वाजसनेयके 'सएषोऽग्निर्वैश्वानर' इति वैश्वानरसमानाधिकरणः श्रूयते । छान्दोग्ये च 'हृदयं गार्हपत्योमनोऽन्वाहार्य्यपचन आस्यमाहवनीय" इति वैश्वानरस्याग्नित्रयस्थानकल्पनं क्रियते । 'प्राणाय स्वाहे' त्यादिना वैश्वानरस्य प्राणाहुत्याधारत्वमाम्नायते । तस्य च पुरुषेऽन्तः प्रतिष्ठितत्वं वाजसनेयिभिराम्नायते "स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदे" ति । एवमुक्तहेतुभिर्वैश्वानरो जाठर इत्यपि प्रतीयत इति चेन्नैष दोषः । त्रैलोक्य शरीरस्य वैश्वानरस्य परमात्मनो जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । एतेभ्य एव हेतुभ्य अग्निदेवतायास्तृतीयमहाभूतस्य च वैश्वानरत्वशङ्का प्रत्युक्ता । जैमिनिस्त्वाचार्य्यो मन्यते—यथा वैश्वानर शब्दस्साधारणोऽपि परमात्मासाधारणधर्म्मदर्शनात्, विश्वेषां नराणां नेता विश्वानरः सएव स्वार्थिकाणप्रत्ययेन वैश्वानर इत्येवं परमात्माभिधायको निश्चीयते । एवमग्निशब्दोऽग्रनयनादियोगेन परमात्माभिधायको निश्चीयते । तस्य योगस्य ज्वलनादपि सर्वान्तरात्मनि परमात्मन्येव सुप्रतिष्ठितत्वादिति ।

नन्वपरिच्छिन्नस्य परमात्मनः "यस्त्वेतमेवं प्रादेशमात्रमिति श्रूयमाणं द्यु प्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते । उपासकबुद्धयारोहार्थं तथा प्रादेशमात्रत्वप्रतिपादनं नतु परिच्छिन्नत्वाभिप्रायेण । तत्रैव, अभिविमानमिति । अभितो विगतमानत्वोक्तेः । तथाऽपि प्राकृतमूर्द्धादिमत्वमप्राकृतस्य परमात्मनो न सम्भवतीति चेन्न, उपासनाय तथा पुरुषविधत्वकल्पनोपपत्तेः । परमात्मा वैश्वानरश्चेत् उरः प्रभृतीनाम्, 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यमित्यादिना कथं वेद्यादित्वोपदेशः । जाठरपरिग्रहे हि उपपद्यते इति चेत् उच्यते । तस्य वैश्वानरस्य समाराधनभूताया उपासकै रहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनार्थोऽयमुरः प्रभृतीनां वेद्यादित्वोपदेशः । अतएव प्राणाहुतेरग्निहोत्रत्वसम्पत्तिं परमात्मोपा-

सनोचितफलञ्च दर्शयति श्रुतिः । 'स य इदमविद्वानग्निहोत्रं जुहोति तस्ये" त्यादिः । अपि च एनं परमात्मानं द्युमूर्द्धत्वादिमन्तं वैश्वानरमस्मिन्नु पासकदेहे प्राणाहुत्यधिकरणार्थमामनन्ति । तस्मादिहोपक्रान्तो वैश्वानरः परमात्मेति सिद्धम् ।

वैश्वानरः साधारणशब्दविशेषात् । २५ । स्मर्य्यमाणमनुमानं स्यात् इति । २६ । शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते । २७ । अतएव न देवता भूतञ्च २८ । साक्षादप्यविरोधं जैमिनिः । २९ । अभिव्यक्तेरित्याश्मरथ्यः ।३०। अनुस्मृतेर्बादरिः । ३१ । सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति । ३२ । आमनन्ति चैनमस्मिन् । ३३ । इति वैश्वानराधिकरणम् ॥ ७ ॥

## आत्मपरमात्मतत्त्वादर्शे प्रथमाध्यायस्य द्वितीयपादस्थितानां सूत्राणां विमर्शः । २ ॥

आथर्वणिकाः समामनन्ति 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः तमेवैकं विजानथात्मानमन्यावाचो विमुञ्चथ अमृतस्यैष सेतुरि" ति । अत्र द्युभ्वाद्यायतनं परमात्मा तदसाधारणामृतसेतुत्वश्रवणात् । अमृतसेतुत्वं ह्यमृतत्वप्रापकत्वं सेतुर्हि नद्यादिषु कूलस्य प्रतिलम्भकः एवं संसारार्णवपारभूतस्यामृतत्वस्य प्रतिलम्भकः, आत्मशब्दश्चात्र स्वशब्दः सह्याप्तोतेर्मन प्रत्यये बाहुलके दकारे च सति निष्पन्नः । नियन्तृत्वेन सर्वत्र व्याप्तिमति परमात्मन्येव मुख्यवृत्तिः । नाड्याधारत्वं परस्यापि सम्भवति 'सन्ततञ्च शिराभिस्त्वि त्यादि श्रुतेः । बहुधा जायमानत्वमपि तस्यास्ति 'अजायमानो बहुधा व्यजायत' । अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" । इत्यादि श्रुतिस्मृतिदर्शनात् । किंच 'यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्य मुपैति । यथा नद्यः स्यन्दमाना समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि" ति मुक्तप्राप्यत्वश्रवणादपि द्युपृथिव्याद्यायतनं परमात्मा । अपि च यथाऽस्मिन्प्रकरणे प्रधानप्रतिपादकशब्दाभावात् न प्रधानं द्युपृथिव्याद्यायतनम्, एवञ्जीवोऽपि तत्प्रतिपादकशब्दप्राप्यभावात् । परमात्मनस्सकाशाज्जीवस्य भेदोक्तेश्चापि न तदप्र

हणम । किञ्च प्रकरणमिदं परमात्मन इति प्रागदाराधिकरणे दर्शितम् अतोऽप्ययं परमात्मा ।

अपि चास्मिन्प्रकरणे "द्वा सुपर्णा सयुजा सखाया" इत्यादिमन्त्रः श्रूयते । अत्र यद्यपि कर्म्मफलात्ता जीवः, तदनश्नन्दीप्यमानः परमात्मा च प्रतिपाद्यते । तथापि द्युभ्वाद्याधारः परमात्मैवेति युक्तम् । देदीप्यमानत्वोक्त्या तत्रैव प्राकरणिकसर्वज्ञतत्वाद्यन्वयस्वास्यात् । "द्युभ्वाद्यायतनं स्वशब्दात् ।१। मुक्तोपसृप्यव्यपदेशात् ॥२॥ नानुमानमतच्छब्दात् ॥३॥ प्राणभृच्च । ॥४॥ भेदव्यपदेशाच्च ॥५॥ प्रकरणात् ॥६॥ स्थित्यदनाभ्याञ्च ॥७॥ इति द्युभ्वाधिकरणम् ।१।

छान्दोग्यैरिदमाम्नायते "श्रुतं तद्यो वमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भावः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्वि" ति श्रीमन्नारदेन पृष्टो निजगुरुर्मोक्षशास्त्राचार्य्यः, श्रीसनत्कुमारो नाम ब्रह्मेत्युपदिदेश । पुनरस्ति 'भगवोनाम्नोभूय, इति पृष्टो मनो वाचो भूय इत्युपदिदेश । एवं नामादिप्राणपर्य्यन्ताः पञ्चदशपदार्था उपदिष्टाः । प्राणोपदेशानन्तरं प्रश्नं विनैवेदमुपदिश्यते—"एष तु अतिवदति यः सत्येनातिवदतीतिभूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञासे यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पमित्यादि । अत्र भूमशब्दः, 'पृथ्वादिभ्य इमनिजिति पृथ्वादिगणपठितात् बहुशब्द्भावार्थे इमनिच् प्रत्यये 'बहोर्लोपो भू च वहो' रिति बहोः परस्य इमनिच इकारलोपे बहुशब्दस्य भू इत्यादेशे च सन्निष्पन्नोबहुत्ववाची बहुत्वं वै पुल्यं सङ्ख्याविशेषश्च तथाऽत्र वैपुल्यमर्थः । यत्रान्यत्पश्यति तदल्पमित्यल्पप्रतियोगित्वश्रवणात् ।"आकाशोवाव तेजसोभूयानि" त्यादौ बहुत्वसङ्ख्याहीनेऽप्याकाशादिके वैपुल्यवति बहुशब्दनिष्पन्नभूमशब्ददर्शनाच्च । अत्र भूमा परमात्मैव न तु प्राणविशिष्टोजीवः । प्राणशब्दनिर्द्दिष्टाज्जीवाद्वैलक्षण्येन भूम्न उपदेशात् । पूर्व्वपर्य्यायेष्वनुक्तस्यातिवादित्वस्य प्राणपर्य्याये प्रतिपादनात्, उपक्रान्तात्मोपदेशः प्राणएव समाप्त इति मत्वा श्रीनारदम्भूयः पृच्छति सनत्कुमारः, प्राणविज्ञानमप्युपक्रान्तात्मविषयं न भवतीतितेन सम्यगतिवादित्वं, किन्तु सत्येन परमात्म-

नेति सत्यविज्ञानं उपचिक्षेप। ततः "सोऽहम्भावः सत्येनातिवदानीति" पृष्टवते तस्मै विज्ञानमति श्रद्धादिसाधनपरम्परया तमेव सत्य शब्दोक्तं परमात्मानं भूमानमुपदिदेश। 'आत्मन एवेदं सर्वमि'ति श्रूयमाणस्य सर्व्वकारणत्वस्यान्यत्रासम्भवात् भूमा परमात्मैव। किञ्च "योवै भूमा तदमृतं सभगवः कस्मिन्प्रतिष्ठितः स्वे महीम्नि स एवाधस्तादि" त्यादौ 'आत्मनः प्राण' इत्यादौ च श्रुतानां स्वभाविकामृतत्वमहिमप्रतिष्ठितत्वसर्वोत्पादकत्वनिरतिशयसुखप्रदत्वादीनांधर्म्माणां परमात्मन्येवोपपत्तेः भूमा परमात्मैवेति सिद्धम्"।

"भूमा सम्प्रसादादध्युपदेशात्।८। धर्म्मोपपत्तेश्च ॥९॥

इति भूमाधिकरणम् ॥२॥

बृहदारण्यके "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाच एतद्वै तदक्षरं गार्गि यद्ब्राह्मणा अभिवदन्ति। अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमित्यादि" श्रूयते। अत्राक्षरं परमात्मा नाव्याकृतम्प्रधानम्। एतस्मिन्नक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्यव्याकृताधारतयाऽक्षरस्योपदेशात्। यदूर्ध्वं गार्गि! दिवोयदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते। कस्मिस्तदोतञ्च प्रोतञ्चेति प्रश्ने आकाशे तत्सर्वमोतञ्च प्रोतञ्चेति द्वितीयप्रश्नस्य उत्तरतया। एतद्वै तदक्षरमित्यादि। "एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतः प्रोतश्च" त्यन्तं कृत्स्नमक्षरब्राह्मणम्प्रवृत्तम्।

ननु माऽस्तु प्रधानस्याक्षरशब्दवाचित्वं दर्शनाद्यविषयस्य प्रत्यगात्मनस्तथात्वं वक्तव्यम्। यथा वा आरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितमिति श्रवणेन तस्य सकलाचिद्वर्गाधारत्वोपपत्तेश्चेन्मैवम्। "एतस्य वाऽक्षरस्य प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वाऽक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठत" इत्यादिना प्रशासनाधीनधारकत्वश्रवणात्। अत्र प्रधानस्य प्रत्यगात्मनो वाऽक्षरशब्दवाच्यत्वं नोपपद्यते। "एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतमि" त्यादिनाद्रष्टृत्वादिचेतनधर्म्मेण प्रधानस्य सर्वद्रष्टृत्वादिधर्म्मेण जीवस्य व्यावृत्तेर्दर्शनात्। तस्मादक्षरम्परमात्मैवेति सिद्धम्।

"अक्षरमम्बरान्तधृतेः ॥९॥ सा च प्रशासनात् ॥ १० ॥ अन्याभाव व्यावृत्तश्च ॥ ११"

इत्यक्षराधिकरणम् ।

प्रश्नोपनिषदि "सत्योह वैतद्भगवन्मनुष्येषु प्राणायत्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयती" ति पिप्पलादम्प्रति सत्यकामप्रश्ने, "एत द्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेन एकतरमन्वेती" ति तत्प्रतिवचनमुपक्रम्य "स यद्येकमात्रमभिध्यायीत स तेनैव सम्विदितस्तूर्णमेव जगत्यामभिसम्पद्यते, तमृचोमनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवत्यथो द्विमात्रेण मनसि सम्पद्यते सोन्तरिक्षं यजुभिरुन्नीयते सोमलोकं स सोमलोकविभूतिमनुभूय पुनरावर्त्तते, यः पुनरेतं त्रिमात्रेण ओमित्यनेनाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नो यथा पदोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते"। अत्र ध्यातव्य ईक्षणीयश्च पुरुषः सर्वेश्वरः पुरुषोत्तम एव । उत्तरमन्त्रगतात्, अमृतादिव्यपदेशात् । 'एतस्माज्जीवघनात् परात्परमितिव्यपदेशाच्च जीवत्वाविशेषेण हिरण्यगर्भस्यापि जीवघनकोटिनिविष्टत्वात् । ब्रह्मलोकशब्दश्च भगवल्लोकपरः सर्वपापविमुक्तप्राप्यत्वात् । यत्तत्कवयो वेदयन्ते, इत्यत्र तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इत्यादि श्रुत्यन्तरसिद्धिकविशब्दोक्तसूरिदृश्यत्वलिङ्गात । 'एतद्वै सत्यकामे' त्यादिना उपक्रान्तपरोपासनाप्रकरणाच्च । तस्माद्ध्यानेक्षणविषयभूतः पुरुषः सर्वेश्वर इति सिद्धम् । "इति कर्म्मव्यपदेशात्सः ।१२।

इति ईक्षति कर्म्माधिकरणम् ।

छान्दोग्ये "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तरः तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । अत्र दहराकाशः परमात्मा न भूताकाशः

तत्रापहतपाप्मत्वाद्यसम्भवात्। ननु दहरवाक्यादुत्तरस्मिन्प्रजापतिवाक्ये जीवस्याप्यपहतपाप्मत्वादिकमाम्नातम्। तस्माज्जीवस्यैव दहरत्वं वाच्य मिति चेत्। नैष दोषः। दहरविद्यायां नित्याविर्भूतापहतपाप्मत्वादिगुण एव दहराकाशः प्रतीयते। प्रजापतिविद्यायामाविर्भूतस्वरूपासाधारणा अपहतपाप्मत्वादयोधर्म्माः श्रूयन्ते, तस्माद्दहराकाशे जीवत्वाशङ्का न कार्य्या। यद्येवं दहरविद्या प्रकरणे, "अस्माच्छरीरात्समुत्थाये त्यादिना जीवपरामर्शः किमर्थः। दहराकाशस्य जीवस्वरूपाविर्भाव प्रदर्शनार्थः प्रजापतिवाक्योक्तपरामर्शः। न च जीव एव दहराकाश इति प्रतिपादनार्थः।

ननु यदि जीवो न दहरः कथमल्पपरिमाणश्रवणमिति चेत्। अत्र वक्तव्यमुत्तरं, 'सर्व्वत्रप्रसिद्धयधिकरणे' निचाय्यत्वादेवं व्योम-वच्चेति' पूर्वमेवोक्तम्। ननु संसारदशातिरोहितं जैवापहतपाप्मत्वादि-व्यतिरेकेण नित्याविर्भूतमन्यदपहतपाप्मत्वादिकमस्तीत्यत्रैव न प्रमाणम्। दहरविद्याप्रकरणेऽपहतपाप्मत्वादिश्रवणस्य प्रजापतिवाक्यसिद्ध सम्प्रतिपन्नजैवापहतपाप्मत्वादिविषयत्वोपपत्तेः। अतो नित्याविर्भूतैरपहतपाप्मत्वादिभिर्दहरो न जीव इत्येतन्न युक्तं किन्तु सूक्ष्मत्वलिङ्गाद्दहरोजीव इत्येतद्युक्तमिति चेदुच्यते। परमात्मानुकाररूपा तत्साम्यापत्तिर्हि मुक्तिः। "यदा पश्यः पश्यते रुक्मवर्णमित्यादि"श्रुतेः। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेति" स्मृतेश्च। एवञ्च जीवस्य मुक्तावपहतपाप्मत्वादिगुणाविर्भावः परमात्मनो नित्याविर्भूतापहतपाप्मत्वादिगुणत्वमन्तरेण न सम्भवति। अन्यथा जीवस्य मुक्तौ तत्साम्यापत्त्ययोगात्, अतो जीवस्य मुक्तिदशाविर्भाववज्जैवापहतपाप्मत्वादिप्रतिपादकप्रजापति वाक्यसामर्थ्यादेव तस्य नित्याविर्भूतमपहतपाप्मत्वादिकमस्तीति सिद्धेः। तद्विषयत्वं दहरविद्याप्रकरणश्रुतस्य, 'य आत्माऽपहतपाप्म'-त्यादेर्युक्तमिति ततः परमात्मैव दहराकाशो न जीव इति सिद्धम्।

"दहर उत्तरेभ्यः। १४। गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च। १५। धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः। १६। प्रसिद्धेश्च। १७। इतरपरामर्शात्स इति चेन्न असम्भवात्। १८। उत्तराच्चेदाविर्भूतस्वरूपस्तु। १९। अन्यार्थश्च परामर्शः। २०। अल्पश्रुतेरिति चेत्तदुक्तम्।

वाक्यशेषगतेभ्यो हेतुभ्यः । वाक्यशेषे हि "यावान्वाऽऽकाशस्तावानेषोऽन्तर्हृदय आकाश" इति दहराकाशस्य भूताकाशाद्भेदस्तेनोपमानोपमेयभावो निबद्धयते । तदनन्तरम्, "अस्मिन्द्यावा पृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्य्याचन्द्रमसावुभौ विद्युन्नक्षत्राणीति" प्रकृतं दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वंजगदाधारत्वमुच्यते । ततः "यच्चास्येहास्ति यच्च नास्ति सर्वं तस्मिन्समाहितमि"त्यस्योपासकस्य लोके यद्भोग्यजातं वर्त्तते तच्च दहराकाशे समाहितमिति तस्य निरतिशय भोग्यत्वेन निरतिशयानन्दत्वं प्रदर्श्यते । तदेतत्सत्यं ब्रह्मपुर मिति तमेव दहराकाशमेतच्छब्देन परामृश्य तस्य सत्यभूतब्रह्माख्यपुररूपत्वमुच्यते । ततः, "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासोऽपि सत्यकामस्सत्यसङ्कल्प" इति वर्ण्यते । अतः, "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्व्वेषु लोकेषु कामचारो भवती"त्यात्मशब्देन परामृष्टं तदन्तर्वर्तिनश्च काम्यानपहतपाप्मत्वादिगुणांश्चानुसन्दधतां फलं प्रदर्श्यते । तथा तद्यथा "हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाःसर्व्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विविदन्त्यनृतेन हि प्रत्यूढा" इति । एतं प्रकृतदहराकाशं निर्दिश्य तत्राहरहः सर्वेषां गमनं गन्तव्यस्य तस्य ब्रह्मलोकशब्देन निर्देशश्च दृश्यते । परमात्मनि खलु सर्व्वेषामहरहः सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम् । "एवमेव खलु सौम्येमाः प्रजास्सति सम्पद्य न विदुः सति सम्पत्स्यामह" इति । ब्रह्मलोकशब्दश्च तस्मिन्दृष्टः । "एष ब्रह्मलोकस्सम्राडिति होवाचेति" । तथा अथ य आसेतुर्विधृतिरेषां लोकानामसम्भेदायेति, प्रकृतदहराकाशमात्मेति निर्दिश्य तस्य जगद्विधारकत्वं प्रतिपाद्यते स च परमात्मनो महिमा । "एष सर्व्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसम्भेदायेति"श्रुत्यन्तरात् । एतेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यो दहराकाशः परमात्मा । आकाशशब्दस्य हि परमात्मन्यपि वैदिकी प्रसिद्धिरप्यस्ति । "आकाशो ह वै नामरूपयोर्निर्वहिता सर्व्वाणि ह भूतान्याकाशादेव समुत्पद्यन्ते" श्रुत्यन्तरे ।

ननु मा भूद्भूताकाशस्य दहरत्वं, प्रत्यगात्मनः, दहरप्रकरणे परामर्शात् तस्य दहराकाशत्वं स्यात् । अत्र "सम्प्रसादोऽस्माच्छरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यते" । इति वचनस्य तत्र सत्वादिति चेन्न ।

। २१ । अनुकृतेस्तस्य च । २२ । अपितु स्मर्य्यते । २३ । इति दहराधिकरणम् ।

कठवल्लीषु श्रूयते— " अङ्गुष्ठमात्रः पुरुषोमध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य ततो न विजुगुप्सते । " इत्यादि । अत्राङ्गुष्ठप्रमितः परमात्मा, भूतभविष्यदात्मकसर्व्वजगदीशितृत्वश्रवणात् । तस्य देहेन्द्रियादिनियन्तृत्वविषयतया सङ्कोचायोगात् । न चेदृशमैश्वर्य्यं कर्म्मतन्त्रे जीवे सम्भवति । कथं तर्ह्यनवच्छिन्ने परमात्मनि प्रमितत्वमिति चेन्नापरिच्छिन्नस्यापि तस्योपासनार्थमुपासकहृदि गतस्य तद्धृदयापेक्षयैवाङ्गुष्ठपरिमाणत्वाभिधानात् । न च खरतुरगभुजगादीनामङ्गुष्ठाभावादङ्गुष्ठमात्रत्वं हृदयोपाधिकमित्येतन्न व्यापकमिति वाच्यम् । मनुष्याणामुपासनाधिकारात् । तेषाञ्च हृदयस्य तदङ्गुष्ठप्रमितत्वात् । " शब्दादेव प्रमितः । २४ । हृद्यपेक्षया तु मनुष्याधिकारत्वात् । २५ । इति प्रमिताधिकरणम् । ६ ॥

मनुष्याधिकारप्रसङ्गाद्देवादीनां ब्रह्मविद्यायामधिकारोऽस्ति न वेति विचार्य्यते । ब्रह्मोपासनं मनुष्याणामुपरि ये देवादयः तेष्वपि सम्भवत्येवेति भगवान्बादरायणो मन्यते । न च विग्रहाभावेन तेषां सामर्थ्याभावः, सर्व्वास्वप्युपनिषत्सु सृष्टिप्रकरणे देवादीनां विग्रहवत्व श्रवणात् । " विश्वानि देव वयुनानि विद्वानित्यादि " मन्त्रेभ्यः, नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रोजायते: इन्द्रोवरुणः सोम इत्यादिवाक्यैः देवादीनां सृष्टिप्रतिपादनात् सर्व्वासु श्रुतिषु इन्द्रादिदेवानां कर्म्मविशेष फलत्वप्रतिपादनाच्च । इन्द्राग्न्यादीनां सहस्राक्षसप्तहस्तत्वादिविशिष्ट विग्रहविशेषसिद्धिः ।

" सहस्राक्षो गोत्रभिद् वज्रबाहुरस्मासु द्रविणं दधातु " इत्यादि मन्त्रैः । ननु मन्त्रार्थवादादिवशात् देवानां विग्रहवत्वाभ्युपगमे कस्यवा देवा यज्ञमागच्छन्ति कस्य वा न ? बहूनां यजमानानामित्यादि बहुतर मन्त्रार्थवाददर्शनात् देवानां यज्ञदेशागमनमप्यङ्गी कर्त्तव्यम् । कथमेकस्येन्द्रस्य युगपदनेकयज्ञदेशागमनं घटते ? भूतवशिनान्तेषां योगिनामिव युगपद्बहुशरीरपरिग्रहसम्भवादिति ब्रूमः । मा भूदिन्द्रादीनां विग्रहवत्वे कर्म्मणि विरोधः, शब्दे तु स्यात् । विग्रहाणामनित्यत्वावश्यम्भावेन

तद्विशिष्टवाचिनामिन्द्रादिशब्दानां तदुत्पत्तेः पूर्व्वं पश्चाच्चार्थशून्यत्वस्या निवार्य्यत्वात् । इति चेन्न, इन्द्रादीनामिन्द्रादिशब्दप्रभवत्वेन्द्रादि शब्दानां घटादिशब्दवत् प्रवाहानादिव्यक्तिपरम्परागतजातिवाचित्वात् । यथा हि शिल्पी शिल्पशास्त्रावगतमिन्द्राद्याकारं स्मृत्वा तदाकारां प्रतिमां निर्म्माति तथा प्रजापतिर्वेदावगतं पूर्व पूर्वेन्द्राद्याकारं स्मृत्वा तत्तदाकार विशिष्टानिन्द्रादीन् सृजतीति हि वेदेन रूपे व्याकरोत् सोऽन्तरिक्षम सृजदिति ।

ननु माभूदर्थद्वारको वैदिकशब्दे विरोधः शब्दद्वारकस्तु स्यात् । मन्त्रार्थवादादीनां प्रतीयमानार्थे प्रामाण्यमुपपादितम् । तथा च मन्त्रकृतो वृणीते विश्वामित्रस्य सूक्तम्भवति । संहिताकारपदकारसूत्रकारब्राह्मणकाराणामित्यादिप्रामाण्याद्वेदस्य पौरुषेयत्वमनिवार्य्यमिति चेन्नायमपि दोषः । " विश्वामित्रस्य सूक्तम्भवतीत्यादि " वेदशब्देभ्यो विश्वामित्रादीनां तत्तत्सूक्तविशेषदर्शनादिरुपकार्य विशेषान्नामरूपाणि चानुसन्धाय पूर्व्वकल्पानुष्ठितपुण्यवशात् विश्वामित्रादीन्सूक्तादीनन धीत्यैव द्रष्टुं समर्थान्प्रजापतिः सृष्ट्वा मिश्वामित्रादिपदेषु निवेशयति । अनधीत्य तत्तत्सूक्तादिदर्शनसामर्थ्यमेव च मन्त्रकृत्वादिकं, ततो न वेदानित्यत्वापत्तिः । अथ स्याच्चतुर्म्मुखस्य स्वमानेन परार्द्धद्वयजीवनः, चतुर्य्युगसहस्त्ररूपैकैकदिवसात्मकस्यावान्तरकल्पावसाने तावत्काल प्रमाणरात्रिरूपे नैमित्तिकप्रलये भूर्भुवस्स्वरिति त्रैलोक्यमात्रस्य नाश इति वेदसत्वात् भवतु वेदशब्दपूर्विका तदनन्तरसृष्टिः । तदीयवर्षशताव साने तावत्प्रमाणो यः प्राकृतप्रलयकालः तदाऽव्याकृतपर्य्यन्तसर्व्वनाशे वेदस्यापि नाशावश्यम्भावात् कथन्तदनन्तरं महाकल्पादौ वेदशब्द पूर्व्विका सृष्टिः ? कथञ्च प्राकृतप्रलये नश्यतो वेदस्य नित्यत्वमिति चेदुच्यते:—

तदा वेदानां नाशो न दोषः । "छन्दांसि जज्ञिरे तस्मादि" ति श्रुतिषु महाकल्पादौ तेषामपि सृष्टिश्रवणात् । समानुपूर्वीकत्वेतु नित्यत्वे नास्ति विरोधः । महाकल्पावृतावपि सृज्यानां समाननामरूपत्वात् । न च तदसिद्धिः । "यो ब्रह्माणं विद धाति पूर्व्वं योवै वेदांश्च प्रहिणोति तस्मा" इति मन्त्रो महा-

कल्पादौ ब्रह्मसृष्ट्यनन्तरं तस्मै वेदान्तप्रदानश्रवणस्य ब्रह्मा शिल्पि न्यायेन पूर्व्वकल्पइन्द्रादीनां नामरूपाणि मन्त्रार्थवादेभ्योऽवगत्य तत्समाननामरूपानिन्द्रादीन्सृजतिवियेतदर्थत्वात । तस्माद्देवादीनां विग्रहवतामर्थित्वसामर्थ्ययोगादस्ति ब्रह्मविद्यायामधिकार इति सिद्धम् ।

तदुपर्य्यपि बादरायणस्सम्भवात् ॥ २६ ॥

विरोधः कर्म्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२७॥ शब्द इति चेन्नातः प्रभावात्प्रत्यक्षानुमानाभ्याम् ॥२८॥ अत्तएवच नित्यत्वम् । ॥२८॥ समाननामरूपत्वाच्चावृतावप्यविरोधो दर्शनात् स्मृतेश्च ॥३०॥

## इति देवताऽधिकरणम् ।

पूर्व्वाधिकरणे सामान्येन देवानां तदभीप्सितपरोपासनाधिकारोऽस्तीत्युक्तम् । अथोपासनाविशेषेषु देवताविशेषाणामधिकारोऽस्ति न वेति चिन्त्यत इति सङ्गतिः । अस्ति छान्दोग्ये मधुविद्या, तस्यां वस्वादय उपास्याः प्राप्यश्च श्रूयन्ते, तस्यां वस्वादीनां नास्त्यधिकारः' स्वस्य स्वोपास्यत्वासम्भवात । स्वपदप्राप्तेः फलत्वासम्भवाच्चेति पूर्वपक्षः । किञ्च "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि" ति श्रुतिःन देवादीनां ब्रह्मविद्याधिकारप्राप्त्यर्था, मनुष्याणामिव तेषामप्यर्थित्वादिसत्वेनाधिकारस्य स्वतः प्राप्तत्वात् । किन्तु ज्योतिषां ज्योतिर्ब्रह्मैवोपासत इति परिसङ्ख्यार्था अतोऽपि" न वस्वादीनां मधुविद्यायामधिकार इति । सिद्धान्तस्तु वस्वादीनामपि तस्यामस्त्येवाधिकारस्तेषामपि स्वान्तर्यामितया ब्रह्मोपासन सम्भवात् । यएतामेवं ब्रह्मोपनिषदं वेदेत्युपसंहारे ब्रह्मविद्यात्वश्रवणात्, तेषामपि भाविवस्वादित्वप्राप्तिपूर्व्वकब्रह्मप्रेप्सासम्भवाच्च । मध्वादिष्वसम्भवादनधिकारञ्जैमिनिः । ॥३०॥ ज्योतिषि भावाच्च ॥३१॥ भावन्तु बादरायणोऽस्ति हि ॥३२॥

इति मध्वधिकरणम् ॥८॥

वस्वादीनामर्थित्वसामर्थ्यसद्भावान ब्रह्मविद्यायामधिकारोऽस्तीत्युक्तं, तर्हि शूद्रस्यापि तत्सद्भावादधिकारः स्यादिति शङ्कानिवृत्त्यर्थमस्याधिकरणस्यारम्भः । अस्ति च छान्दोग्योपनिषदि शूद्राणा-

मधिकार लिङ्गम्। तत्र हि सम्वर्गविद्यायां विद्याधिकारिणः शूद्रेत्यामन्त्रणं दृश्यते। आजहारेमाः शूद्रानेनैव मुखेन मामालापयिष्यथा' इत्येव तत्रोपाख्यायते। एवं शूद्रस्यापि विद्याधिकारोऽस्तिति प्राप्ते राद्धान्तः। शूद्राणां तावन्न ब्रह्मस्वरूपतदुपासनप्रकारपरिज्ञानोपायोऽस्ति। न च पुराणादिकं तदुपायः। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि"ति वेदतात्पर्य्यनिर्णयार्थत्वेन तस्य विनियुक्तत्वात्। शूद्रेत्यामन्त्रणमपि न शूद्राणां विद्याधिकारे लिङ्गम्। इह शूद्रशब्दस्य रूढ़या जातिवाचित्वाभावात्। शुचेर्दश्चेत्युणादिसूत्रेण 'शुच शोक' इति धातोः निष्पन्नस्य तस्य योगेन शोचितृत्वार्थकत्वात्। किञ्च जानश्रुतेः क्षत्रियत्वावगमादपि तद्विषयशूद्रशब्दो यौगिकः। उपाख्यानोपक्रमे—"जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस सह सर्वत आवसथान्मापयाञ्चक्रे, सर्वत एव मेऽन्नमत्स्यन्तीति जानश्रुतेर्दानपतित्वं सर्वेभ्यः पक्वान्नदायित्वञ्चोक्तम्। मध्ये च "सह सञ्जिहान एव क्षत्तारमुवाचे" ति क्षतृप्रेषणम्। "इयं जाया अयं ग्रामो यस्मिन्नास" इति रैक्वाय कन्याप्रदानं, रैकस्तदा यत्र ग्रामे स्थितस्तस्य ग्रामस्य दानञ्चोक्तम्। एतैर्लिङ्गैर्जानश्रुतेः क्षत्रियत्वमवगतम्। स्यादेतज्जानश्रुतेः क्षत्रियत्वनिर्धारणमिह प्रायपाठस्याधीनं तत् अभिप्रतारिणः क्षत्रियत्वनिर्णयाधीनं तदपि तस्य चैत्ररथत्वनिर्धारणाधीनं तच्च तस्य कापेयाज्यत्वनिर्धारणाधीनं तत्कुतो निर्धार्यते इति चेदत्रोच्यते। कापेयस्तावत् श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायत इति तावन्निर्विवदम्। तत्सहोपविष्टोऽभिप्रतारी कापेययाज्यः, चित्ररथवंश्यश्चेति बुद्धिरौत्सर्गिकी। बाधकाभावात् कापेययाजकयोगेन चित्ररथवंश्यत्वसिद्धिः। तस्मात्सम्वर्गविद्यान्वयिनोर्द्वयोर्ब्राह्मणस्य द्वितीयः क्षत्रिय इत्युत्तरदर्शनात्। तत्प्रायपाठादपि रैक्वस्य द्वीतीयो जानश्रुतिः क्षत्रियः। अत इह आमन्त्र्यमाणस्य क्षत्रियत्वावगमात् न शूद्रेत्यामन्त्रणेन तस्य विद्याधिकारः विद्याप्रदेशेषु उपदेशस्य उपनयनसंस्कारपरामर्शात् शूद्रस्य तदभावोभिलापाच्च न शूद्रस्य विद्याधिकारः।

छान्दोग्ये ह्येवमुपाख्यायते—शैशवे मृतपितृकस्सत्यकामो विद्यार्थमाचार्य्यमुपेत्य ब्रह्मचर्य्यञ्चरिष्यामि, किं गोत्राहमिति मात-

रम्पृष्ट्वा तया त्वज्जनकपरिचरणं कृत्वैव स्थिताऽस्मि नाहं गोत्रं वेदेत्युक्तः गौतममासाद्य, ब्रह्मचर्य्यं भवति वत्स्याभ्युपेयां भगवन्त मित्युक्त्वा 'किं गोत्रस्त्वमिति पृष्टो "नाहं गोत्रं वेद माताऽपि नावेदीत् माता मे जबाला सत्यकामोऽहमित्युवाच । अथ गौतम स्सत्यवचनेन नायमब्राह्मण इति निर्धार्य " समिधः सौम्याहरोपत्वा नेष्य " इत्युक्तवान् । शूद्रत्वाभावनिर्णये सति तमुपनेतुमनुशासितुं प्रवृत्तो गौतमस्तस्मान्नास्ति शूद्रस्य विद्यायामधिकारः। किञ्च शूद्रस्य वेदवाक्यश्रवणतदध्ययनतदर्थविचारज्ञानानुष्ठानानि प्रतिषिध्यन्ते।"पद्यू-ह वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमि-ति। न चास्योपदिशेद्धर्म्मं न चास्य व्रतमादिशेदि" ति स्मृतेश्च । तस्मान्न शूद्रस्य विद्यायामधिकार इति सिद्धम् । "शुगस्यतदनादरश्रवणात्तादा द्रवणात् सूच्यतेहि ॥३३॥क्षत्रियत्वावगतेश्च॥३४॥चोत्तरत्र चैत्ररथेन लिंगात् ३५ संस्कारपरामर्शात्तदभावाभिलापाच्च॥३६॥ तदभावनिर्धारणे च प्रवृत्तेः ॥३७॥ श्रवणाध्ययनार्थप्रतिषेधात् ॥३८॥ स्मृतेश्च ३६ ॥ इत्यपशूद्राधिकरणम् ।

एवं प्रासङ्गिकेऽधिकरणत्रये वृत्ते यदङ्गुष्ठाधिकरणान्ते स्थितं तत्सूत्रद्वयेन समापयति । अस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितं ततो निस्सृतमिदं सर्वं जगदुद्यतवज्रतुल्यादेतस्माद्यन्मइतो भयं तस्माद्धेतोः एजति, कम्पते । तच्छासनातिवृत्तौ प्रत्यवायो-भविष्यतीति भयात् स्वस्वकार्येषु प्रवर्त्तते । "भयादस्याग्निस्तपति भयात्तपति सूर्य्य" इत्यादि । एवं रूपात्कम्पनादपि अङ्गुष्ठप्रमितः परमात्मा । "न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासासर्वमिदं विभाति" ति परमात्मसाधारणं सर्वतेजसां छादकं तेषां कारणभूतमनुग्राह्यकञ्च अङ्गुष्ठमात्रपुरुषस्य ज्योतिर्दृश्यते ।

तं देवा ज्योतिषां ज्योतिः यस्यादित्यो भामुपयुज्य भातीत्यादि" श्रुत्यन्तरदर्शनात् ' अथर्वणस्यैव न तत्र सूर्य्य इति मन्त्रस्य पाठाच्च । एवम्भूतज्योतिर्दर्शनादपि अङ्गुष्ठमात्रः पुरुषः परमात्मा । "कम्पनात्।४०। ज्योतिर्दर्शनात् । ४१ । इति प्रमिताधिकरणस्य शेषोभागः ॥

पूर्व्वं दहराकाशस्य परब्रह्मत्वसमर्थनायाल्पश्रुतिपरिहारे कृते तत्प्र-

सङ्गादङ्गुष्ठमात्रस्य परमात्मत्वं साधितम्। तत्प्रसङ्गागतन्तु अधिकरणत्रयम्। अथ पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदनन्तरश्रुतस्याकाशवाक्यस्य परमात्मपरत्वं निरूप्यत इति सङ्गतिः। छान्दोग्ये दहरविद्यानन्तरं श्रूयते। "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे" ति। अत्रायमाकाशः परमात्मा न मुक्तात्मा, मुक्तात्मभेदोपपादकनामरूपनिर्वोढृत्वश्रवणात्। नामरूपकर्तृत्वन्तु जीवस्य न बन्धमुक्त्यवस्थयोः सम्भवति जगद्व्यापारनिषेधात्। तत्तु परमात्मन एव धर्म्मः। "नामरूपे व्याकरवाणि, तस्मादेतद्ब्रह्म नामरूमन्नञ्च जायते।" इत्यादिश्रुतेः ब्रह्मांशभूतस्य प्रत्यगात्मनः ब्रह्मव्यतिरिक्तस्थित्यभावे न ब्रह्माभिन्नत्वेऽपि स्वासाधारणधर्म्मवत्वेन भेदोऽपि "प्राज्ञेनात्मना। सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर मिति" सुषुप्तौ "प्राज्ञेनान्वारूढ उत्सर्जन्यातीत्युत्क्रान्तौ चाल्पज्ञतया जीवाद्भेदे सर्वज्ञतया परमात्मनोव्यपदेशात्। "सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः सर्वमिदम्प्रशास्ति एष सर्वेश्वर" इत्यादि श्रुतिभ्यस्तयोर्भेदः। तस्मादाकाशशब्दार्थः परमात्मैवेति सिद्धम्। "आकाशोऽर्थान्तरत्वादिव्यपदेशात्। ४२। सुषुप्त्युत्क्रान्त्योर्भेदेन। ४३। पत्यादिशब्देभ्यः। ४४। इत्यार्थान्तरत्वाधिकरणम् ॥ १० ॥ इत्यात्मपरमात्मतत्त्वादर्शे प्रथमाध्यायस्य तृतीयपादस्थसूत्राणां विमर्शः।

इह पादे साङ्ख्यतन्त्रप्रतिपादनच्छायापन्नानां वाक्यानां साङ्ख्याभिमतार्थनिरासेन ब्रह्मणि समन्वयः प्रतिपाद्यते। काठके श्रूयते-- "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरि" ति। ननु साङ्ख्याभिमतं प्रधानमिदमव्यक्तं, "महतः परमव्यक्तमव्यक्तात्पुरुषः पर" इति तत्प्रक्रियाप्रत्यभिज्ञानात् न तु शरीरमव्यक्तं, व्यक्ते तस्मिन्नव्यक्तशब्दस्य शक्त्यभावात्। एकेषां कठानां शाखायामानुमानिकम्प्रधानमपि जगत्कारणत्वेन श्रवणाच्चेति चेन्न। अव्यक्तशब्देनात्र शरीरस्यैव रूपकेण रथसादृश्येन ग्रहणात्। तथाहि "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव चे" त्यादि वचनेन रथत्वेन रूपितं शरीरन्तु परिशेषादव्यक्तशब्देनोच्यते।

ननु व्यक्तशब्दार्हं शरीरं कथमव्यक्तशब्दवाच्यम्भवतीति चेन्नायं दोषः । भूतसूक्ष्मस्याव्यक्तस्यावस्थान्तरापन्नत्वेन शरीरत्वाभिधानात् । कारणात्मना शरीरमव्यक्तशब्दवाच्यं, कार्यकारणयोरभेदात् । यदि सूक्ष्मव्याकृतमभ्युपगम्यते तर्हि तदेव साङ्ख्यमतापन्नमिति कथं तन्निरसनम् । स्वतन्त्रमेवाव्याकृतं कार्याणि साधयतीति । साङ्ख्यमतन्निरसनीयम् । परमपुरुषाधीनत्वात् तेन प्रेर्यमाणमेवाव्याकृतम्महदादिकार्य्यजातं साधयतीत्यस्माकमभ्युपगम इति विशेषः । किञ्च यदि साङ्ख्याभिमतमव्यक्तमिति श्रुतिरवदयत् तदा तस्य तत्कार्यस्य व्यक्तजातस्य ज्ञेयत्वमप्यवदयत् । प्रकृते तथात्वं नास्तीति न प्रधानमव्यक्तशब्दवाच्यम् । व्यक्ताव्यक्तज्ञविज्ञानान्मोक्ष इति साङ्ख्यानामुद्घोषात् । ननु " अशब्दमस्पर्शमरूपमव्ययन्तथाऽरसन्नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते " इत्यनन्तरमेव सा श्रुतिरव्याकृतम्प्रधानं वदति । व्यक्तधर्मभूतशब्दादिनिषेधानामव्यक्तपर्य्यवसानस्य न्याय्यत्वात् महतः परत्वोक्तेश्च यत्तदिति सामान्यतोऽपि निर्देशस्याव्याकृतपरत्वौचित्यादिति चेन्मैवम् । "विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः । परमम्पदमि" ति परमपुरुषप्रकरणात् । स एव ह्यन्यत्र निचाय्यत्वेन प्रतिपाद्यते । अपिचास्मिन्प्रकरणे प्राप्यस्य परमपुरुषस्य प्राप्त्युपायस्योपासनस्य प्राप्तुरुपासकस्यचेति त्रयाणां ज्ञेयत्वेनोपन्यासः प्रश्नश्च दृश्यते तस्मान्नेह तान्त्रिकस्याव्यक्तस्यानुवादप्रसक्तिरस्ति । अपि च "बुद्धेरात्मा महान्पर " इत्यत्र महत्त त्वन्न ग्राह्यम् ' चेतनरूढात्मशब्दसामानाधिकरण्यात् । अतोऽपि जीवात्मपरत्वेनोच्यमानमव्यक्तं न साङ्ख्यतन्त्रसिद्धं प्रधानमिति युक्तं महत्तत्वपरत्वानभिधानात् । " अनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च । १ । सूक्ष्मन्तु तदर्हत्वात् । २ । तदधीनत्वादर्थवत् । ३ । ज्ञेयत्वावचनाच्च । ४ । वदतीति चेन्न प्राज्ञोहि प्रकरणात् । ५ । त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । ६ । महद्वच्च । ७ । इत्यनुमानाधिकरणम् ॥ १ ॥

पूर्वत्र रूपकवाक्ये शरीरश्रवणादव्यक्तं शरीरं न तन्त्रसिद्धा प्रकृतिरित्युक्तम । तर्हि तदश्रवणात् तन्त्रसिद्धा प्रकृतिस्स्यादिति प्रत्यवस्थानात्सङ्गतिः । श्वेताश्वतरोपनिषदि पठ्यते "अजामेकां लोहितशुक्लकृष्णां

बह्वीः प्रजाः सृजमानां सरूपा इत्यादि । अत्र ब्रह्मात्मिकाऽजा ग्राह्या न तु साङ्ख्यतन्त्रसिद्धा प्रकृतिः । विशेषनिर्णायकाभावात् । यथा "अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन्यशो निहितमित्या" स्मिन्मन्त्रे यौगिकेन चमसशब्देन चम्यते भक्ष्यतेऽनेनेति व्युत्पत्तिमता भक्षणसाधनमात्रं प्रतीयते न कश्चिद्विशेषः यौगिकशब्दानामर्थप्रकरणवाक्यशेषादिभिर्विनाऽर्थनिश्चयासम्भवात् । तत्र यथेदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्द्ध्व बुध्न इति वाक्यशेषः शिरोऽत्र चमसइति निश्चायकोऽस्ति नैवमिहाजा तन्त्रसिद्धा प्रकृतिरित्यत्रकिञ्चिन्निश्चायकमस्ति । अपि च "तद्देवा ज्योतिषां ज्योतिरथ । यदतः परोदिवोज्योतिरित्यादि श्रुतिप्रसिद्धं ज्योतिर्ब्रह्म उपक्रमः प्रारम्भकं प्रवर्त्तकं कारणमिति ब्रह्मकारणकत्वाम्नानाद् ब्रह्मात्मिकाऽजा प्रतिपत्तव्या । तैत्तिरीया हि "अणोरणीयान्महतो महीयानि"ति मन्त्रेण ब्रह्मोपक्रम्य "सप्तप्राणाः प्रभवन्ति तस्मादि"त्यादिना "यस्माज्जाता न परा नैव किञ्चना से"त्यन्तेन प्राणसमुद्रपर्वतादिकस्य सर्वस्य प्रपञ्चस्य ब्रह्मणस्सकाशात् प्रभवमधीयानास्तेषाम्मन्त्राणांम्मध्य एव 'अजामेकामि'ति मन्त्रं पठन्ति । अतोऽत्र ब्रह्मात्मिकाऽजा विवक्षितेत्यवसीयते । ननु कथं प्रकृतेः परमेश्वरकारणकत्वं जन्मराहित्यञ्च? स्थूलसूक्ष्मभेदान्नेतद्विरुद्धं, यथा मधुविद्यायां आदित्यस्यैकस्यैव कारणावस्थायां मधुत्वव्यपदेशानर्हे सूक्ष्मत्मना स्थितस्य कार्य्यावस्थायां वस्वादिदेवभोग्यमधुत्वेनोदयास्तमयत्वेन च कल्पनमविरुद्धं तद्वत्प्रकृतेऽपि, तस्मान्मन्त्रप्रोक्ता ब्रह्मात्मिमकाऽजेति सिद्धम् ।

"चमसवदविशेषात् । ८ । ज्योतिरुपक्रमा तु तथा ह्यधीयत एके । ९ । कल्पनोपदेशाच्च मध्वादिवदविरोधः । १० ।

इति चमसाधिकरणम् ॥ २ ॥

अजाशब्दस्य स्वतन्त्रप्रकृतिपरत्वे विशेषकस्याभावात् वाक्यान्तरानुरोधेन ब्रह्मात्मकत्वं साधितम् । तदत्र न प्रसरति । ब्रह्मसत्वे सङ्ख्याधिक्यात्तेन विनैव सङ्ख्यापूरणेनाब्रह्मात्मिका प्रकृतिरिति निश्चयसम्भवादिति शंकया सङ्गतिः । वाजसनेयिनस्समामनन्ति "यस्मिन्पञ्च पंचजना आकाशश्च प्रतिष्ठितः, तमेव परमात्मानं विद्वान्ब्रह्मामृतमिति अयम्मान्त्रस्साङ्ख्यतन्त्रसिद्धत्वपरः पंचविंशतिसङ्ख्याप्रतीतेः । तत्प्र-

तीतिश्च पञ्चशब्दविशेषितात्पञ्चशब्दात्, एवम्प्राप्ते सिद्धान्तः। पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न साङ्ख्यतत्त्वप्रतिपत्तिः, तेभ्यः पृथग्भावात्, तद्वैलक्षण्यात्। यस्मिन्पञ्च पञ्चजना इति यच्छब्दनिर्दिष्टस्य सर्वाधारस्य परमात्मन आकाशस्य चातिरिक्तत्वात्। यस्मिन्पञ्च जना इत्यत्र दिक् संख्ये संज्ञायामिति समासस्तस्य संज्ञाशब्दत्वमभ्युपगम्योपपद्यते। ननु तर्हि पञ्चजनसंज्ञिकाः केचिदिह वर्णनीया इति चेत्-सत्यम्। सन्त्येव वाक्यश्रुताः प्राणादयः। "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरिति" वाक्यशेषे हि षष्ठ्यन्तैः प्राणादिशब्दैः प्रसिद्धाः प्राणादयः श्रूयन्ते। ननु शतपथब्राह्मणे माध्यन्दिनानामेवान्नपाठो न काण्वानामतस्तेषां प्राणादयः पञ्चपञ्च जना न स्युरिति चेदुच्यते। काण्वानां पाठेऽन्नेऽसति "तद्देवा ज्योतिषां ज्योतिरि" ति पूर्वमन्त्रपठितज्योतिषा पञ्चत्वसंङ्ख्यापूर्येत। तस्माद्ब्रह्मसम्बन्धराहित्यस्य प्रधानस्य न श्रुतिवेद्यत्वम् " न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशेषात्। १२। ज्योतिषैकेषामसत्यन्ने ॥ १३॥

इति संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

मा भूवन्पञ्चपञ्चजनास्सांख्यतत्त्वानि तथापि ब्रह्म कारणमिति सिद्धांत्यभिमतं न सिद्ध्यति, कारणवाक्यानां परस्परविरोधेन क्वचिदपि प्रतिष्ठितत्वाभावात्। तानि विहाय स्मृत्यनुसारेण प्रधानस्यैव कारणतया वक्तव्यत्वादिति प्रत्यवस्थानात्सङ्गतिः छान्दोग्ये " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" ति सत्पूर्विका सृष्टिराम्नाता। तत्रैव "तद्धैक आहुरसदेवेदमग्र आसीदि"त्यसत्कारणवादमुपक्षिप्य "कुतस्तु खलु सौम्यैवं स्यात्कथमसतस्सज्जायेते" ति असत्कारणवादं निराकृत्य 'सदेव सोम्ये'ति सत्पूर्विका सृष्टिः स्थिरीकृता। तैत्तिरीयके तु छान्दोग्ये निराकृतमसत्कारणवादं परिगृह्य असत्पूर्विका सृष्टिराम्नाता। " असद्वा इदमग्र आसीत्ततो वै सदजायत " इति। बृहदारण्यकेऽपि तथैवाम्नायते एवं कारणवाक्यानां परस्परविरोधेन ब्रह्म जगत्कारणमिति निश्चेतुं न शक्यम्। अत आप्ततमकपिलादिप्रणीतस्मृतिभिः प्रधानं कारणमिति निश्चेयम्, तत्रैव सर्वाणि कारणवाक्यानि योजनीयानि, इति पूर्वपक्षः। अत्र सिद्धान्तः, परब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते। जग-

जन्मादिसूत्रे। सर्वज्ञत्वसत्यसंकल्पत्वादिविशिष्टम्ब्रह्म यथा व्यपदिष्टं तथा भूतस्य तस्यैकस्यैव "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः, तत्तेजोऽसृजते" त्यादि श्रुतिभिराकाशादिषु कारणत्वेन प्रतिपादनात्। नन्वस्तु तथा प्रतिपादनं तथाऽप्युदाहृतवाक्यजातविगानं कथं समाधेयम् ? उच्यते, आनन्दवल्ल्यां "सोऽकामयत बहु स्यां प्रजायेये"ति पदेन पूर्वप्रकृतमानन्दमयं परामृश्य तस्य जगत्सृष्टिसंकल्पमुक्त्वा "इदं सर्वमसृजत यदिदं किञ्चे"त्यादिना तस्य सर्वस्रष्टृत्वसर्वानुप्रवेशसर्वात्मभावानभिधाय, तदप्येष श्लोको भवती' त्युक्तं सर्वस्मिन्नर्थे साक्षित्वेन 'असद्वा इदमग्र आसीदि'ति श्लोक उदाहृतः। तस्मादानन्दमयसमाकर्षात्। असच्छब्दस्तस्मिन्नेवानभिव्यक्तनामरूपाभिप्रायो वक्तव्यः। तस्माद्ब्रह्मैककारणकं जगदिति सिद्धम्। "कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः। १४। समाकर्षात्"। १५।

इति कारणत्वाधिकरणम् ॥ ४ ॥

यद्यपि पूर्वाधिकरणेषु सकलवेदान्तप्रसिद्धब्रह्माधिष्ठानत्वेन प्रधानस्य जगत्परिणामित्वमुक्तम्। तथापि तथाभूतं ब्रह्म सांख्यपुरुषस्तस्मिन्नेव सर्वेषां वेदान्तानां पर्य्यवसानमभ्युपेयं सर्वपूर्वाधिकरणाक्षेपेणायम्पूर्वपक्षः तत एवास्य पूर्वाधिकरणसङ्गतिश्च। कौषीतकीब्राह्मणे अजातशत्रुर्नाम काशिराजः स्वसमीपमागस्य 'ब्रह्म ते ब्रवाणी, त्युक्तवन्तं बालाकिं गार्ग्यं सहस्रं दद्म एतस्यां वाचि जनको जनक इति वै जना धावन्तीति प्रशस्य बालाकिना "य एवैष आदित्ये पुरुषस्तमेवाहमुपास" इत्यादिभिर्वाक्यैर्ब्रह्मत्वेनोपदिष्टानादित्यचन्द्रविद्युत्स्तनयित्न्वादिगतान् पुरुषानब्रह्मत्वेन तत्पुरुषोक्त्यनन्तरमेव प्रत्याख्याय ततस्तूष्णीम्भूते तस्मिन् किमेतावदेव परिज्ञानमिति पृष्ट्वा तेनैतावदेवेत्यभिमते "मृषा वै खलु मासंवदिष्ठा ब्रह्म ते ब्रवाणी" त्युक्त्वा तमपोद्य "यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य चैतत्कर्म स वै वेदितव्य" इति स्वयमुपदिदेश। यो वेदितव्येनोपदिष्टः स पुरुषोत्तमः न तु साङ्ख्यतन्त्रसिद्धः पुरुषः। ब्रह्म तेब्रवाणी' ति ब्रह्मप्रकरणात्। 'यस्य चैतत्कर्म्मे' त्यत्र एतच्छब्दस्तावत्प्रत्यक्षादि सन्निधापितसकलजगद्वाची प्रकरणोपपदादिसंकोचकाभावात्। अतस्तत्समानाधिकरणः कर्मशब्दोऽपि कार्यत्वयोगेन सकलजगद्वाचीत्यभ्युपेयमिति। ननु 'एतैरात्मभिर्भूङ्क्त' इति भोक्तृत्वम्। अथ "अस्मि-

न्प्राण एवैकधा भवती"ति सप्तम्यन्तनिर्दिष्टवेदितव्यपुरुषाश्रतमुख्यप्राणसम्बन्धश्चेति जीवलिङ्गद्वयं वेदितव्यपुरुषस्य जीवत्वगमकवाक्यशेषे श्रूयते इति चेत्, तस्य निर्वाहः प्रतर्दनविद्यायामेवाभिहितः। उपक्रमोपसंहारबलात्। ब्रह्मपरत्वेन निश्चिते वाक्ये तन्मध्यगतान्यन्य लिङ्गानि तदनुरोधेन नेयानीति। कथं तन्नयनमितिचेत्। इत्थं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थं जीवसंकीर्तनमिति तदिदं प्रश्नव्याख्यानाभ्यामेव गम्यते प्रश्नस्तावद्राज्ञा गार्ग्यं प्रति कृतः। "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदगादिति "एवं राज्ञा पृष्टं सुषुप्तजीवाधिकरणमविजानति गार्ग्ये हितानाम हृदयस्य नाड्य" इत्यादिना "तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीत्यन्तेन जीवस्य "सुषुप्त्यधिकरणं हृदयावच्छिन्नं ब्रह्म प्राप्तं मार्गतयाऽधिगन्तव्यासु नाडीषु सर्पणमुक्त्वा "अथास्मिन्प्राण एवैकधा भवती" ति राज्ञैव कृतं स्वपृष्टार्थविवरणम्। तस्य व्याख्यानमिदं सुषुप्तौ जीवस्य ब्रह्मणि लयप्रतिपादकम्। "सता सोम्य तदा सम्पन्नो भवती" ति छान्दोग्यश्रुत्यैकार्थ्यात्। "यत्रैष एतत्सुप्तोऽभूत्। यस्य विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदगादिति"। "यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशस्तस्मिञ्छेत" इति वाजसनेयिशाखाम्नातबालाक्यजातशत्रुसम्वादगतप्रश्नोत्तरैकार्थ्याच्च। तस्माद्वेदितव्यतयोपदिष्टः पुरुषस्सुप्तजीवाधिकरणत्वेन ततो भिन्न उक्त इति भगवान् परमपुरुष एवेति सिद्धम्। "जगद्वाचित्वात्। १६। जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातम्। १७। अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके"। १८।

इति जगद्वाचित्वाधिकरणम् ॥ ५ ॥

बृहदारण्यके मैत्रेयीब्राह्मणे याज्ञवल्क्यः स्वयं प्रविव्राजयिषया मैत्रेयीकात्यायन्योः स्वभार्ययोर्वित्तसम्विभागं चिकीर्षन् वित्तेन किममृतत्वं प्राप्तुं शक्यमिति मैत्रेय्या पृष्टो यथोपकरणवतां जीवितं स्यात्। "अमृतत्वस्य तु नाऽशास्ति वित्तेने" त्युक्त्वा "येनाहन्नामृता स्यां किमहं तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूही" ति तया पुनरमृतत्वं पृष्टः "न वाऽरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु

कामाय पतिः प्रियो भवती" त्यादिभिः "न वा अरे सर्वस्य कामाय सर्वं प्रियम्भवत्यात्मनस्तु कामाय सर्वं प्रियं भवती" त्यन्तैर्वाक्यैः पतिजायापुत्रवित्तादिकं सर्वं यद्भोगार्थतयैव प्रियं भवति तं पत्यादिसर्वभोक्तारमात्मानमुपक्रम्य "आत्मा वा अरेद्रष्टव्यश्श्रोतव्यो निदिध्यासितव्य" इत्यमृतत्वसाधनमात्मदर्शनं तत्साधनानि श्रवणादीनि चोपदिश्य "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमि" त्यात्मविज्ञानेन सर्वविज्ञानमुक्त्वा "स यथाऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरे ऽस्य महतोभूतस्य निःश्वसितमेतद्यदृग्वेदोयजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्याउपनिषदश्श्लोकास्सूत्राण्यनुव्याखानानि व्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकस्सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानीति नामरूपात्मकसकलप्रपंचकारणत्वं प्रदर्श्य "प्रज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ती" ति तस्योत्पत्तिविनाशविशेषविज्ञानाभावानुक्त्वा "एतावदरे खल्वमृतत्वमि" ति तस्यात्मनो वेदनेनामृतत्वसाधनमुपसञ्जहारेति श्रूयते । अमृतत्वसाधनवेदनेनोपक्रमस्तेनोपसंहारोमध्येचामृतत्वसाधनात्मदर्शनश्रवणमननध्यानकीर्त्तनञ्च प्रकरणस्य परमात्मविषयत्व एवोपपद्यते, न तन्त्रसिद्धपुरुषविषयत्वे । "नान्यः पन्था" इति श्रुतेः । श्रुतिविरुद्धस्य "पुरुषं निर्गुणम्प्राप्ये" त्यादितान्त्रिकवचनस्य हेयत्वात् । कथम्ब्रह्मणि पतिजायादिवाक्यघटना । इत्थं पतिजायापुत्रवित्तादयोमत्प्रयोजनायाहमस्य प्रियस्स्यामिति स्वसङ्कल्पात्प्रिया न भवन्ति किन्तु परमात्मनस्स्वाराधकप्रियप्रतिलम्भनविषयकामनानिर्वृत्तय इति । परमात्मा हि कर्म्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । "एष ह्येवानन्दयाती" ति श्रुतेः । न तु किमपि वस्तु स्वतः प्रियमप्रियं वा भवति । यथोक्तं भगवता पराशरेण । 'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय पुनः प्रसादाय च जायते । तस्माद्दुःखात्मकन्नास्ति न च किञ्चत्सुखात्मकमि" ति । नन्वित्थं पतिजायादिवाक्यं परमात्मविषयतां प्राप्नो तु नाम "तान्येवानुविनश्यती" त्यादि जीवपरामर्शः कथन्तद्विषयतां प्राप्नुयादिति चेत्, इत्थं जीवस्तावदीश्वरादुत्पद्यते । यथा सुदीप्तात्पावकाद्विस्फुलिंगा" इत्यादिश्रवणात् । अतस्तयो, कार्यकारणत्वाभ्यां भेदोमुख्यएव । कार्यस्य

तज्जत्वादिनातदनन्यत्वाद भेदोऽपि मुख्यः । तस्माज्जीवात्मशब्देन परमात्मनोऽभिधानमित्याश्मरथ्य आचार्य्यो मन्यतेस्म। "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य, स्वेन रूपेणाभिनिष्पद्यते, यथा नद्यःस्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय यथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि" ति शरीरादुत्क्रमिष्यतो जीवस्य एवम्भावात् परमात्मना सह तादात्म्यभावात् जीवशब्देन परमात्माऽभिधीयते । न तु परमात्मकार्यतया "न जायते म्रियते वा विपश्चित् ज्ञा ज्ञौ द्वावजौ, अजोनित्यः शाश्वतोऽयमि" त्योदिश्रुतिस्मृतिभिस्तस्योत्पत्तिप्रतिषेधादित्यौडुलोमिराचार्य्यो मन्यते स्म । "य आत्मनि तिष्ठन्नात्मनोन्तरोऽयमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरोयमयति स त आत्माऽन्तर्याम्यमृतः, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्यादिश्रुतेस्स्वनियम्यभूते जीवात्मन्यात्मतया परमात्मनोऽवस्थितिर्हेतोर्जीवशब्देन परमात्माऽभिधीयते । इति नियम्यनियन्तृत्ववित्काशकृत्स्न आचार्य्यो मन्यते स्म । तदेवं मुनित्रयमतद्वारा प्रसंगाद्भेदाभेदप्रकारो भगवता दर्शितः । स्वमतत्वेन च श्रुतीनां विरोधपरिहाराय स्वाभाविको जीवब्राह्मणोर्भेदाभेदसम्बन्धः, "अंशो नाना व्यपदेशादि" त्यादिना प्रतिपादितः । तत्रोपक्रमे आत्मशब्दः परमात्मपर एव, तस्यैव परमात्मन उपासनं मोक्षोपायत्वेन "आत्मा वा अरे" इत्यादिनाऽभिधीयते । एतेभ्योभूतेभ्यःसमुत्थाय तान्येवानुविनश्यती" त्येनेन परमात्मपराङ्मुखस्य संसारो "न प्रेत्य संज्ञाऽस्ती" त्यनेन तदुपासकस्य मुक्तिर्निर्दिश्यते तस्माच्चिदचिद्भिन्नाभिन्ने सर्वकारणे मुक्तगम्ये सर्वनियन्तरि ब्रह्मणि मैत्रेयीब्राह्मणवाक्यं समन्वितं भवती" ति सिद्धम् । "वाक्यान्वयात ॥ १९ ॥ प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः । २० । उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः" ॥ २२ ॥ इति वाक्याधिकरणम् ॥ ६ ॥

## प्रकृत्यधिकरणञ्च प्रागेव व्याख्यातम् ।

एतेन समन्वयोक्ताधिकरणसमुदायेन सर्वेऽप्युक्तानुक्तकारणप्रतिपादनपरा वेदान्ता व्याख्याता भवन्तीति शेषः । तस्मात्सर्वज्ञान-

शक्तिबलैश्वर्य्याद्यनन्तगुणादिनिलये निश्शेषदोषदोषाघ्रातसीम्नि परब्रह्मणि श्रीपुरुषोत्तमे वेदान्तानां समन्वय इति सिद्धम् । यदि सर्वज्ञानशक्त्याद्याश्रयः परब्रह्मभूतो मुकुन्दाख्यो जगद्धेतुर्न स्यात्तर्हि प्रतिनियत कालकोकिलाद्युत्पत्तिः प्रतिनियतकालमम्बुदादिगर्जनादिः प्रतिनियत ब्राह्मणादिवर्णाश्रमक्रियादिः प्रदिनियतस्वर्गादिसुखं नरकादिदुःखञ्च न स्यात् । किञ्च मनसाऽप्यतर्क्यरचनस्य जगतस्तदल्पैकदेशवृत्तिविविधनाडीजालादिसन्निवेशविशिष्टशरीरस्य चोत्पत्तिर्न स्यादित्यादिकाः शास्त्रैकमूलानुकूलतर्काश्चात्रानुसन्धेयाः । एतेन सर्वे व्याख्याता व्याख्याताः ॥ २३ ॥

इति सर्वव्याख्यानाधिकरणम् ॥ ७ ॥

अन्तस्तोयलसन्नवाम्बुदघटा सङ्घट्टकारत्विषं
चञ्चच्चिल्लिकमम्बुजायतदृशं बिम्बाधरं सुन्दरम् ।
मायूरच्छदबद्धमौलिविलसद्धम्मिल्लभालज्वल
दीप्यत्कुण्डलरत्नरश्मिविलसद् गण्डद्वयोल्लासितम् ॥ १ ॥

काञ्चीनूपुरकंकणद्युतिलसत्केयूरभूषान्वितं
श्रीराधामुखपद्मलुब्धमधुपं वन्यप्रसूनस्रजं ।
अन्योऽन्यं रसबद्धप्रेष्ठदयितादोर्वल्लिवीतं लसद्रासक्रीडनलोलुपं मनसिजाक्रान्तं सुकान्तम्भजे ॥ २ ॥

यद्वक्षःस्थलमन्दिरं प्रविलसन्माणिक्यमुक्तावली
दोलान्दोलनरागलोलहृदया निस्सीमभाग्योदया
श्रीराधासमलंकरोति करुणापीयूषपाथोनिधिं
वन्दे कुञ्जविहारिणं प्रतिदिनं राधानिवासालयम् ॥ ३ ॥

सदासेव्यम्पुंसां सविधमनवद्यं निरुपमम् ।
हरेः श्रीकालिन्द्याश्चरणयुगलं कौस्तुभभृतः ॥
सदा ध्येयं वन्द्यं निरवधिककारुण्यजलधेः ।
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥ ४ ॥

महर्षिश्री ६ सनन्दादिप्रवर्त्तितानादिवैदिकसत्सम्प्रादायानुगताशेष-
रसिकचक्रचूडामणिस्वामीश्रीहरिदासपादपद्माश्रिताश्रित-
श्रीस्वामिनिशरणदेवशिष्येण कुरुक्षेत्रान्तर्गतपुण्डरीक-
ग्रामलब्धजनिना श्रीवृन्दावनवास्तव्येन गौडवंशा-
वतंसश्रीशालग्रामोपाध्यायात्मजेन श्रीवृन्दावन-
निवासि तर्कोभयमीमांसापारावारीण
श्रीसुदर्शनाचार्य्यशास्त्रिलब्ध-
विद्येन तर्क-तीर्थ-तर्करत्न-
तर्कवागीशेनामोलकरामेण
संगृहीतआत्म-परमात्म-
तत्वादर्शः सम्पूर्णतां
गतः ।



श्रीनिकुंजविहारिणे नमः ।

# आत्म-परमात्मतत्त्वादर्शे शुद्धाशुद्ध-पत्रम् ।

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| देवस्त्र | देवस्य | १ | १८ |
| मुपचाया | मुपचया | ३ | १३ |
| प्रसाङ्गात् | प्रसङ्गात् | ” | २० |
| यात्वापत्तः | यत्वापत्तेः | ” | २७ |
| शून्य त्व | शून्यत्व | ” | ३१ |
| विरूद्धा | विरुद्धा | ४ | २४ |
| रेव | एव | ४ | ३० |
| वायवात्मक | वाय्वात्मक | ” | ३३ |
| संहन्यते | संहन्यन्ते | ” | ३३ |
| चेत्त्यते | चेत्यते | ५ | १२ |
| परममाण्वा | परमाण्वा | ६ | ६ |
| तदाहु | तदाहुः | ” | १६ |
| कला | काला | ” | १६ |
| हेतुत्वना | हेतुत्वान्ना | ” | ” |
| प्युत्पति | प्युत्पत्ति | ” | ” |
| रूपेणानु | रूपेणानु | ” | ६ |
| वृति | वृत्ति | ” | ५ |
| मृत्पिडस्य | मृत्पिण्डस्य | ” | ६ |
| समनतर | समनन्तर | ” | ६ |
| चित | चित्त | ” | १० |
| पञ्चषु | पञ्चसु | ” | १२ |
| सिद्धर्थ | सिद्ध्यर्थ | ” | १८ |
| त्त्वणे | त्वणे | ” | १८ |
| र्योत्पति | र्योत्पत्ति | ” | १६ |
| मभ्पुप | मभ्युप | ” | २० |

| अशुद्ध । | | शुद्ध | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|
| ग्रहिणी | ...... | ग्राहिणी | ...... | " | २७ |
| लध्व्य | ...... | लब्ध्य | ...... | " | २८ |
| सम्भति | ...... | सम्भवति | ...... | " | २९ |
| ऽस्तीइत्या | ...... | ऽस्तीत्या | ...... | ७ | २१ |
| कारणं | ...... | कारणा | ...... | ८ | ८ |
| विशेष | ...... | विशेषा | ...... | " | " |
| आकश | ...... | आकाश | ...... | " | ११ |
| प्रतीत्युप | ...... | प्रतीतिरुप | ...... | " | १६ |
| आकशे | ...... | आकाशे | ...... | " | २४ |
| तीत्यु | ...... | तीतिरु | ...... | ८ | १६ |
| प्रग्भा | ...... | प्राग्भा | ...... | ९ | ६ |
| समान | ...... | समाना | ...... | " | ३० |
| पूर्वर्व | ...... | पूर्व पूर्व | ...... | १२ | ३० |
| ज्ञानां | ...... | ज्ञान | ...... | १३ | १३ |
| लाद्य | ...... | काद्यु | ...... | १४ | ३३ |
| सिध्या | ...... | सिद्ध्या | ...... | १६ | ५ |
| कर्मा | ...... | कर्मो | ...... | " | २० |
| व्यग्णु | ...... | द्व्यणु | ...... | " | २३ |
| णक | ...... | णुक | ...... | " | " |
| ण | ...... | णु | ...... | " | १० |
| भ्युप | ...... | भ्युप | ...... | १७ | ३१ |
| यक्त | ...... | युक्त | ...... | १८ | ३१ |
| कर्तं | ...... | कर्त्तुं | ...... | १९ | ३० |
| यक्त | ...... | युक्त | ...... | " | " |
| माण | ...... | माणु | ...... | " | २२ |
| तन्त | ...... | तन्तु | ...... | २२ | ३१ |
| ताद्यु | ...... | तद्युं | ...... | २३ | १६ |
| मभ्य | ...... | मभ्यु | ...... | " | ३१ |
| मल | ...... | मूल | ...... | " | ३२ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| तन्यु | तस्म्यू | २४ | ३ |
| नन | ननु | " | २० |
| प्रपोजना | प्रयोजना | ३० | २१ |
| व्याप्नु व | व्याप्नुवन्तीति | ३२ | ३० |
| भिति | मिति | ३३ | २१ |
| स्पापि | स्यापि | ३३ | ५२ |
| पश्यवान | पश्यन्वाम | " | २० |
| चरा चरा | चराचर | ३५ | ३ |
| पाप्नाश | पापनाश | " | ८ |
| सार्वज्ञ्पा | सार्वज्ञ्या | " | १७ |
| कर्तृत्व | कर्तृत्व | ३६ | २ |
| उपमिते | उपासीते | " | ८ |
| शार्स्त्रेण | शास्त्रेण | " | १२ |
| प्रसंग्त | प्रसंगात् | " | २८ |
| निपेक्षत्व | निरपेक्षत्व | ३७ | ४ |
| भानत्वत् | भानत्वात् | " | ७ |
| पर्ण्या | पुण्या | " | १८ |
| श्वरत्वं | श्वरत्व | " | २५ |
| स्स्वत्तन्त्रो | स्स्वतन्त्रो | " | २९ |
| अण | अणु | ३८ | ७ |
| पातित्वत् | पातित्वात् | " | २० |
| ग्तत्मगात्मा | प्रत्यगात्मा | " | ३९ |
| स्यर्शादीनां | स्पर्शादीनां | ३९ | ११ |
| प्रत्यागा | प्रत्यगा | " | १४ |
| शुद्धब्रह्मणि | शुद्धे ब्रह्मणि | ४० | ८ |
| पतेश्चा | पत्तेश्च | " | १५ |
| शुद्धत्व | शुद्धत्वं | " | २७ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| भ्रन्ति ...... | भ्रान्ति ...... | ४१ | २३ |
| वच्छेकदस्य ...... | वच्छेदकस्य ...... | ४२ | २० |
| द्विद्वि ...... | द्विद्वि ...... | ४४ | १५ |
| ग्रक्त ...... | युक्त ...... | ४५ | २६ |
| अन्दिकर्त्ता ...... | आदिकर्त्ता ...... | ४७ | २ |
| र:स्यैव ...... | रस्यैव ...... | ,, | २२ |
| याम्ति ...... | यान्ति ...... | ४८ | १५ |
| स्वथ ...... | स्वस्व ...... | ,, | १६ |
| त्मका ...... | त्मिका ...... | ४६ | ३ |
| जच्छया ...... | जेच्छया ...... | ४६ | ६ |
| शोका ...... | शोको ...... | ,, | १८ |
| च्छति ...... | च्छृति ...... | ,, | ७ |
| श्रातव्य ...... | श्रोतव्य ...... | ५० | १३ |
| नशे ...... | नुशे ...... | ,, | २८ |
| वह्य ...... | वाह्य ...... | ५१ | २४ |
| थापा ...... | थापो ...... | ५२ | १ |
| साव ...... | सार्व ...... | ५२ | [illegible] |
| भावा ...... | भावो ...... | ,, | [illegible]६ |
| भ्र ...... | शुभ्र ...... | ५४ | १ |
| गतम ...... | गतं ...... | ५५ | ७ |
| द्वता ...... | द्वैता ...... | ५६ | ११ |
| एषतेः ...... | एषते ...... | ,, | ,, |
| दाष ...... | दोष ...... | ,, | ,, |
| सव ...... | सर्व ...... | ,, | [illegible]२ |
| ताथ ...... | तार्थ ...... | ५७ | ५ |
| वाच्पस्येव ...... | वाच्यस्यैव ...... | ५८ | १० |
| [illegible] ...... | गङ्गे ...... | ,, | १२ |
| दाया ...... | सदाय ...... | ,, | २६ |
| तस्थ ...... | तास्थ ...... | ५६ | १५ |

| अशुद्ध | | शुद्ध | | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|
| पत्तं | …… | पेत्तं | …… | ६१ | २२३ |
| तद्वृति | …… | तद्वृत्ति | …… | ६४ | १७ |
| प्रमान | …… | प्रमाणं | …… | ,, | ,, |
| संपा | …… | संयो | …… | ,, | ५ |
| द् | …… | दुग | …… | ६६ | ८ |
| शंकया | …… | शंकाया. | …… | ६६ | २६ |
| ब्रह्माण | …… | ब्रह्मणि | …… | ७१ | १५ |
| भय | …… | भयं | …… | ,, | ३० |
| पुव | …… | पूर्व | …… | ,, | ,, |
| तद्धदस्य | …… | तद्भेदस्य | …… | ७६ | १० |
| दाष्टान्तिक | …… | दार्ष्टांतिक | …… | ७७ | १६ |
| दर्शनात् | …… | दर्शनात् | …… | ,, | १९ |
| मर्हती | …… | मर्हती | …… | ,, | २५ |
| उभपथा | …… | उभयथा | …… | ७७ | २० |
| मन्वन्व | …… | मन्वन्ध | …… | ७८ | १ |
| विश्वप्रति | …… | विश्वंप्रति | …… | ,, | ४ |
| कत | …… | कृते | …… | ,, | ११ |
| च्छुद्रस्य | …… | च्छुद्रस्य | …… | ८३ | २९ |
| गमस्य | …… | गमस्या | …… | ८४ | ४ |
| पत्त | …… | पत्तो | …… | ,, | ६ |
| ब्रह्मणा | …… | ब्रह्मणो | …… | ,, | ७ |
| णोक्त | …… | णोक्तो | …… | ,, | २१ |
| प्रश्ना | …… | प्रश्नो | …… | ९० | ७ |
| कर्तव्यं | …… | कर्त्तव्यं | …… | ,, | ८ |
| षगात् प्रद्युम्न | …… | र्षणप्रद्युम्न | …… | ९२ | ५ |
| पदना | …… | पादना | …… | ,, | २० |
| क्त | …… | उक्त | …… | ,, | २८ |
| रस्य | …… | रस्या | …… | ,, | ३० |
| शर्व | …… | सर्व | …… | ९५ | २४ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| अत्रेद् | अत्रेदं | ९६ | २७ |
| कारक | प्रकारक | ९८ | ४ |
| यत्वंन | यत्वेन | ” | २९ |
| लांवां | लोके | १०२ | २५ |
| विवे | विवेकः | १०३ | ६ |
| प्रत्ति | प्रवृत्ति | ” | १२ |
| दश | दर्श | १०५ | ८ |
| व्यापार | व्याहार | ” | १६ |
| पर्ण | पर्णं | ” | ” |
| एवञ्च | एवञ्च | ” | १८ |
| स्वर्ग | स्वर्गं | १६ | १ |
| दितिः | दिति | ” | ” |
| प्रकाशंक्षा | प्रकाशकाँक्षा | ” | ८ |
| उद्यन | उद्यमन | ” | १६ |
| करण | कारण | ” | २१ |
| याठातत् | पाठात् | १०६ | २६ |
| रोत्तस्य | रोत्तरस्य | १०७ | ६ |
| कयानाँ | क्यानां | १०८ | १३ |
| प्रहया | प्रहणा | १०९ | ५ |
| क्रमो ऽध्य | क्रमो ऽध्य | ” | १३ |
| मावाच्च | भावाच्च | ११० | २१ |
| सङ्ख्यति | सङ्ख्येति | १११ | १ |
| त्तिणकी | क्षणिकी | १११ | १६ |
| ” | ” | ” | १८ |
| एषै | एवैषा | ” | १९ |

| अशुद्ध | शुद्ध | पंक्ति | पृष्ट |
|---|---|---|---|
| यर्र्पण ...... | यार्पण ...... | ११२ ...... | १२ |
| ताव ...... | तावत् ...... | " ...... | ६ |
| क्रियाथत्वा ...... | क्रियार्थत्वा...... | १२४ ...... | १ |
| कत्तु ...... | कर्त्तु ...... | ११६ ...... | ६ |
| श्रय ...... | श्रूय ...... | " ...... | |
| त्वान् ...... | त्वात ...... | ११७ ...... | ५ |
| वच्चियम् ...... | वाच्यम् ...... | " ...... | २५ |
| य ...... | यः ...... | ११६ ...... | २६ |
| नां ...... | मेको ...... | १२० ...... | १२ |
| करणान ...... | करणेन ...... | १२० ...... | १८ |
| तद्ब्रह्म ...... | तद्ब्रह्म ...... | १२१ ...... | १५ |
| प्रक्रम् ...... | प्रकारम ...... | " ...... | १८ |
| भ्युपयत ...... | भ्युपेयत ...... | १२२ ...... | ६ |
| धिकततया ...... | धिकतया ...... | " ...... | ६ |
| विंचारु चारु...... | विचार चारु... | " ...... | २८ |
| स्मिन्नुप पत्तों ... | स्मिन्नुपपत्तेः... | १२२ ...... | २८ |
| दृष्टत्वं ...... | दृष्टृत्वं ...... | १२३ ...... | ३ |
| दृष्टु रूपाया ...... | दृष्टू रूपाया | " ...... | ४ |
| त्रह्मणो ...... | ब्रह्मणो ...... | " ...... | १० |
| ब्रह्मणो ...... | ब्रह्मणो...... | " ...... | १७ |
| बुद्ध्युपाधि ...... | बुद्ध्यूपाधि ... | " ...... | १६ |
| नपयत्ते: ...... | नुपपत्तेः ...... | " ...... | २१ |
| परुषा ...... | परुषो ...... | " ...... | ३० |

| अशुद्ध | | शुद्ध | पृष्ठ | | पंक्ति |
|---|---|---|---|---|---|
| तद्वज्ञान | ...... | तद्विज्ञान ... | १२५ | ...... | १५ |
| द्य | ...... | तदा ...... | ” | ...... | ११ |
| भावाकित्व | ...... | भाविकत्व ... | ” | ...... | १६ |
| भित्या | ...... | मित्या ...... | १३८ | ...... | २७ |
| नर्थोऽय | ...... | नार्थोऽय ... | ” | ...... | २६ |
| णाधिकरण | ...... | राधिकरण | १४० | ...... | १ |
| शब्द्धावार्थौ | ...... | शब्दाद्धावार्थौ | ” | ...... | २० |
| पम्परया | ...... | परम्परया | १४१ | ...... | २ |
| यद्ब्राह्मण | ...... | यद्ब्राह्मण | ” | ...... | १० |
| अस्थूव | ...... | अस्थूल | ” | ...... | ” |
| यदूर्ध्व | ...... | यदूर्ध्वं | ” | ...... | १३ |
| कस्मिस्तदो | ...... | कस्मिँस्तदो | ” | ...... | १५ |
| प्रोत्तश्च | ...... | प्रोतश्च | ” | ...... | १६ |
| सिद्धि | ...... | सिद्ध | १४२ | ...... | २० |
| निष्यद्यते | ...... | निष्पद्यते | १४४ | ...... | ३१ |

| | | | | | |
|---|---|---|---|---|---|
| १४५ | ११ | ...... | सम | ...... | सना |
| १४५ | २५ | ...... | यज्ञ | ...... | यज्ञ |
| १४६ | १२ | ...... | मपि | ...... | अपि |
| १४६ | १६ | ...... | नैमित्तिक | ...... | नैमित्तिक |
| १४८ | ८ | ...... | शच | ...... | शुच |
| १५० | १८ | ...... | दस्थ | ...... | पादस्य |
| क | ३ | ...... | चतुरार्णा | ...... | चतुरर्णा |
| घ | २३ | ...... | पा | ...... | पादम |
| ङ | २२ | ...... | मीमते | ...... | मिमते |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| छ | ...... | छ्ठ्यम् ...... | छ्द्रव्यम् |
| झ | १ ...... | पृविवी ...... | पृथिवी |
| " | ४ ...... | पणि ...... | माणि |
| " | २३ ...... | उत्मद्यते ...... | उत्पद्यते |
| ञ | २५ ...... | लग्य ...... | लब्ध्य |
| " | २६ ...... | लध्य ...... | लब्ध्य |
| १ | २८ ...... | वरणभाव ...... | वर्णाभाव |
| ड | ६ ...... | ज्ञान ...... | ज्ञानं |
| " | १६ ...... | द्वाग ...... | द्वा |
| " | १७ ...... | सर्व ...... | सार्व |
| ढ | १ ...... | चावश्य ...... | चांवश्यं |
| " | १० ...... | र्थोलध्य ...... | र्थोपलब्ध्य |
| " | ६ ...... | पेक्षयां ...... | पेक्षायां |
| " | २३ ...... | मन्यतं ...... | मन्यते |
| " | २५ ...... | मारा ...... | माण |
| ण | ४ ...... | च्छुन्य ...... | च्छून्य |
| " | १४ ...... | द्वधा ...... | द्वैधा |
| त | १७ ...... | ज्ञना ...... | ज्ञाना |
| " | २३ ...... | सर्वसुव्यास्थेतं ...... | सर्वंसुव्यवस्थितं |
| " | २७ ...... | त्रणक ...... | त्रणुक |
| " | २७ ...... | धणु ...... | द्वयणु |
| " | १८ ...... | पररमाणवः ...... | परमाणवः |
| " | २६ ...... | चतुविंधाः ...... | चतुर्बिधाः |
| छ | २७ ...... | मृष्ट्रव्यम ...... | षट्द्रव्य |